चन्द्रप्रभसूरिप्रणीतं

# प्रभावकचरितम् ।

महाकविगुणदोषविवेचनात्मकम् ।




पण्डित हिरानन्द एम्. शर्मशास्त्रिणा

एम्. ए. एम्. ओ. एल्. इत्युपपदधारिणा


संस्कृतम्

प्रथमो भागः


मुम्बय्यां

तुकाराम जावजीकृते तेषामेव निर्णयसागराख्यमुद्रालये

बा. रा. घाणेकर इत्यनेन मुद्रितम् ।

शाके १८३१; सन १९०९.

मूल्यंकः ।

# PREFACE.

THE present edition of the Prabhâvakacharita is based on four manuscripts. Two of them were kindly borrowed for me by my friend Lala Jaswant Rai Jaini of Lahore, one from Pâtan and the other from Hoshiarpur (Punjab) Bhandâra (collection). Third copy I got from a Jaina library at Jandiala (Punjab) and fourth from the Deccan College Library Poona. In the foot notes, where different readings are given, they have respectively been designated by P., H., J and D, the initial letters of the names of these towns. Unfortunately none of these manuscripts is correct, consequently this edition is far from being satisfactory. The Patan manuscript proved best and has been mostly followed. If in future I succeeded in securing more accurate copies I shall not fail to present to the literary public a revised edition of this highly interesting text or at least publish an addenda corrigenda and give corrections of the mistakes which, conjectural emendations not being resorted to, I am afraid, may be numerous.

Here I must record sincere gratefulness to the said Lâla Jaswant Rai but for whose help and initiative this edition would perhaps have never appeared.

LAHORE,<br>25-7-09.

HIRANANDA.

# प्रभावकचरितविषयक्रमः ।



# प्रभावकचरितम् ।

ॐ नमो भगवते श्रीपार्श्वनाथाय ।

श्रीवज्रप्रबंधः ।

अर्हत्तत्त्वं स्तुमो विश्वशासनोन्नतिकारकम् ।
यत्प्रसादेन पूर्वेऽपि महोदयपदं ययुः ॥ १ ॥
श्रीसर्वमंगलोल्लासी वृषकेतुरनङ्गभित् ।
शंभुर्गणपतिस्तीर्थनाथ आद्यः पुनातु वः ॥ २ ॥
हरिणाङ्को नभोगश्रीर्जनतापापहारकः ।
महाबलः प्रभुः शान्तिः पातु चित्रं ध्रुवं स्थितिः ॥ ३ ॥
दशावतारो नः पायात्कमनीयाञ्जनद्युतिः ।
किं श्रीपतिः प्रदीपः किं न तु श्रीपार्श्वतीर्थकृत् ॥ ४ ॥
यद्गोव्रजश्चरन् भव्यगोचरे पात्रपूरकः ।
श्रेयःपीयूषतः पातु वर्धमानः स गोपतिः ॥ ५ ॥
सा पूर्वांगमितामोदा सुमनोच्चर्या सरस्वती ।
बहुपादोदया न्यस्ता येन तं गौतमं स्तुवे ॥ ६ ॥
संपत्तिः सत्पदार्थानां यत्प्रसादात्प्रजायते ।
जीवसंजीवनीं नौमि भारतीं च श्रियं च ताम् ॥ ७ ॥
यद्दत्तैकार्थरूपस्य वृद्धिः कोटिगुणा भवेत् ।
श्रीचन्द्रप्रभसूरीणां तेषां स्यामनृणः कथम् ॥ ८ ॥
सज्जनः स कथं विष्णुर्योऽलीकादरतत्परः ।
परावर्णे गुणीकृत्य दोषोद्योगं दधाति नः ॥ ९ ॥
असन्तः किमुत स्तुत्याः स्तुत्यां ये नादृताः परम् ।
दीपयन्ति कृताभ्यासाः क्षणवीक्षणतः क्षणे ॥ १० ॥
कलौ युगप्रधानः श्रीहेमचन्द्रप्रभुः पुरा ।
श्रीशलाकानृणां वृत्तं प्रास्तावीन्नृपबोधकृत् ॥ ११ ॥
श्रुतकेवलिनां षण्णां दशपूर्वभृतामपि ।
श्रीवज्रस्वामिवृत्तं च चरितानि व्यधत्त सः ॥ १२ ॥

---

१ P [illegible] ओं नमः श्रीजिनाय ॥ [illegible]

ख्याततन्नाममन्त्रस्य प्रसादात्प्राप्तवासनः ।
आरोक्ष्यन्निव हेमाद्रिं पादाभ्यां विश्वहास्यभूः ॥ १३ ॥
श्रीवज्रानुप्रवृत्तानां शासनोन्नतिकारिणाम् ।
प्रभावकमुनीन्द्राणां वृत्तानि कियतामपि ॥ १४ ॥
बहुश्रुतमुनीशेभ्यः प्राग्ग्रन्थेभ्यश्च कानिचित् ।
उपश्रुत्येतिवृत्तानि वर्णयिष्ये कियन्त्यपि ॥ १५ ॥ विशेषकम् ।
श्रीदेवानन्दशैक्ष[1]श्रीकनकप्रभशिष्यराट् ।
श्रीप्रद्युम्नप्रभुर्जीयाद्ग्रन्थस्यास्यापि शुद्धिकृत् ॥ १६ ॥
श्रीवज्रो रक्षितः श्रीमानार्यनन्दिल इत्यपि ।
सूरिःश्रीकालिकाचार्यपादलिप्तप्रभुस्तथा ॥ १७ ॥
रुद्रदेवः प्रभुः सूरिः श्रमणसिंह इत्यपि ।
अथार्यखपटः सूरिर्महेन्द्रश्च प्रभावकः ॥ १८ ॥
सूरिर्विजयसिंहश्च जीवदेवमुनीश्वरः ।
वृद्धवादी सिद्धसेनो हरिभद्रप्रभुस्तथा ॥ १९ ॥
मल्लवादिप्रभुर्बप्पभट्टिः कोविदवासवः ।
श्रीमानतुंगसूरिःश्रीमानदेवो मुनीश्वरः ॥ २० ॥
सूरिश्च सिद्धव्याख्याता श्रीमान् वीरगणिप्रभुः ।
वादिवेतालविरुदः शान्तिसूरिः प्रभुस्तथा ॥ २१ ॥
श्रीमान्महेन्द्रसूरिः श्रीधनपालेन संगतः ।
सूराचार्यप्रभुः श्रीमान्कृतभोजसभाजयः ॥ २२ ॥
श्रीमानभयदेवश्च वीराचार्यः कवीश्वरः ।
देवसूरिर्गुरुः श्रीमान्हेमचन्द्रप्रभुस्तथा ॥ २३ ॥ सप्तभिः कुलकम् ।
मादृशोऽल्पमतिः कीदृगेतेषां गुणकीर्तने ।
कलध्वनिं सितास्वादे मूकोऽपि कुरुतेऽथवा ॥ २४ ॥
एतच्चरितशाखिभ्यः संमील्य सुमनश्चयम् ।
तद्वृत्तमालामुद्दामां गुम्फिष्यामि गुरोर्गिरा ॥ २५ ॥
निधिः सौभाग्यभाग्यस्य नाम यस्यादिमङ्गलम् ।
वज्रस्वामिविभोः[2] पूर्वं वृत्तं तस्य मयोच्यते ॥ २६ ॥
अस्त्यवन्तीतिदेशः क्ष्मासरसीसरसीरुहम् ।
यद्गुणग्रामरङ्गेण बद्धसख्ये रमागिरौ ॥ २७ ॥
तत्र तुम्बवनो नाम निवेशः क्लेशवर्जितः ।
अभूवन्यस्य वासाय नाकिनोऽप्यभिलाषुकाः ॥ २८ ॥
तत्र श्रेष्ठी धनो नाम कामधुक्कल्पपादपौ ।
अमानमानयद्दानजितौ त्रिदिवमाश्रितौ ॥ २९ ॥

---

१ P reads शिष्य. २ P reads प्रभो..

तस्यार्थिजनदौःस्थित्यमुस्तोच्छेदमहाकिरिः ।
पुत्रो धनगिरिर्नाम कामप्रतिमविग्रहः ॥ ३० ॥
आबाल्यादप्यबाल्याभविवेकच्छेकमानसः ।
नाभिलाषी परिणये प्रणयेन महात्मनाम् ॥ ३१ ॥
धनपालाख्यया तत्र व्यवहारी महाधनः ।
यल्लक्ष्मीवीक्षणाल्लक्ष्मीपतिराविक्षदम्बुधिम् ॥ ३२ ॥
तस्यार्यसमितः पुत्रः सुनन्दा च सुताभवत् ।
तयोः समागमस्तत्र लक्ष्मीकौस्तुभयोरिव ॥ ३३ ॥
सुनन्दां यौवनोद्भेदमेदुराङ्गीं विलोकयन् ।
वरं धनगिरिं दध्यौ तत्पिता गुणगौरवात् ॥ ३४ ॥
तत्सुतः समितो गेहवासेऽपि यतिवद्वसन् ।
यायावरेषु भोगेषु वैराग्यं परमं दधौ ॥ ३५ ॥
श्रुतश्रीखण्डमलयगिरेः सिंहगिरेः प्रभोः ।
स दीक्षामग्रहीत्पार्श्वे पार्श्वे निर्वृतिवेश्मनः ॥ ३६ ॥
अन्यदा धनपालश्च प्रोचे धनगिरिं सुधीः ।
सागरस्येव रेवास्तु सुनन्दा ते परिग्रहे ॥ ३७ ॥
स प्राह ज्ञाततत्त्वार्थो भवतां भवचारके ।
सुहृदां सहृदां किं स्याद्बन्धनं कर्तुमौचिती ॥ ३८ ॥
प्रोवाच धनपालोऽपि पुरा श्रीऋषभप्रभुः ।
तृणवद्भोगकर्मेदं भुक्त्वा मुक्तो भवार्णवात् ॥ ३९ ॥
न चानुचितमेतत्तन्मानिन्मानय मद्गिरम् ।
मानसेऽतिविरक्तेऽपि मेने तत्प्रश्रयाच्च सः ॥ ४० ॥
उदुवाह शुभे लग्ने स (तु) तां सततोत्सवैः ।
अनासक्तः स विषयान्बुभुजे मर्त्यदुर्लभान् ॥ ४१ ॥
स वै श्रमणजातीयसमानिकसुरोऽन्यदा ।
अष्टापदाद्रिशृङ्गे यः प्रत्यबोधीन्द्रभूतिना ॥ ४२ ॥
सुनन्दाकुक्षिकासारेऽवतीर्णः स्वायुषः क्षये ।
प्राक्प्रेम्णा दत्तसुस्वप्नैरस्वप्नै रहितो दृढम् ॥ ४३ ॥ युग्मम् ।
ततो धनगिरिर्धन्यंमन्योऽवसरलाभतः ।
अपृच्छत व्रते पत्नीं तुष्टां पुत्रावलम्बनात् ॥ ४४ ॥
जरद्रज्जुमिव प्रेमबन्धं छित्त्वा स सत्वरम् ।
तत्रायातस्य तत्पुण्यैः पार्श्वे सिंहगिरेर्ययौ ॥ ४५ ॥
व्रतं तत्रादधे लोचपूर्वं सामयिकोत्तरम् ।
दुस्तरं स तपस्तप्यमानोऽप्रीयत चानिशम् ॥ ४६ ॥

---

१ P सामानिक.

पूर्णे कालेऽन्यदासूत सुनन्दा सुतमुत्तमम् ।
तेजोभी रत्नदीपानामपि सापत्न्यदुःखदम् ॥ ४७ ॥
निजैः प्रवर्तितस्तत्र पुत्रजन्मोत्सवो मुदा ।
यदीक्षणादनिमिषा दधुः स्वं नाम सार्थकम् ॥ ४८ ॥
अजल्पत्तत्र कोऽप्यस्य प्राव्राजिष्यन्न चेत्पिता ।
महेऽधिकतरो हर्षस्ततोऽत्र समपत्स्यत ॥ ४९ ॥
प्राच्यदेवभवज्ञानांशेन संज्ञीव नन्दनः ।
दध्यावहो महापुण्यो मत्पिता संयमग्रहात् ॥ ५० ॥
ममापि भवनिस्तारः संभवी संयमाद्यदि ।
अत्रोपायं व्यमृक्षच्च रोदनं शैशवोचितम् ॥ ५१ ॥
अनेकोल्लापनस्नानदेहसंवाहनादिभिः ।
गजाश्वकाविवीक्षाभिरपरैरपि कौतुकैः ॥ ५२ ॥
भृशं प्रलोभ्यमानोऽपि न तस्थौ स क्षणं सुखम् ।
कथं वदति यो जाग्रच्छेते कैतवनिद्रया ॥ ५३ ॥ युग्मम् ।
दध्यौ मातापि सोमश्रीर्वत्स आप्यायको दृशाम् ।
यदुच्चैरवक्लेशप्रदस्तद्धि दुनोति माम् ॥ ५४ ॥
एवं जग्मुश्च षण्मासाः षड्वर्षशतसंनिभाः ।
तन्निवेशनमागाच्च तदा सिंहगिरिर्गुरुः ॥ ५५ ॥
तत्र गोचरचर्यायां विशन्धनगिरिर्मुनिः ।
गुरुणा दिदिशे पक्षिशब्दज्ञाननिमित्ततः ॥ ५६ ॥
अद्य यद्द्रव्यमाप्नोषि सचित्ताचित्तमिश्रकम् ।
ग्राह्यमेव त्वया सर्वं तद्विचारं विना मुने ॥ ५७ ॥
तथेति प्रतिपेदानस्तदार्यसमितान्वितः ।
सुनन्दासदनं पूर्वमेवागच्छदतुच्छधीः ॥ ५८ ॥
तद्धर्मलाभश्रवणादुपायातः सखीजनः ।
सुनन्दां प्राह देहि त्वं पुत्रं धनगिरेरिति ॥ ५९ ॥
सापि निर्वेदिता बाढं पुत्रं संगृह्य वक्षसा ।
नत्वा जगाद पुत्रेण रुदता खेदितास्मि ते ॥ ६० ॥
गृहाणैनं ततः स्वस्य पार्श्वे स्थापय चेत्सुखी ।
भवत्यसौ प्रमोदो मे भवत्वेतावतापि यत् ॥ ६१ ॥
स्फुटं धनगिरिः प्राह ग्रहीष्ये नन्दनं निजम् ।
परं स्त्रियो वचः पंगुवन्न याति पदात्पदम् ॥ ६२ ॥
क्रियन्तां साक्षिणस्तत्र विवादहतिहेतवे ।
अद्यप्रभृति पुत्रार्थे न जल्प्यं किमपि त्वया ॥ ६३ ॥
अतिखिन्ना च साचादीदत्रार्यसमितो मुनिः ।
साक्षी सख्यश्च साक्षिण्यो भाषे नातः किमप्यहम् ॥ ६४ ॥

अजातवृजिनो बन्धपात्रबन्धे नियोज्य तम् ।
विरतं रोदनात्तुष्टिपुष्टं संदर्श्य तत्पुरः ॥ ६५ ॥
बहिःकृतान्तरारातिर्बहिः कृत्वा गृहाङ्गणात् ।
भज्यमानभुजस्तस्य मारादागाद्गुरोः पुरः ॥ ६६ ॥ युग्मम् ।
आयान्तं भुग्नमात्रं तं वीक्ष्य संमुखमाययुः ।
तद्बाहोः पात्रबन्धं च गुरवः स्वकरे व्यधुः ॥ ६७ ॥
वज्रोपमं किमानीतं त्वयेदं मम हस्तयोः ।
भारकृन्मुमुचे हस्तान्मयासौ निजकासने ॥ ६८ ॥
इत्युक्त्वा च समैक्षन्त गुरवस्तं शशिप्रभम् ।
साध्वास्यचन्द्रकान्तानां सुधास्रावनिबन्धनम् ॥ ६९ ॥
गुरुश्च वज्र इत्याख्यां तस्य कृत्वा समा(म)र्पयत् ।
साध्वीपार्श्वाच्छ्राविकाणां व्यहार्षीदन्यतस्ततः ॥ ७० ॥
गुरुभक्त्याथ तद्भाग्यसौभाग्याच्च वशीकृताः ।
धर्मिनार्यः क्षीरपानमुख्यशुश्रूषणैः शिशुम् ॥ ७१ ॥
प्रावर्धयन्निजापत्याधिकवात्सल्यकेलितः ।
साध्वीनामाश्रये रात्रौ वस्त्रदोलाशयं मुदा ॥ ७२ ॥ युग्मम् ।
तत्र स्थितो वितन्द्रः सन्नङ्गान्येकादशान्यसौ ।
साध्वीभिर्गुण्यमानानि निशम्याधिजगाम सः ॥ ७३ ॥
ततो विशेषिताकारं तदीयपरिचर्यया ।
तत्रायाता सुनन्दापि तं निरीक्ष्य दधौ स्पृहाम् ॥ ७४ ॥
प्रार्थयच्चाथ ताः साध्वी सुतं मे ददतेति सा ।
ऊचुस्ता वस्त्रपात्राभा गुरुस्थापनिका ह्यसौ ॥ ७५ ॥
कथं शक्योऽर्पितुं बालस्तस्मादत्रस्थ एव सन् ।
लाल्यः परं गृहे नेयो न गुर्वनुमतिं विना ॥ ७६ ॥
अन्यदा गुरवः प्रापुस्तत्पुरं तज्जनन्यपि ।
नन्दनं प्रार्थयामास गृहिवत्पत्युरन्तिके ॥ ७७ ॥
स च प्राह नृपादेश इव सन्मर्त्यवागिव ।
कन्याप्रदानमिव च महतामेकशो वचः ॥ ७८ ॥
गृहीतमुक्तं जायेत नो बालपरिधानवत् ।
एवं विमृश्य धर्मज्ञे नो वा सन्त्यत्र साक्षिणः ॥ ७९ ॥
निर्विचाराग्रहा साप्यवलेपं न त्यजेद्यदा ।
संघप्रधानपुरुषैः पर्यच्छेदि सुभाषितैः ॥ ८० ॥
तत्राप्यमानयन्ती सा गता राज्ञः पुरस्तदा ।
यतयश्च समाहूताः संघेन सह भूभृता ॥ ८१ ॥

---

१ P अजातव्रजिनो यथः. २ P reads गत्वा. ३ H and J read तः.

धर्माधिकरणे युक्तैः पृष्टौ पक्षावुभावपि ।
अङ्गीकारं तयोः श्रुत्वा विचारे मुमुहुश्च ते ॥ ८२ ॥
एकत्र दुःप्रतीकारा माता पुत्रं प्रयाचति ।
अन्यत्र संघः श्रीतीर्थनाथैरपि निषेवितः ॥ ८३ ॥
विचचार स्वयं राजा स्वरुच्या नन्दनो ह्ययम् ।
यत्पार्श्वे याति तस्यास्तु किं परैर्बहुभाषितैः ॥ ८४ ॥
ततो माता प्रथमतोऽनुज्ञाता तत्र भूभृता ।
क्रीडनैर्भक्ष्यभोज्यैश्च मधुरैः सा न्यमंत्रयत् ॥ ८५ ॥
सुते तथास्थिते राज्ञानुज्ञातो जनको मुनिः ।
रजोहरणमुद्यस्य जगादानपवादगीः ॥ ८६ ॥
वत्स त्वं यदि तत्त्वज्ञः संयमाध्यवसायवान् ।
गृहाण तदिदं कर्म रजोहरणहेतवे ॥ ८७ ॥ युग्मम् ।
उत्प्लुत्य मृगवत्सोऽथ तदीयोत्सङ्गमागतः ।
जग्राह चमराभं तच्चारित्रधरणीभृतः ॥ ८८ ॥
ततो जयजयारावो मङ्गलध्वनिपूर्वकम् ।
समस्ततूर्यनादोर्जि संघः समजनि स्फुटः ॥ ८९ ॥
संघस्यार्चां तदाकार्षीद्राजा तद्गुरवस्ततः ।
संस्थानं मुदिता जग्मुर्धर्मिव्रातपुरस्कृताः ॥ ९० ॥
दध्यौ सुनन्दा सोदर्य आर्यपुत्रः सुतोऽपि च ।
मदीया यतयोऽभूवंस्तन्ममापीति सांप्रतम् ॥ ९१ ॥
त्रिवार्षिकोऽपि न स्तन्यं पपौ वज्रो मतेच्छया ।
दीक्षितो गुरुभिस्तेन तत्र मुक्तः समातृकः ॥ ९२ ॥
अथाष्टवार्षिकं वज्रं कृत्वा साध्वीप्रतिश्रयात् ।
श्रीसिंहगिरयोऽन्यत्र विजह्रुः सपरिच्छदाः ॥ ९३ ॥
तदा चाप्रतिबन्धेन तेषां विहरतां सताम् ।
पर्वतासन्नमेदिन्यामीर्यासमितिपूर्वकम् ॥ ९४ ॥
वज्रप्राग्भवमित्रैश्च तं दृष्ट्वा जृम्भकामरैः ।
वैक्रियाविष्कृता मेघमाला तस्य परीक्षणे ॥ ९५ ॥
कुरंकरस्वरैः केकिकेकारावेण मिश्रितैः ।
निरुत्तन्दुलितो नादः श्रुतिस्वाद्यसुधाभवत् ॥ ९६ ॥
नीरैर्नदद्भिरुद्दामसंभवद्भिर्निरंतरम् ।
ग्राविना भूस्तदद्वैतघटितेव तदाभवत् ॥ ९७ ॥
विपुले तन्निवासस्ते गिरेरेकत्र कन्दरे ।
गुल्मस्तोयजीवानां विराधनमनिच्छवः ॥ ९८ ॥

एवं घनाघने घोरे कथंचिद्विरते सति ।
उपोषिता अपि श्रेयस्तृप्तास्ते मुनयोऽवसन् ॥ ९९ ॥
जगज्जीवनमोषेण तदा सूरोऽपि शङ्कितः ।
रसावस्थापनाद्धिश्वे बभूव प्रकटोदयः ॥ १०० ॥
आनीय वारिधेर्वारि जगतीपरिपूरणात् ।
अवसन्ने च पर्जन्ये श्रमात्स्वप्न इवाध्वनौ ॥ १०१ ॥
ततस्तच्चारुवृत्तेन लेखैर्हल्लेखशालिभिः ।
वाणिज्यकारकव्याजात्पारणाय न्यमन्त्रि सः ॥ १०२ ॥ युग्मम् ।
एषणात्रितये चोपयुक्तो भुक्तावनादृतः ।
तत्र वज्रो ययौ प्राप्य गुरोरनुमतिं ततः ॥ १०३ ॥
द्रव्यक्षेत्रकालभावैरुपयोगं ददौ च सः ।
द्रव्यं कूष्माण्डपाकादि क्षेत्रं देशश्च मालवः ॥ १०४ ॥
कालो ग्रीष्मस्तथा भावे विचार्ये निमिषा अमी ।
अस्पृष्टभूक्रमन्यासा अम्लानकुसुमस्रजः ॥ १०५ ॥
चारित्रिणां ततो देवपिण्डो नः कल्प्यते नहि ।
निषिद्धा उपयोगेन तस्य हर्षं परं ययुः ॥१०६॥ त्रिभिर्विशेषकम ।
तत्र च प्रकटीभूय प्राणमंस्तं मुनिं तदा ।
वज्रं सद्वृत्ततेजोभिर्भास्वरं भास्वदंशुवत् ॥ १०७ ॥
अन्यत्र विहरंतश्चान्यदा ग्रीष्मर्तुमध्यतः ।
प्राग्वदेव सुरास्तेऽमुं घृतपूरैर्न्यमन्त्रयन् ॥ १०८ ॥
वज्रे तत्रापि निर्व्यूढे विद्यां ते व्योमगामिनीम् ।
ददुर्न दुर्लभं किंचित्सद्भाग्यानां हि तादृशाम् ॥ १०९ ॥
बाह्यभूमौ प्रयातेषु पूज्येष्वथ परेद्यवि ।
सदेषणोपयुक्तेषु गीतार्थेषु च गोचरम् ॥ ११० ॥
अवकाशं च वाल्यस्य ददत्स्वापलतस्तदा ।
सर्वेषामुपधीर्नामग्राहं भूमौ निवेश्य च ॥ १११ ॥
वाचनां प्रददौ वज्रः श्रुतस्कन्धव्रजस्य सः ।
प्रत्येकं गुरुवक्त्रेण कथितस्य महोद्यमात् ॥११२॥ त्रिभिर्विशेषकम ।
श्रीमान्सिंहगिरिश्चात्रान्तरे वसतिसन्निधौ ।
आययौ गर्जितोर्जितं शब्दं तस्याशृणोच्च सः ॥ ११३ ॥
दध्यौ किं यतयः प्राप्ताः स्वाध्यायैः पालयन्ति माम् ।

---

१ J and H उपोपितान्यपि. २ J and H—जीवनपोषेण ३ J and H read भूरि. ४ H and J सुप्त इवध्वनौ ५ J and H दाभावविचार्ये. ६ H and J वः changed into दः fo. न:. ७ H and J—चाल. ८ H & J—मुपधीना०. ९ P तोर्जि०.

निश्चित्यैकस्य वज्रस्य शब्दं ते तोषतो बभुः ॥ ११४ ॥
पुनर्दध्यावयं गच्छो धन्यो यत्रेदृशः शिशुः ।
क्षोभोऽस्य माभूदित्युच्चैः स्वरं नैषेधिकं व्यधात् ॥ ११५ ॥
वज्रोऽपि तं गुरोर्ध्वानं श्रुत्वा लज्जाभयाकुलः ।
संनिवेश्य यथास्थानं वेष्टिकाः संमुखोऽभ्यगात् ॥ ११६ ॥
प्रतिलेख्य ततः पादौ प्रक्षाल्य प्रासुकांभसा ।
पादोदकं ववन्दे च गुरुणा समुदेक्षितः ॥ ११७ ॥
वैयावृत्यादिषु लघोर्भावज्ञास्य भवत्विति ।
ध्यात्वाहुर्गुरवः शिष्यान्विहारं कुर्महे वयम् ॥ ११८ ॥
ततस्ते प्रोचुरस्माकं कः प्रदास्यति वाचनाम् ।
ते प्राहुर्वज्र एवात्र कृतार्थान्वः करिष्यति ॥ ११९ ॥
तत्ते तथेति प्रत्यैच्छन्निर्विचारं गुरोर्वचः ।
ईदृक्स्वगुरुभक्तेभ्यः शिष्येभ्योऽस्तु नमोनमः ॥ १२० ॥
प्रतिलेख्य निषद्यां च तस्यावज्ञाः प्रचक्रिरे ।
ततोऽसौ वाचनां दातुमारेभे यतिसंहतेः ॥ १२१ ॥
शास्त्राणामितितात्पर्यमनायासेन सोऽभ्यधात् ।
सुखं यथावगच्छन्ति ते मन्दधिषणा अपि ॥ १२२ ॥
दिनैः कतिपयैरागात्सूरिरभ्युत्थितश्च तैः ।
तदुदन्तमपृच्छच्च संभूयोचुश्च ते ततः ॥ १२३ ॥
पूज्यपादप्रसादेन संजज्ञे वाचनासुखम् ।
अस्माकं वाचनाचार्यो वज्र एवास्तु तत्सदा ॥ १२४ ॥
श्रुत्वेति गुरवः प्राहुर्मत्वेदं विहृतं मया ।
अस्य ज्ञापयितुं युष्मान् गुणगौरवमद्भुतम् ॥ १२५ ॥
तपस्याविधिसंशुद्धवाचनापूर्वकं ततः ।
अधीतवान्मुनिर्वज्रो यावद्दृष्टागमागमम् ॥ १२६ ॥
गत्वा दशपुरे वज्रमवन्त्यां प्रैषुरादृताः ।
अध्येतुं श्रुतशेषं श्रीभद्रगुप्तस्य संनिधौ ॥ १२७ ॥
स ययौ तत्र रात्रौ च पूर्वहिर्वासमातनोत् ।
गुरुश्च स्वप्नमाचख्यौ निजशिष्याग्रतो मुदा ॥ १२८ ॥
पात्रं मे पयसा पूर्णमतिथिः कोऽपि पीतवान् ।
दशपूर्व्याः समग्रायाः कोऽप्यध्येता समेष्यति ॥ १२९ ॥
इत्येवं वदतस्तस्य वज्र आगात्पुरस्ततः ।
गुरुश्चाध्यापयामास श्रुतं स्वाधीतमाश्रुतम् ॥ १३० ॥

---

१ P नैषेधिकीं   २ H and J read गत. पादौ   ३ P reads प्राशुकांभसा   ४ J and H read तं   ५ J and H read हि नन
६ J and H यावद्दृष्टागमागमां.

श्रीभद्रगुप्तसूरिश्च तमध्याप्य पुनर्गुरोः ।
प्राहिणोत्संनिधौ तस्यानुज्ञायै समयस्य सः ॥ १३१ ॥
वज्रप्राग्जन्मसुहृदो ज्ञानाद्विज्ञाय ते सुराः ।
तस्याचार्यप्रतिष्ठायां चक्रुरुत्सवमद्भुतम् ॥ १३२ ॥
सर्वानुयोगानुज्ञां[1] च प्रददुर्गुरवः शुभे ।
लग्ने सर्वार्हतां तेजस्तत्त्वं तत्र न्यधुर्मुदा ॥ १३३ ॥
गुरौ प्रायाद्दिवं प्राप्ते वज्रस्वामिप्रभुर्ययौ ।
पुरं पाटलिपुत्राख्यमुद्याने समवासरत् ॥ १३४ ॥
अन्यदा स कुरूपः सन् धर्मं व्याख्यानयद्विभुः[2] ।
गुणानुरूपं नो रूपमिति तत्र जनोऽवदत् ॥ १३५ ॥
अन्येद्युश्चारुरूपेण धर्माख्याने कृते सति ।
पुरक्षोभभयात्सूरिः कुरूपोऽभूज्जनोऽब्रवीत् ॥ १३६ ॥
प्रागेव तद्गुणग्रामगानात्साध्वीभ्य आदृता ।
धनस्य श्रेष्ठिनः कन्या रुक्मिण्यत्रान्वरज्यता(त)[3] ॥ १३७ ॥
बभाषे जनकं स्वीयं सत्यं मेऽङ्गापितं[4] शृणु ।
श्रीमद्वज्राय मां यच्छ शरणं मेऽन्यथानलः ॥ १३८ ॥
तदाग्रहात्ततः कोटिशतसंख्यधनैर्युताम् ।
सुतामादाय निर्ग्रन्थनाथाभ्यर्णं ययौ च सः ॥ १३९ ॥
व्यजिज्ञपच्च नाथं त्वां नाथते मे सुता ह्यसौ ।
रूपयौवनसंपन्ना तदेषा प्रतिगृह्यताम् ॥ १४० ॥
यथेच्छदानभोगाभ्यामधिकं जीविताववधि ।
द्रविणं गृह्यतामेतत्पादौ प्रक्षालयामि ते ॥ १४१ ॥
अथ श्रीवज्र आहस्म सरलस्त्वं वणिग्वरः ।
बन्धुमिच्छसि दूरस्थान्स्वयं बद्धः परानपि ॥ १४२ ॥
रेणुना रत्नराशिं त्वं कल्पवृक्षं तृणेन च ।
गर्त्ता(र्त्त)कोलेन कुम्भीन्द्रं वायसेन सितच्छदम् ॥ १४३ ॥
सार्धं निषादगेहेन क्षारनीरेण चामृतम् ।
कुद्रव्यविषयास्वादात्तपो मे संजिहीर्षसि ॥ १४४ ॥ युग्मम् ।
विषयाः कम्बलोल्लासं दधत्यविकटोदयाः ।
सर्वं धनं महाभोगैरन्यूनं[5] चारकोपमम् ॥ १४५ ॥
एषा मय्यनुरक्ता चेच्छायावदनुगामिनी ।
मया वृतं[6] व्रतं धत्तां ज्ञानदर्शनसंयुतम् ॥ १४६ ॥

---

१ J and H सर्वानुयोगो. २ J and H read व्याख्यायत॰ ३ P reads रुक्मिण्यत्रान्वरज्यतः. ४ J & H read तद्वापितं. ५ J & H read महाभागैः. ६ P reads मयादृतं.-

श्रुत्वेति प्रतिबुद्धा साभिलापगरले हृते ।
गृहीत्वा संयमं संयमिनीपार्श्वमशिश्रयत् ॥ १४७ ॥
महापरिज्ञाध्ययनादाचाराङ्गान्तरस्थितात् ।
श्रीवज्रेणोद्धृता विद्या तदा गगनगामिनी ॥ १४८ ॥
अवृष्टेरन्यदा तत्राभूद्दुर्भिक्षमतिक्षयम् ।
सचराचरजीवानां कुर्वद्वुर्वीतलेऽधिकम् ॥ १४९ ॥
सीदन् संघः प्रभोः पार्श्वमाययौ रक्ष रक्ष नः ।
वदन्निति ततो वज्रप्रभुस्तन्निदधे हृदि ॥ १५० ॥
पटं विस्तार्य तत्रोपवेश्य संघं तदा मुदा ।
विद्ययाकाशगामिन्याचलद्व्योम्ना सुपर्णवत् ॥ १५१ ॥
तत्र शय्यातरोदू(दूं)रं गतस्तृणगवेषणे ।
अन्वागतो वदन्दीनः सोऽपि न्यस्तारिसूरिणा ॥ १५२ ॥
आययौ सुस्थदेशस्थामचिरेण महापुरीम् ।
बौद्धशासनपक्षीयनृपलोकैरधिष्ठिताम् ॥ १५३ ॥
सुखं तिष्ठति संघे च सुभिक्षाद्राजसौस्थ्यतः ।
सर्वपर्वोत्तमं पर्वाययौ पर्युषणाभिधम् ॥ १५४ ॥
राजा च प्रत्यनीकत्वात्कुसुमानि न्यषेधयत् ।
संघो व्यजिज्ञपद्वज्रं जिनार्चाचिन्तयार्दितः ॥ १५५ ॥
उत्पत्य तत आकाशे काशसंकाशकीर्तिभृत् ।
माहेश्वर्या उपर्यागान्नगर्याः कोविदार्यमा ॥ १५६ ॥
आरामस्थः पितुर्मित्रमारामिकगुणाग्रणीः ।
वज्रं च कुलसिंहाख्यो वीक्ष्य नत्वा च संजगौ ॥ १५७ ॥
किमप्यादिश मे नाथ कार्यं सूरिरतोऽवदत् ।
सुमनः सुमनोभिर्मे कार्यमार्य कुरुष्व तत् ॥ १५८ ॥
पूज्यैर्व्यावृत्तिवेलायां ग्राह्याणीति निशम्य सः ।
ययौ देव्याः श्रियः पार्श्वे तं क्षुद्रहिमवद्गिरिम् ॥ १५९ ॥
धर्मलाभाशिषानन्द्य तां देवीं कार्यमादिशत् ।
ददौ सहस्रपत्रं सा देवार्चार्थे करस्थितम् ॥ १६० ॥
तदादाय प्रभुर्वज्रः पितृमित्रस्य संनिधौ ।
आययौ विंशतिर्लक्षाः पुष्पाणां तेन ढौकिताः ॥ १६१ ॥

---

१ J & H read अहष्टे. २ J & H read स्वस्थ. ३ H and J read पुरिम् ४ J and P read उपत्यत आकाशे. ५ J reads महेश्वर्या, H माहेश्चर्या. ६ J & H read ककुलसिंहाख्यो ७ J and H read कार्याकार्य ८ J & H देव्या. श्रिय. changed to देव्या श्रयः and हिमवद्गिरम्.

विमानवैक्रिये तांश्चावस्थाप्यागान्निजे पुरे ।
जृम्भकैः कृतसंगीतोत्सवे गगनमण्डले ॥ १६२ ॥
ध्वनत्सु देवतूर्येषु शब्दाद्वैते विजृम्भिते ।
तं तदूर्ध्वं समायान्तं दृष्ट्वा बौद्धाश्चमत्कृताः ॥ १६३ ॥
ऊचुर्धर्मस्य माहात्म्यमहो नः शासने सुराः ।
आयान्ति पश्यतां तेषां ते ययुर्जिनमन्दिरे ॥ १६४ ॥
श्राद्धसंघः प्रमुदितः पूजां कृत्वा जिनेशितुः ।
तत्र धर्मदिने धर्ममश्रौषीद्वज्रसद्गुरोः ॥ १६५ ॥
प्रातिहार्येण चानेन राजा तुष्टोऽभ्युपागमत् ।
प्रत्यबोधि च वज्रेण बौद्धाश्चासन्नधोमुखाः ॥ १६६ ॥
विहरन्नन्यदा स्वामी प्रययौ दक्षिणापथम् ।
कुत्रचिच्छुद्धभूभागोद्याने ऽसौ समवासरत् ॥ १६७ ॥
श्लेष्मरोगापनोदायानाययद्विश्वभेषजम् ।
उपयुक्तावशेषं च श्रवणे धारयत्ततः ॥ १६८ ॥
प्रत्युपेक्षणकाले तत्तत्रस्थं चापराह्णिके ।
मुखवस्त्रिकयास्रस्यत्कर्णयोः प्रतिलेखने ॥ १६९ ॥
दध्यावायुरहोक्षीणं विस्मृतिर्यन्ममोदिता ।
पुनर्दुर्भिक्षमासं च प्रागुक्तादधिकं ततः ॥ १७० ॥
वज्रसेनस्तदादिश्य वंशार्थं वज्रसूरिभिः ।
प्रहितः स शनैः प्रायात्कुंकुणान् चित्तवञ्चणान् ॥ १७१ ॥
अलब्धभिक्षान्दुर्भिक्षाद्विद्यापिण्डेन भोजितान् ।
साधूनाह च भोज्योऽयं नित्यं द्वादशवत्सरीम् ॥ १७२ ॥
ग्राह्यं चानशनं ते च श्रुत्वा तत्प्रायमाविशन् ।
श्रीवज्रः कुत्रचिच्छैले साधुभिः सहितो ययौ ॥ १७३ ॥
मार्गे गच्छद्भिरेकत्र ग्रामे प्रालम्भि सूरिभिः ।
शिष्य एकः स तज्ज्ञात्वा वैराग्यं परमं दधौ ॥ १७४ ॥
दध्यौ च प्रोज्झ्य मामेते जग्मुर्जीवत्वसाविति ।
निःसत्वोऽहं कथं दृष्टः प्रभुं नानुव्रजामि तत् ॥ १७५ ॥
ध्यात्वेति तप्तपाषाणे पादपोपगमं व्यधात् ।
व्यलीयत मधूच्छिष्टमिव सत्वरितस्तदा ॥ १७६ ॥
तद्विपत्तौ महे देवैः क्रियमाणे मुनीश्वरः ।
यतीनां पुरतोऽवादीच्छिशोः सत्वमिदं महत् ॥ १७७ ॥

---

१ P reads विमाने वैक्रियेता २ J and H–समायात ३ J & H–वातेन. ४ J and H–श्रस्यत्कर्णयोः ५ P reads न्यग. ६ J & H–कुंकुणाविनवचरान्

तच्छ्रुत्वा मुनयः सर्वे परं वैराग्यमादधुः ।
प्रशान्तविग्रहास्तस्थुः स्थण्डिलेषु पृथक् पृथक् ॥ १७८ ॥
प्रत्यनीकासुरी तत्रोपसर्गायोपतस्थुषी ।
निशीथे दिवसं कृत्वा दधि तेषामढौकयत् ॥ १७९ ॥
विज्ञायाऽप्रीतिकं तत्रान्यत्र शृङ्गेऽथ ते ययुः ।
मृत्युजीवितयोर्येनाशंसास्तेषां सुराः किमु ॥ १८० ॥
यथायोगं च ते प्राणान् परित्यज्य सुरालयम् ।
श्रीवज्रोऽपि जगाम द्यामध्यानवैभवः ॥ १८१ ॥
शक्रस्तत्रायर्यौ पूर्वभवस्नेहेन तद्वयम्[१] ।
ज्ञात्वा चतुर्दिशं स्वीयरथमावर्त्तताथ सः ॥ १८२ ॥
गहनानि तरूणां च तत्रोन्मूल्य समां भुवम् ।
कृत्वा तत्र क्षणं तस्थौ सुपर्वश्रेणिसंभृतः ॥ १८३ ॥
ततः प्रभृति विख्यातो रथावर्त्ताख्यया गिरिः ।
असावचलतां याति ख्यातिर्या गुरुभिः कृता ॥ १८४ ॥
वज्रसेनश्च सोपारं नाम पत्तनमत्यगात् ।
जिनदत्तप्रियास्त्यत्रेश्वरीत्याख्या चतुःसुता ॥ १८५ ॥
अक्षामगुरुशिक्षाढ्यः स तस्या मंदिरे ययौ ।
चिन्तामणिमिवायान्तं दृष्ट्वा तं हर्षमाप सा ॥ १८६ ॥
प्राह्वाथ साहसं साधोऽस्माभिरद्य विचिन्तितम् ।
स्थालीपाकोऽत्र लक्षेण पूरितः कष्टकल्पनात्[२] ॥ १८७ ॥
द्रव्यसंपदि सत्यामप्यन्नदौस्थ्यान्मृतिर्ध्रुवम्[३] ।
ततोऽत्र पायसे पक्के निक्षेप्यं विषमं विषम् ॥ १८८ ॥ युग्मम् ।
तदत्रावसरे पूज्यदर्शनं पुण्यतोऽभवत् ।
कृतार्थाः सांप्रतं पारत्रिकं कार्यमिहादधे ॥ १८९ ॥
इत्याकर्ण्य मुनिः प्राह गुरुशिक्षाचमत्कृतः ।
धर्मशीले शृणु श्रीमद्वज्रस्वामिनिवेदितम् ॥ १९० ॥
स्थालीपाके किलैकत्र लक्षमूल्ये[४] समीक्षिते ।
सुभिक्षं भावि सविषं पाकं मा कुरु तद्वृथा ॥ १९१ ॥
सापि प्राह प्रसादं नः कृत्वैतत्प्रतिगृह्यताम् ।
इत्युक्त्वा पात्रपूरेण प्रत्यलाभि तया मुनिः ॥ १९२ ॥
एवं जातेऽथ संध्यायां वहित्राणि समाययुः ।
प्रशस्यशस्यपूर्णानि जलदेशान्तराध्वना ॥ १९३ ॥

---

१ All read द्यामध्यानवैभवः, but P gives मध्या as त्रुटि at the margin which makes द्यामध्यामध्यानवैभवः. २ P काष्ट०. ३ H & J–सत्यमेष्यन्नदोःस्थ्या. ४ P मूल्ये.

सुभिक्षं तत्क्षणं जज्ञे ततः सा सपरिच्छदा ।
अचिन्तयदहो मृत्युरभविष्यदरीतितः ॥ १९४ ॥
जीवितव्यफलं किं न गृह्यते संयमग्रहात् ।
वज्रसेनमुनेः पार्श्वे जिनबीजस्य सद्गुरोः ॥ १९५ ॥
ध्यात्वेति सा सपुत्राथ व्रतं जग्राह साग्रहा ।
नागेन्द्रो निर्वृतिश्चन्द्रः श्रीमान् विद्याधरस्तथा ॥ १९६ ॥
अभूवंस्ते किंचिदूनदशपूर्वविदस्ततः ।
चत्वारोऽपि जिनाधीशमतोद्वा(द्धा)रधुरंधराः ॥ १९७ ॥
अद्यापि गच्छास्तन्नाम्ना जयिनोऽवनिमण्डले ।
वर्तन्ते तत्र तीर्थे च मूर्तयोऽद्यापि साईणाः ॥ १९८ ॥
इति श्रीमद्वज्रप्रभुचरितमेतद्विविषदा-
मपि स्तुत्यं तत्त्वं किमपि जिननाथोपनिषदाम् ।
श्रियां हेतुः सेतुर्भवजलधिनिस्तारविधये
प्रदेयादानन्दं जयतु शशिसूर्यावधि यथा ॥ १९९ ॥
श्रीचन्द्रप्रभसूरिपट्टसरसीहंसप्रभः श्रीप्रभा-
चन्द्रः सूरिरनेन चेतसि कृते श्रीरामलक्ष्मीभुवा ।
श्रीपूर्वर्षिचरित्ररोहणगिरौ श्रीवज्रवृत्ताभिधः
श्रीप्रद्युम्नमुनीन्दुना विशदितः शृङ्गोऽगमत्प्राक्तनः ॥२००॥
मूर्तिः साष्टापदश्रीर्विमलगिरिरतिस्तारणः श्रीभरोयम्
दुःखार्त्तानामपापा किल मतिरसतां स्तम्भनश्च प्रभावः ।
चेतः स्यादुज्जयन्तस्थितिकृदनुपमं चारुरूपं यशस्तत्
श्रीमन्(त्) प्रद्युम्नसूरेऽर्बुदगुणविजयी तीर्थरूपस्त्वमेव ॥ १ ॥
ग्रंथाग्रं २०७ अक्षर ॥ ११ ॥

---

आर्यरक्षितप्रबन्धः ।

अव्यादव्याहतं भव्यान् स श्रीमानार्यरक्षितः ।
समूलघातमाहन्ति धर्मो यस्यान्तरद्विषः ॥ १ ॥
पीयूषमिव यद्वृत्तमनिर्वाच्यं बुधैरपि ।
वैचक्षण्यवलिप्ती मे मतिः किं नु विमृक्ष्यति ॥ २ ॥
पुनस्तथापि वातापितापनस्य तमोऽम्बुधेः ।
तस्य वृत्तं स्मृतौ वाचं प्रणये प्रणयावधिः ॥ ३ ॥

---

१ P–जैनबीजस्य.. २ P–रतितार०. ३ J and H–दुःखानानपाप्य ............... प्रभावंतः स्यादुज्जयं.. ...दण्ड चारुरूपं यस्तत् श्रीप्रद्यु०. ४ P–ग्रथ २०७ अक्ष ११ इतिवयर (वज्र) स्वामिप्रबन्धः. ५ P. वैचक्षिप्ताद्यावि० किंनु विमक्ष्यति ६ J & H वृत्तस्मृतौ वाचं.

सदानन्दनवाहुल्यपराभूतद्युसत्पुरम् ।
पुरं दशपुरं नामावन्तिकान्तिकसप्तकी ॥ ४ ॥
उदायनो निशानाथ इव नव्योऽकलङ्कभूः ।
अगम्यस्तमसोऽक्षीणकलोऽभूत्तत्र भूपतिः ॥ ५ ॥
सौवस्तिकपदप्राप्तप्रतिष्ठोऽतिविशिष्टधीः ।
वर्णज्येष्ठः कुलश्रेष्ठः क्रियानिष्ठः कलानिधिः ॥ ६ ॥
आसीच्छ्रीसोमदेवाख्यः शमितेष्वमितेष्वपि ।
यन्मन्त्रैः शत्रुवर्गेषु शृङ्गाराय चमूचयः ॥ ७ ॥ युग्मम् ।
रुद्रसोमाभिधास्याभूत्प्रिया प्रियवचःक्रमैः ।
संपूर्णदानैरर्थिभ्यः कृतदारिद्र्यविद्रवा ॥ ८ ॥
सूर्याश्वयोरिव यमौ तयोः पुत्रौ बभूवतुः ।
आर्यरक्षित इत्याद्यो द्वितीयः फल्गुरक्षितः ॥ ९ ॥
पुरोहितेन तौ तेन साङ्गान्वेदान्प्रपाठितौ ।
आत्मजानां विनीतानां स्वासृद्धिं निह्नुते हि कः ॥ १० ॥
अतृप्तः शास्त्रपीयूषे विद्वानप्यार्यरक्षितः ।
पिपठीस्तद्विशेषं स प्रययौ पाटलीपुरम् ॥ ११ ॥
अचिरेणापि कालेन स्फुरत्कुण्डलिनीवलः ।
वेदोपनिषदं गोप्यामप्यध्यैष्ट प्रकृष्टधीः ॥ १२ ॥
अथोपाध्यायमापृच्छ्य व्यावृत्तः स्वभुवं प्रति ।
आरूढवद्ययौ सोऽथाययौ परिसरे पुरः ॥ १३ ॥
ज्ञातोदन्तेन राज्ञा स पितृविज्ञपनादथ ।
प्रावेशि गजमारुह्य संमुखागामिना स्वयम् ॥ १४ ॥
प्रधानकुलवृद्धाभ्यः सुलब्धाशीर्गृहे गृहे ।
अपराह्णे निजावासप्राङ्गणं प्रागमत्ततः ॥ १५ ॥
रुद्रसोमा पुनस्तत्र श्रमणोपासिका तदा ।
विज्ञातजीवाजीवादिनवतत्त्वार्थविस्तरा ॥ १६ ॥
कृतसामायिका पुत्रमुत्कण्ठाकुलितं चिरात् ।
इलातलमिलन्मौलि वीक्ष्यापि प्रणतं भृशम् ॥ १७ ॥
अवर्द्धयत नारीभिः सामायिकमिदाभिया ।
अतिखिन्नस्ततः प्राह स धीमानार्यरक्षितः ॥ १८ ॥ त्रिभिर्विशेषकम् ।
धिग्ममाधीतशास्त्रौघं वह्व्यवकरप्रभम् ।
येन मे जननी नैव परितोषमवापिता ॥ १९ ॥
ध्यात्वेत्युवाच किं मातः परितोषो न तेऽभवत् ।
साह तुष्याम्यहं केन पाठैस्तैर्दुर्गतिप्रदैः ॥ २० ॥

---

१ P कान्तैकसप्तकी. २ J & H गोपांगमप्यध्यै ३ J & H लङ्घ.
४ P–विज्ञाततत्त्वा जीवादि नवभेदितिविस्तारा.

स प्राह चाविलम्बेन तदलं मे समादिश ।
येनाधीतेन ते तुष्टिः कार्यैरन्यैस्तु किं मम ॥ २१ ॥
रोमाञ्चकञ्चुकोद्भेदमेदुराथ जनन्यपि ।
प्रधानं मन्यमाना स्वं पुत्रिणीनामवोचत ॥ २२ ॥
अधीष्व विष्वगुन्निद्राभद्रविद्रावणक्षमम् ।
दृष्टिवादं जिनोपज्ञमन्यैरज्ञातसंज्ञकम् ॥ २३ ॥
तमाकर्ण्य सुतो दध्यौ तावन्नामापि सुन्दरम् ।
दृष्टिवाद इदानीं तदवश्यं कार्यमेव मे ॥ २४ ॥
समस्ततीर्थमूर्द्धन्ये मम मातः समादिश ।
अध्यापकं तदभ्यासे यथाभ्यस्यामि तं द्रुतम् ॥ २५ ॥
उवाच रुद्रसोमापि वत्स ते विनयावने ।
अवतारणके यामि सावधानस्ततः शृणु ॥ २६ ॥
जैनर्षयो महासत्त्वास्त्यक्ता ब्रह्मपरिग्रहाः ।
परमार्थस्थितस्वान्ताः सज्ज्ञानकुलभूमयः ॥ २७ ॥
अस्य ग्रन्थस्य वेत्तारस्तेऽधुना स्वेक्षुवाटके ।
सन्ति तोसलिपुत्राख्याः सूरयो ज्ञानभूरयः ॥२८॥ त्रिभिर्विशेषकम्।
पठाशठमते तेषां पार्श्वे ग्रन्थमिमं वरम् ।
यथा त्वदीयवृत्तेन कुक्षिर्मे शीतलीभवेत् ॥ २९ ॥
श्रुत्वेत्यहर्मुखे यामीत्युक्त्वा तद्ध्यानतत्परः ।
निशां निन्ये विनिद्रः सन्निरगाच्च बहिस्ततः ॥ ३० ॥
अर्द्धमार्गे पितुर्मित्रं संमुखोऽस्य द्विजोऽभवत् ।
इक्षोर्नवलताः सार्द्धाः स्कन्धे तद्धेतवे वहन् ॥ ३१ ॥
तेनाभिवादयन्नालिलिङ्गे प्रीत्यार्यरक्षितः ।
व्यावृत्यागच्छ गेहे त्वमित्युक्तश्चायमब्रवीत् ॥ ३२ ॥
मात्रादेशेन यात्वाहं समायास्यामि शीघ्रतः ।
पूज्यैर्गन्तव्यमावासे निजबन्धुप्रसत्तये ॥ ३३ ॥
इत्युक्त्वा संचरन्निक्षुवाटाभिमुखमादृतः ।
दध्यौ मनस्यहो सम्यगस्माद्दृढनिमित्ततः ॥ ३४ ॥
अध्याया वा परिच्छेदा नव सार्द्धा मया ध्रुवम् ।
अस्य ग्रन्थस्य लप्स्यन्ते नाधिकं निश्चितं हृदः ॥ ३५ ॥
प्रातःसंध्याक्षणे तत्र मुनिः स्वाध्यायडम्बरैः ।
शब्दाद्वैतमयं शृण्वन्नाश्रयद्वारमाश्रयत् ॥ ३६ ॥
किंकर्तव्यजडस्तत्राजानन् जैनपरिश्रमम् ।
ढड्डरश्रावकं सूरिवन्दकं प्रैक्षदागतम् ॥ ३७ ॥

१ P–मद्वै. २ P मंतमाम. ३ P reads सोमद्धा ४ J and H प्रवृत्ता. ५ J and H लभ्यते. ६ J and H रमाश्रयन्.

तत्पृष्ठस्थो ययौ सोऽपि विदधे वन्दनादिकम् ।
तद्वदेव महाप्राज्ञस्तादृशां किं हि दुष्करम् ॥ ३८ ॥
सर्वसाधुप्रणामानन्तरं श्रावकवन्दनम् ।
अशिक्षितत्वाज्ञाकार्य्यंनाख्यातं बुध्यते कियत् ॥ ३९ ॥
चिह्नेनानेन विज्ञाय नवं तं सूरयस्तदा ।
कुतो धर्मस्य संप्राप्तिरिति पप्रच्छुरादरात् ॥ ४० ॥
ढड्ढरं दर्शयन्नस्मादेव धार्मिकपुंगवात् ।
इत्यूचिवांसमेकश्च मुनिर्लक्षयतिस्म तम् ॥ ४१ ॥
आह कल्यदिने राज्ञा प्रावेश्येष महोत्सवात् ।
पुरोहितसुतश्राद्धरुद्रसोमाङ्गसंभवः ॥ ४२ ॥
चतुर्वेदी समस्ताद्य गुणस्थानभृतां वरः ।
असंभाव्यागमः कस्मादत्रायाज्ज्ञायते न तत् ॥ ४३ ॥
अथार्यरक्षितः प्राह मातुरुक्तमनातुरः ।
आकर्ण्येति प्रभुर्दध्यौ तच्चरित्रचमत्कृतः ॥ ४४ ॥
कुलीन आस्तिको विप्रः कुलानुचितमार्दवः ।
संभाव्यसुकृताचारो जैनधर्मोचितो ह्ययम् ॥ ४५ ॥
उपयोगं श्रुते दत्वा पूर्वपाठोचितं च तम् ।
प्रभावकं भाविनं च श्रीमद्वज्रादनन्तरम् ॥ ४६ ॥
ध्यात्वा तं सूरयोऽवोचन् जैनप्रव्रज्यया विना ।
न दीयते दृष्टिवादो विधिः सर्वत्र सुंदरः ॥४७॥ त्रिभिर्विशेषकम् ।
स प्राह प्राच्यसंस्कारा ममासन्नव केशिनः ।
ततो जैनेन्द्रसंस्कारैरलंकुरुत मे वपुः ॥ ४८ ॥
परं किंचिच्च विज्ञप्यमास्ते तदवधार्यताम् ।
मिथ्यामोहेन लोको हि सर्वो मय्यनुरागवान् ॥ ४९ ॥
राजापि ज्ञातवृत्तान्तो दीक्षामुत्सर्जयेदपि ।
अबुधस्वजनानां च ममकारो हि दुस्त्यजः ॥ ५० ॥
शावरूपे निजे तस्मात्प्रसद्य(ह्य) मयि दीक्षिते ।
अन्यदेशे विहर्त्तव्यं मामूच्छासनलाघवम् ॥५१॥ त्रिभिर्विशेषकम् ।
ओमित्युक्त्वा गुरुस्तस्य सार्वज्ञपरमाक्षरैः ।
अभिमन्त्र्याथ तन्मूर्ध्नि वासानक्षि(नाक्षे)पतोऽक्षिपत् ॥ ५२ ॥
सामा(म)यिकव्रतोच्चारपूर्वं पूर्वाभिलाषिणः ।
केशान् क्लेशानिवाशेषानपनिन्ये मुनीश्वरः ॥ ५३ ॥

---

१ P–वदना. २ J and H यस्तया. ३ P–तः श्राद्धारुद्र ४ J and H. संस्काराः समासन्न. ५ J–मुत्सृज H–मुत्सर्जे. ६ J and H–वासानक्षेपतो॰ P क्षिपन्.

ईशानकोणे गार्हस्थ्यनेपथ्यं परिहाय सः ।
परिधाप्य सिते वस्त्रे यतिवेषेण योजितः ॥ ५४ ॥
विहारं तत्क्षणात्ते च विदधुर्नगरान्तरे ।
विधाय पुरतस्त्वार्यरक्षितो नवदीक्षितः ॥ ५५ ॥
अध्यापितः समूलाङ्गोपाङ्गादिग्रन्थमण्डलम् ।
तत्तत्तपस्यया पूर्वाणि च कान्यपि सूरिभिः ॥ ५६ ॥
अधीतपूर्वी शास्त्राणि बुद्धपूर्वी हिताहितम् ।
विनीतपूर्वी स्वाचारं ज्ञातपूर्वी व्रतान्यभूत् ॥ ५७ ॥
गुरवः शेषपूर्वाणां पाठायोज्जयिनीपुरि ।
तमार्यरक्षितं प्रैषुः श्रीवज्रस्वामिनोन्तिके ॥ ५८ ॥
गीतार्थैर्मुनिभिः सत्रा तत्रागादार्यरक्षितः ।
श्रीभद्रगुप्तसूरीणामाश्रये प्राविशत्तदा ॥ ५९ ॥ युग्मम् ।
आश्लिष्य स्नेहतः प्राहुः प्रत्यभिज्ञाय ते च तम् ।
आर्यरक्षित कच्चित्ते भद्रपूर्वोभिलाषुकः ॥ ६० ॥
अभिसंधिर्मम प्रायोपवेशनविधौ भवान् ।
निर्यामो भव तद्वेला कुलीनानामियं यतः ॥ ६१ ॥
तथेति प्रतिपद्याथ तथाशुश्रूषत प्रभुम् ।
यथा जानाति नैवासावुदयास्तमने रवेः ॥ ६२ ॥
समाधौ परमे लीनोऽन्यदा प्रोवाच हर्षतः ।
क्षुत्तृट्क्लमं न जानेऽहं वत्स त्वद्वरिवस्यया ॥ ६३ ॥
इहलोकेपि देवत्वं संप्राप्त इव तद्रसात् ।
गोप्यं किंचिच्छिक्षयिष्ये त्वां ततोऽवहितः शृणु ॥ ६४ ॥
श्रीवज्रस्वामिपादान्ते त्वया पिपठिषाभृता ।
भोक्तव्यं शयनीयं च नित्यं पृथगुपाश्रये ॥ ६५ ॥
यतस्तदीयमण्डल्यामेककृत्वोऽपि योभुनक् ।
रात्रौ सुप्तश्च पार्श्वे यत्तस्य तेन सहात्ययः ॥ ६६ ॥
प्रभावको भवानर्हच्छासनाम्भोधिकौस्तुभः ।
संघाधारश्च भावी तदुपदेशं करोतु मे ॥६७॥ त्रिभिर्विशेषकम् ।
इच्छामीति प्रभोरंह्री शिरसि प्रणिधाय सः ।
ओमिति प्रतिपेदेऽतिविनीतानामियं स्थितिः ॥ ६८ ॥
अथ श्रीभद्रगुप्तेऽस्मिन् कालधर्ममुपागते ।
सौनन्देयप्रभोः पार्श्वे प्रचचालार्यरक्षितः ॥ ६९ ॥
तदा च ददृशे स्वप्नः श्रीवज्रेणाप्यजल्प्यत ।
विनेयाग्रेऽद्य संपूर्णः पायसेन पतद्ग्रहः ॥ ७० ॥

१ J and H omit it २ J and H-काचित्त्वं. ३ J & H सहायय.

पारितोऽतिथिनागत्य किंचिच्छेषमवास्थितम् ।
तदेतस्य विचारोऽसौ चित्तांतर्घटते मम ॥ ७१ ॥ युग्मम् ।
अद्य प्राज्ञोऽतिथिः कश्चिदागत्य मम संनिधौ ।
श्रुतं ग्रहीष्यतेऽशेषमल्पं स्थास्यति किंचन ॥ ७२ ॥
एवं वदत एवास्य समागादार्यरक्षितः ।
दृष्टो हि महता स्वप्नोऽवश्यं सद्यः फलेग्रहिः ॥ ७३ ॥
अपूर्वमतिथिं दृष्ट्वाभ्युत्थाय स्वागतोक्तितः ।
नमस्कुर्वन्तमेनं च स प्रभुर्व्याहरत्तदा ॥ ७४ ॥
कौतस्कुतोऽयं भावत्क आगमः स ततोऽवदत् ।
श्रीमत्तोसलिपुत्राणामन्तिकादागमं प्रभो ॥ ७५ ॥
श्रुत्वेति स प्रभुः प्राह किं भवानार्यरक्षितः ।
पूर्वशेषस्य[1] पाठार्थमस्मत्पार्श्वं इहाययौ ॥ ७६ ॥
तवोपकरणं[2] कुत्र पात्रसंस्तारकादिकम् ।
तदानयातिथिर्नस्त्वमद्य मा गोचरं चरेः ॥ ७७ ॥
भुक्त्वात्रैव ततोऽध्यायमारभस्वेति तद्गिरः ।
श्रुत्वा स प्राह चाभ्यर्थि मया पृथगुपाश्रयः ॥ ७८ ॥
स्वापं[3] भुक्तिं च तत्रैव कृत्वाध्येक्षे तवान्तिके ।
श्रीवज्रः प्राह पार्थक्यस्थितेः कथमधीयते ॥ ७९ ॥
अथार्यरक्षितोऽवोचद्भद्रगुप्तगुरोर्वचः ।
इदमित्युदिते वज्र उपयोगं ददौ श्रुते ॥ ८० ॥
भुक्तौ स्वापे मया सार्धं दिष्टान्तोपि भवेत्सह ।
ततः समुचितं प्राहुः प्रभवस्तद्भवत्विदम् ॥ ८१ ॥
एनमध्यापयामासुस्ततः श्रीवज्रसूरयः ।
अर्द्धं दशमपूर्वस्य प्रारेभे घोषितुं च सः ॥ ८२ ॥
अस्मिन् ग्रन्थे दुरध्येयामंगकैर्दुर्गमैर्गमैः ।
पर्यायैर्दुर्वचैः शब्दैः सदृशैर्जविकावलिः ॥ ८३ ॥
चतुर्विंशतिसंख्यानि जविकानि च सोऽपठत् ।
अधीयानस्य चायासोऽभवत्तस्याद्भुतः किल ॥८४॥ युग्मम् ।
इतश्च रुद्रसोमापि तस्य माता व्यचिन्तयत् ।
अहो ममाविमर्शो दुरनुतापाफलेग्रहिः ॥ ८५ ॥
हृदयानन्दनो धीमान्नन्दनः शीलचन्दनः ।
आर्यरक्षितसंकाशो मया प्रैष्यल्पमेधसा ॥ ८६ ॥
उद्योतं चिन्तयन्त्या मे तमिस्रं जातमद्भुतम् ।
तस्मादाहूतये तस्य प्रहेयः फल्गुरक्षितः ॥ ८७ ॥

---

१ J and H omit शेष. २ J H तत्रोपकरणं. ३ J and H omit sts 79 to 88.

सोमदेवस्तया पृष्टः श्रोत्रियः सरलोऽवदत् ।
त्वं यत्कृतप्रमाणा मे ततो यद्भावि तत्कुरु ॥ ८८ ॥
प्रजिघाय ततः सापि द्वैतीयीकं निजाङ्गजम् ।
वत्स गच्छ निजभ्रातुर्मम वाक्यं निवेदय ॥ ८९ ॥
जनन्या बन्धुसंसर्गं मोहं च त्याजितो भवान् ।
परं वत्सलताबुद्धिर्जिनेन्द्रैरपि मानिता ॥ ९० ॥
स्वमातुर्गर्भवासेऽपि श्रीवीरो भक्तिभूर्यतः ।
शीघ्रतस्तत्समागच्छ निजमास्यं प्रदर्शय ॥ ९१ ॥ युग्मम् ।
तथा ममाप्यसौ मार्गो भवता यः समाश्रितः ।
तदनु त्वत्पितुः पुत्रपुत्रीवर्गेऽप्यसौ पुनः ॥ ९२ ॥
यदि न स्नेहबुद्धिः स्यात्ततोऽप्युपकृतौ मुदा ।
एककृत्वः समागच्छ कृतार्थत्वं प्रयच्छ मे ॥ ९३ ॥ युग्मम् ।
आख्यायास्त्वमिदं गच्छ पथि देहे च यत्नवान् ।
त्वदीयस्य शरीरस्य वयं भाग्योपजीविनः ॥ ९४ ॥
इत्याकर्ण्य वचो मातुर्नम्राङ्गः फल्गुरक्षितः ।
गत्वोपबन्धु कथयांचकार जननीवचः ॥ ९५ ॥ षड्भिः कुलकम् ।
क ईदृक्षो भवत्तुल्यः सोदराम्बासु वत्सलः ।
भवत्तातस्तु नहि मामाक्रोशेत्कुललज्जया ॥ ९६ ॥
अतिस्वच्छं तदागच्छ वत्स स्वं दर्शयास्यकम् ।
त्वद्दर्शनामृतैस्तृप्ता वितृष्णा संभवामि यत् ॥ ९७ ॥
रुद्रसोमात्मनो माता संदिदेशेति मद्गिरा ।
तस्मात्प्रसादमासाद्य गम्यतां मातृवत्सल ॥ ९८ ॥ त्रिभिर्विशेषकम् ।
बन्धोः श्रुत्वा वचः प्राह वैराग्यादार्यरक्षितः ।
फल्गुरक्षित को मोहः संसारे शाश्वतेतरे ॥ ९९ ॥
अस्तु वाध्ययनस्यान्तरायं कः कुरुते सुधीः ।
फल्गुना वल्गु नो कोपि परित्यक्तुं समीहते ॥ १०० ॥
भवांश्चेन्मयि सस्नेहस्तत्तिष्ठतु ममान्तिकम् ।
दीक्षां विना न च स्थातुं शक्यं तत्तां गृहाण भोः ॥ १०१ ॥
स तथेति वदंस्तेन तत्क्षणं समदीक्ष्यत ।
श्रेयःकार्येषु को नाम विलम्बायोपतिष्ठते ॥ १०२ ॥
जविकैर्घूर्णितो बाढं धीमानप्यार्यरक्षितः ।
श्रीमद्वज्रप्रभुं प्राह किमस्मादवशिष्यते ॥ १०३ ॥
अधीष्व पृच्छया किं ते इत्युक्त्वा पठतिस्म सः ।
कियत्यपि गते काले पुनः पप्रच्छ तद्गुरुम् ॥ १०४ ॥

---

१ P–द्वैतीयकं  २ P–तfor च.  ३ J and H वल्गुना.

ततः श्रीवज्र आचख्यौ सर्षपः पठितस्त्वया ।
मेरुरत्रावतिष्ठेत तन्ममैकं वचः शृणु ॥ १०५ ॥
काञ्जिकेन कथं क्षीरं कर्पूरं लवणेन च ।
कुङ्कुमं च कुसुंभेन जातरूपं च गुञ्जया ॥ १०६ ॥
उषया वैज्ञषा(खा)नि च चन्दनं कनकद्रुणा ।
पूर्वाध्ययनमल्पेन स्वमोहेन यदुज्झसि ॥ १०७ ॥
ततः पठ श्रुताम्भोधेर्मध्यं प्राप्तः फलं यथा ।
सज्ज्ञानशक्तिरत्नौघं लभसे लिप्सया विना ॥ १०८ ॥
इत्याकर्ण्य पठन्नुच्चैर्वासराणि कियन्त्यपि ।
अनुजेन पुनः प्रैरि स्वैरिण्याह्वानकृद्गिरा ॥ १०९ ॥
आपप्रच्छे पुनः सूरिमायासितः पुनर्दृढम् ।
संवन्धिसंगमे स्वामिन् प्रहिणूत्कण्ठितं जनम् ॥ ११० ॥
पाठाय पुनरायास्ये शीघ्रं तैः सह संगतः ।
इति श्रुत्वा श्रुते प्रादादुपयोगं पुनः प्रभुः ॥ १११ ॥
अज्ञासीत्पुनरायातो मिलिष्यति न मे पुनः ।
मदायुषस्तनीयस्त्वादियत्येवास्य योग्यता ॥ ११२ ॥
तथा दशमपूर्वं च मय्येव स्थास्यति ध्रुवम् ।
तत्प्राह वत्स गच्छ त्वं मिथ्या दुःकृतमस्तु ते ॥ ११३ ॥
यदामुष्यायणो मेधानिधिस्त्वं नेदृशोऽपरः ।
ततोऽभूदादरोऽस्माकमध्यापनविधौ तव ॥ ११४ ॥
प्राप्तिरीदृक् क ते सन्तु पन्थानः शिवतातयः ।
श्रुत्वेत्यंह्री प्रभोर्नत्वा चचालात्मभुवं प्रति॥११५॥ चतुर्भिः कुलकम्।
अखण्डितप्रयाणैः स शुद्धसंयमयात्रया ।
संचरन्नाययौ बन्धुसहितः पाटलीपुरम् ॥ ११६ ॥
श्रीमत्तोसलिपुत्राणां मिलितः परया मुदा ।
पूर्वाणां नवके सार्द्धे संगृहीती गुणोदधिः ॥ ११७ ॥
तं च सूरिपदे न्यस्य गुरवोऽगुः परं भवम् ।
अथार्यरक्षिताचार्यः प्रायाद्दशपुरं पुरम् ॥ ११८ ॥
अग्रेभूय निजावासमाययौ फल्गुरक्षितः ।
वर्द्धये वर्द्धये मातर्गुरुस्तत्सुत आगमत् ॥ ११९ ॥
आस्यायत्युंछने गान्ते वचनाय वलिक्रिये(?) ।
आर्यरक्षितनामा यः कुत्र कुत्र स पुत्रकः ॥ १२० ॥

---

१ J and H—वज्रवोनि; H adds र on the margin. २ P मायासितपनर्दढम् with correction on the margin मायासितमतिदृढम्.
३ J & H. पुनः पुनः for पुन. प्रभुः ४ J and H मय्यवस्था

अस्मिन्पुण्यवतीदृक्षा किं यद्वक्ष्यामि तन्मुखम् ।
एवं वदन्त्या एवास्याः पुरोऽभूदार्यरक्षितः ॥ १२१ ॥
जैनलिङ्गधरं तं चाप्रेक्ष्यमाणमथादरात् ।
रोमाञ्चकञ्चुकोद्भेदमेदुराभिगमाद्भुतम् ॥ १२२ ॥
श्रोत्रियः सोमदेवोऽपि तत्रागात्संगमोत्सुकः ।
दृढमाश्लिष्य च प्राह स्वात्मजस्नेहमोहितः ॥ १२३ ॥
शीघ्रमागाः कथं वत्स तं प्रवेशोत्सवं विना ।
हुं ज्ञातं विरहार्त्तायाः स्वमातुर्मिलनोत्सुकः ॥ १२४ ॥
इदानीमपि गच्छ त्वं बाह्योद्याने यथा नृपम् ।
विज्ञप्य नगरोत्साहोत्सवपूर्वं प्रवेशये ॥ १२५ ॥
ततः श्रमणवेषं च परित्यज्य पुनर्गृहे ।
द्वितीयाश्रममव्यग्रः पालयस्व कृतालयः ॥ १२६ ॥
यायजूककुलोत्पन्नानुरागस्था कनी मया ।
रूपयौवनसंपन्ना चिन्तिताग्रे तवोचिता ॥ १२७ ॥
श्रौतेन विधिना तां त्वं विवहस्व महोत्सवैः ।
तथा त्वज्जननी कौतुकानां स्वादं लभे तव (लभेत वै) ॥१२८॥
द्रविणोपार्जने चिन्ता कापि कार्या नहि त्वया ।
आसप्तमकुलापूर्णं नृपपूज्यस्य मे धनम् ॥ १२९ ॥
अङ्गीकृते गृहोद्धारे भवता भवतानवम् ।
दृष्टवन्तो वयं दध्मो वानप्रस्थाश्रमे मतम् ॥१३०॥ अष्टभिः कुलकम् ।
अथात्मभूर्मुनिः प्राह तात त्वं मोहवातकी ।
वाहीक इव शास्त्राणां भारं वहसि दुर्धरम् ॥ १३१ ॥
भवे भवे पिता माता भ्राता जामिः प्रिया सुता ।
तिरश्चामपि जायन्ते हर्षस्तद्धेतुरत्र कः ॥ १३२ ॥
राजप्रसादतः को हि गर्वो भृत्यतयोर्जितात् ।
द्रव्ये हि पुनरास्था का बह्रुपद्रवविद्रुते ॥ १३३ ॥
दुष्प्रापं मर्त्यजन्मेदं रत्नवद्व्यमोहतः ।
नश्वरावकरप्रायाद्धारयेन्न हि कः सुधीः ॥ १३४ ॥
तत्परीक्ष्य तमुत्सृज्य प्रव्रज्यासार्हती मया ।
मुक्तान्नपुनरादास्ये भोगान्भोगीशभोगवत् ॥ १३५ ॥
दृष्टिवादोऽपि नो पूर्णः पठितस्तत्कथं पितः ।
अवतिष्ठेऽभ्युपगमः सत्यं पुंसां हि दुस्त्यजः ॥ १३६ ॥
भवतां मयि चेन्मोहः सर्वाणि प्रव्रजन्तु तत् ।
भ्रमेणापि सिता भुक्ता पित्तोपद्रवहारिणी ॥१३७॥सप्तभि. कुलकम्

१ J H omit दृढ...मिलनोत्सुकः. २ J H–कनीयया. (?)
३ JH–इष्ट०. ४ P. द्वारयेत. ५ JH– भोगवान्. ६ JH–कारिणी.

उवाच सोमदेवोऽपि सांप्रतं मम सांप्रतम् ।
त्वदीयं सुकुलीनं चाचरितं दुश्चरं तपः ॥ १३८ ॥
त्वन्माता तु पुनः पुत्रीजामातृशिशुपालनैः ।
मोहर्वीचिभवाम्भोधिं कथं तरति मूढधीः ॥ १३९ ॥
अथार्यरक्षितो दध्यौ यदि मिथ्यात्वमन्दिरम् ।
तातः कथंचिद्बुध्येत शुद्धेत च तपोभरैः ॥ १४० ॥
तदम्बा दृढसम्पक्वचञ्चवज्राकरावनिः ।
बुद्धेव यत्प्रभावान्मे मोक्षाध्वा प्रकटोऽभवत् ॥ १४१ ॥
रुद्रसोमामथोवाच विचारय वचः पितुः ।
दुर्बोध्यां मन्यते यस्त्वां स्वं तु ज्ञानमहानिधिम् ॥ १४२ ॥
त्वदादेशाद्दृष्टिवादं पठतो मे भवोदधेः ।
निस्तितीर्षा स्थिता चित्ते श्रीवज्रः प्रापि च प्रभुः ॥ १४३ ॥
श्रीसुनन्दा कलौ धन्या या वज्रं सुषुवे सुतम् ।
त्वां ततोऽप्यधिकां मन्ये मातर्गुणत एकतः ॥ १४४ ॥
ददे तयार्जवात्पूर्वं पुत्ररोदनखिन्नया ।
पितुर्मुनेः पुनश्चक्रे विवादस्तन्निमित्तकः ॥ १४५ ॥
श्रीमत्तोसलिपुत्राणां पाठायार्पि त्वया त्वहम् ।
उत्तितारयिषामन्तर्ध्यात्वा संसारनीरधेः ॥ १४६ ॥
प्राप्तः श्रीवज्रपादान्तमपुण्यैरतिदुर्लभम् ।
अधीतपूर्वपूर्वाङ्गः पुनरागां त्वदन्तिके ॥ १४७ ॥
सपरीवारया तस्मात्स्वकीयोपक्रमात्त्वया ।
व्रतान्महांगतः पारं प्राप्यं भवमरोर्ध्रुवम् ॥ १४८ ॥
पुरोहितप्रिया प्राह वदति स्म ऋजुर्द्विजः ।
आर्त्या व्यग्रा कुटुम्बस्य नैषा व्रतभरक्षमा ॥ १४९ ॥
शीघ्रं दीक्षस्व मां पूर्वं परिवारोऽपि यो मयि ।
निबिडस्नेहभूः सोऽपि मामनुप्रव्रजिष्यति ॥ १५० ॥
अथार्यरक्षितस्तातमाहाम्बाया वचः श्रुतम् ।
इह लोके भवांस्तीर्थे तत्त्वदुक्तं करोम्यहम् ॥ १५१ ॥
उपतस्थे च दीक्षायामहंपूर्विकया तदा ।
श्रोत्रियस्य परीवारः स्नेहादेवेतरेतरा(र)म् ॥ १५२ ॥

१ J and H omit मम साम्प्रतम्. २ J H and–सुकु०. ३ J H मातान. ४ P दृढसम्पत्कवज्रवज्राकरावनिः. ५ O P–मातु०. ६ J and H–श्रीवज्रपादान्तपुण्यैरतिदुर्लभं' P प्राप्तश्री. ७ H and J–अधीतपूर्वपूर्वांगः पुनरागात्त्वदतिके. ८ J and H दीर्घस्व मा. ९ J H–निवड स्नेहभूः १० J and H च वस्तीर्थं.

अपनीय ततस्तेषां केशपालीमनोलयः[1] ।
सामायिकं ददौ यौगपद्येन प्रणिधानतः ॥ १५३ ॥
वेशः स्थविरकल्पस्य सर्वैस्तैर्[2]निर्विचारतः ।
जगृहे जीर्णभावात्तु सोमदेवस्तदावदत् ॥ १५४ ॥
वत्स कच्छाभिसंबद्धं[3] ममास्तु परिधानकम् ।
नग्नैः शक्यं किमु स्थातुं स्वीयात्मजसुतापुरः ॥ १५५ ॥
इत्याकर्ण्य गुरुर्दध्यौ दुष्करं चिन्त्यमस्त्यदः ।
अथवास्तु समाचारमादाप्योयं शनैः शनैः ॥ १५६ ॥
आह्वाथ मम तातस्याभिप्रायः परिपूर्यताम् ।
स च प्राह गुरुस्तेऽहं स्वाभिप्रायं वदामि तत् ॥ १५७ ॥
उपानहौ मम स्यातां तथा करकपात्रिका ।
छत्रिकाथोपवीतं च यथा कुर्वे तव व्रतम् ॥ १५८ ॥
पादयोः शिरसस्तापो यथा न स्यात्तथा शुचिः ।
भवाम्यूढं यदाजन्म तत्त्यक्तुं हि न शक्यते ॥ १५९ ॥
अनिषिद्धानुमत्यानुमेने सूरिस्तदाग्रहम् ।
स्वाध्यायं तु स्वयं शिक्षयन्ति स्म पितरं स्वकम् ॥ १६० ॥
श्राद्धानां शावरूपाणि गुरूणां शिक्षयान्यदा ।
चैत्येषु गच्छतः साधून् प्रणामायोपतस्थिरे ॥ १६१ ॥
सर्वानपि प्रणंस्यामो मुक्त्वा छत्रधरं मुनिम् ।
उपाश्रयागतोऽपृच्छदवन्द्यः किमहं पुनः ॥ १६२ ॥
तातः किमेवं वन्द्यः स्यान्मुञ्च छत्रं तथापि हि ।
पटं[6] शिरसि देयास्त्वमुष्णताप उपस्थिते ॥ १६३ ॥
एवं भवत्विति प्राह वृद्धः स्नेहात्सुतप्रभोः ।
इत्थं स त्याजितो वाग्भिस्तेनालं पादुके अपि ॥ १६४ ॥
अनुष्णाक्षणबाह्योर्वीगामिन्मुक्तपरिग्रह ।
उपवीतेन किं बाह्यजनप्रत्यायकेन ते ॥ १६५ ॥
इति को वा न जानाति यद्वयं द्विजसत्तमाः ।
एवं शनैः स गार्हस्थ्यवेषं संत्याजितस्तदा ॥ १६६ ॥
पूर्वरीत्यान्यदा बालाः परिधानकृतेऽवदन् ।
स ब्रह्मतेजसा दीप्तस्तदाह पृथुकान् प्रति ॥ १६७ ॥
नग्नो न स्यामहं यूयं मा वन्दध्वं सपूर्वजाः ।
स्वर्गोऽपि सोऽथ माभूयाद्यो भावी भवदर्चनात् ॥ १६८ ॥

---

१ J and H मतालयः २—P सर्वंस्तै०. ३ J & H तत्सच्छा०
४ P प्रेत. ५ J H शिष्यया. ६ J and H पटं. .उपस्थितम्.
७ J & H नाम्रानस्याम्यहं. स्वर्गोपि सोप्यथ ना०.

अन्यदाऽनशनात्साधौ परलोकमुपस्थिते ।
संज्ञिता मुनयो देहोत्सर्गाय प्रभुणा दृढम् ॥ १६९ ॥
गीतार्था यतयस्तत्र क्षमाश्रमणपूर्वकम् ।
अहंप्रथमिकां चक्रुस्तत्तनूद्वहने तदा ॥ १७० ॥
कोपाभासाद्गुरुः प्राह पुण्यं युष्माभिरेव तत् ।
उपार्जनीयमन्यूनं न तु नः स्वजनव्रजैः ॥ १७१ ॥
श्रुत्वेति जनकः प्राह यदि पुण्यं महद्भवेत् ।
अहं वहे प्रभुः प्राह भवत्वेवं पुनः शृणु ॥ १७२ ॥
उपसर्गा भवन्त्यस्मिन्नुह्यमाने ततो निजम् ।
किं तातमनुमन्येऽहमस्मिन्दुष्करकर्मणि ॥ १७३ ॥
उपसर्गैर्यदि क्षुभ्येत्तन्नः स्यादपमङ्गलम् ।
विचार्येत्युचितं यत्ते तद्विधेहि समाधिना ॥ १७४ ॥
वहिष्याम्येव किमहं निःसत्त्वो दुर्बलोऽथवा ।
एतेभ्यो मामकीना तत्र कार्या काप्यनिर्वृतिः ॥ १७५ ॥
पुरा प्रत्यूहसंघातो वेदमन्त्रैर्मया हतः ।
समस्तस्यापि राज्यस्य राष्ट्रस्य नृपतेस्तथा ॥ १७६ ॥
ततः संवोढुरस्यांशे शवं शवरथस्थितम् ।
आचकर्षुर्निवसनं शिशवः पूर्वशिक्षिताः ॥ १७७ ॥
अन्तर्दूनोऽप्यसौ पुत्रप्रत्यूहभयतो न तत् ।
अमुञ्चत्तत उत्सृज्य स्थण्डिले च वले रयात् ॥ १७८ ॥
गुरुणापृच्छि किं नग्नस्तातः सोऽप्युत्तरं ददौ ।
उपसर्गः समुत्तस्थौ त्वद्वचो ह्यनृतं नहि ॥ १७९ ॥
स न्यषेधि मया दार्ढ्यादेवंवादिनि तत्र च ।
शाटकं पृथुलं दीर्घं गृहाणेत्यथ तेऽवदन् ॥ १८० ॥
तदाकर्ण्य पिता आह द्रष्टव्यं दृष्टमेव यत् ।
को नः परिग्रहस्तस्मान्नाग्न्यमेवास्त्वतः परम् ॥ १८१ ॥
एवंप्रायप्रपञ्चैश्चावलेपान् पर्यहापयन् ।
गुरवो न तु भेत्स्येऽस्य मनः शक्ता नियोजितुम् ॥ १८२ ॥
एवं त्वंवकरं नायं त्यजति प्रभुणापि च ।
अनेकश उपायैस्तैः सुपरिच्छेदितोऽपि सन् ॥ १८३ ॥

---

१ J & H सावो परलोकसुपेयुषि । सञ्ज्ञिता मुनया देहोपसर्गा.. २ J & H क्षमाश्रवणपूर्वक. ३ J & H पुनः प्राह. ४ J and H वहिष्यवामेवकिंमहंति. ५ J & H प्यति. ६ J & H वलले. ७ J and H तद्वचो नोनृतं कन्वित् ८ J and H एव प्रथं वैथा०. ९ J H मनः शक्त्या नियोजित. १० J & H एवं त्ववकरनायां०.

कदाचिदायुः क्षीयेतास्माकं तन्निस्तरिष्यति ।
कथं जरन्नसौ तस्माद्भिक्षां ग्राह्यः कथंचन ॥ १८४ ॥
ध्यात्वेति शिक्षयन्ति स्म रहस्ते मुनिपुङ्गवान् ।
मण्डल्या नास्य दातव्य आहारो भोज्यमेककैः ॥ १८५ ॥
अरुच्यमपि चित्तस्य तथा ते प्रतिपेदिरे ।
ततो गुरुवचःश्रद्धानिष्ठेभ्योऽस्तु नमो नमः ॥ १८६ ॥
विहारं चक्रुरन्यत्रान्यदा ते गुरवो बहिः ।
मण्डल्यां यतयो न न्यमन्त्रयन्त जरन्मुनिम् ॥ १८७ ॥
द्यह्ने गुरव आजग्मुरार्यं च समभाषयन् ।
ततः प्रमन्युराहासौ श्रूयतां सुत मद्वचः ॥ १८८ ॥
दिनानि चेद्बहूनि त्वमवास्थास्यो बहिर्भुवि ।
अकालेपि तदा प्राणान् पर्यत्याक्षमहं ध्रुवम् ॥ १८९ ॥
मुनयोऽमी त्वदादिष्टा अपि वार्तां न मामकीम् ।
वहन्ति हेतोर्नो वेद्मि तन्न कस्याप्यहं प्रभो ॥ १९० ॥
ततस्ते कृतकक्रोधाद्विनेयानूचिरे चिरम् ।
तातः कथं भवद्भिर्न भोजनेन निमन्त्रितः ॥ १९१ ॥
ते प्राहुः पूज्यपादेभ्यो विना नः शून्यचेतसाम् ।
क्षूर्णं पतितमेवैतत् क्षन्तव्यं बालचेष्टितम् ॥ १९२ ॥
श्रुत्वेति तद्वचः प्राहुः सूरयः श्रूयतां पितः ।
न विधेया परस्याशा मूलहेतुः पराभवे ॥ १९३ ॥
वयं त्वदुचिताहारान्वेषणाय स्वयं ननु ।
यास्यामः कीदृशोऽमीषां पाठो व्रीडावहः स्फुटम् ॥ १९४ ॥
इत्युक्त्वा स्वयमुत्थायादाय चाथ स्वपात्रकम् ।
चेलुस्तावच्च वर्षीयानाह साहसवद्वचः ॥ १९५ ॥
अहमेव प्रयास्यामि भिक्षायै किं मयि स्थिते ।
वत्स गच्छपतिस्त्वं हि भिक्षुभिक्षां भ्रमिष्यसि ॥ १९६ ॥
इत्युक्त्वा मंक्षु सोत्साहं प्रतिषिद्धोपि सूरिभिः ।
सपात्रः संचचालासौ प्रासश्रेभ्यस्य मन्दिरम् ॥ १९७ ॥
अपद्वाराप्रविष्टोसौ भिक्षाशिक्षास्वनिष्ठितः ।
मूलद्वारा कथं नागा गृहिणेत्युदितस्ततः ॥ १९८ ॥
आयातीह शुभा लक्ष्मीरपद्वारापि धार्मिक ।
श्रुत्वेति स गृही दध्यौ वृद्धस्तत्कालधीरयम् ॥ १९९ ॥
द्वात्रिंशन्मोदकांस्तेन तुष्टेन प्रतिलाभितः ।
आगत्योपाश्रये सूरेः पुरश्चालोचयत्ततः ॥ २०० ॥

१ क्षुल्ल इति स्यात्. २ J H पाठो. ३ J and H read शिक्षासिक्षास्व॰
४ P–आयांतीह. ५ J & H सूरि. परश्चा.

गुरुणा प्रथमे लाभे शकुनोऽत्र विचारितः।
द्वात्रिंशत्संख्यया शिष्या भविष्यन्ति ममानुतः॥ २०१॥
अपृच्छच्च पुनस्तात यदा राजकुलाद्धनम्।
लब्धा ततो भुक्तशेषं दद्ध्वं कस्य भावतः॥ २०२॥
आर्योप्याह गुणोदग्रश्रोत्रियेभ्यः प्रदीयते।
सत्पात्रेभ्यो यतो दत्ता लक्ष्मीः सुकृतभूर्भवेत्॥ २०३॥
प्रधानाः साधवोऽस्मच्च वैयावृत्यादिसद्गुणैः।
अमीषां देहि तत्तात जन्म स्वं सफलं कुरु॥ २०४॥
बालग्लो(ग्ला)नादिसाधूनामानीतं चेन्मयाशनम्।
उपकारि(रो)भवेद्देषां किं न लब्धं मयात्र तत्॥ २०५॥
एवं वदन्नसौ वृद्धो भिक्षायामादरं वहन्।
परमाराध्यतां प्राप्तो गच्छे दानैकशुद्धधीः॥ २०६॥
तत्र गच्छे त्रयः पुष्पमित्राः सुत्रामतेजसः।
स्वप्रज्ञाज्ञातशास्त्रार्थाः सन्ति संतोषभूमयः॥ २०७॥
घृतपूर्वस्तेषु पूर्वो वस्त्रपूर्वो द्वितीयकः।
सुधीर्दुर्बलिकापूर्वः पुष्पमित्रस्तृतीयकः॥ २०८॥
तत्राद्यपुष्पमित्रस्य लब्धिरासीच्चतुर्विधा।
द्रव्यतः क्षेत्रतश्चापि कालतो भावतस्तथा॥ २०९॥
द्रव्यतो घृतमेव स्यात् क्षेत्रतोऽवन्तिमण्डलम्।
ज्येष्ठाषाढे कालतस्तु भावतोऽथ निगद्यते॥ २१०॥
दुर्गता ब्राह्मणी षड्भिर्मासैः प्रसवधर्मिणी।
तद्भर्तेति विमृश्याज्यं भक्षित्वा संचये दधौ॥ २११॥
ततः सा प्रसवे चाद्यश्वीने क्षुद्बाधितं द्विजम्।
तद् घृतं याचमानं तं रुणद्ध्यन्यनिराशया॥ २१२॥
स मुनिश्चेदर्थयेत दत्ते तदपि संमुदा।
यावद्गच्छोपयोग्यं स्यात्तावदाप्नोति भावतः॥ २१३॥
वस्त्रादि पुष्पमित्रस्य प्रेक्ष्यते लक्षणं त्विदम्।
द्रव्यतो लभते वस्त्रं क्षेत्रतो मथुरा पुरी॥ २१४॥
वर्षाशिशिरहेमन्ते कालतो भावतस्त्विदम्।
तस्य लब्धिविशेषोयं क्षयोपशमसंभवः॥ २१५॥
अनाथा महिला कापि कर्पासोच्चयमूल्यतः।
तूलं संपिण्ड्य कर्तित्वा वानकर्मकृतां गृहे॥ २१६॥
कर्म कृत्वा वेतनेन पटं तेभ्यः प्रवाययेत्।

१ J & H गुणादग्र०. २. J & H वालग्लाना०. ३ J H गच्छ०.
४ J & H निराशय.. ५ P–सा मुदा

शाटकं विपटा तेनार्थिता तमपि यच्छति ॥ २१७ ॥
दुर्बलः पुष्पमित्रोपि यथा लब्धं घृतं घनम् ।
भुनक्ति स्वेच्छयाभीक्ष्णं पाठाभ्यासात्तु दुर्बलः ॥ २१८ ॥
स मनीषाविशेषेण गृहीतनवपूर्वकः ।
समभ्यस्यत्यहोरात्रं मा विस्मार्षीन्मम श्रुतम् ॥ २१९ ॥
सनाभयो दशपुरे तस्य तिष्ठन्ति विश्रुताः ।
सौगतोपासकास्ते च सूरिपार्श्वे समाययुः ॥ २२० ॥
ऊचुर्यौष्माकधर्मेऽस्मिन् ध्यानं नास्ति स चावदत् ।
ध्यानमस्माकमस्तीह यत्तत्तेषां न विद्यते ॥ २२१ ॥
भावत्कः पुष्पमित्रोयं ध्यानेनैवास्ति दुर्बलः ।
ते प्राहुर्मधुराहाराभावः कार्श्याय सन्नते ॥ २२२ ॥
गुरुः प्रोवाच वृद्धानां प्रसादेन घृतप्लुतम् ।
भुंक्ते यथेच्छं सततं गुणनेन त्वयं कृशः ॥ २२३ ॥
कुतो वः स्नेहसंपत्तिरित्युक्ते गुरुरुत्तरम् ।
प्रादाद्धृतं पुष्पमित्रः समानयति तद् घनम् ॥ २२४ ॥
अथ न प्रत्ययो वस्तन्नयतामुं निजे गृहे ।
दिनानि कतिचिन्नास्य स्निग्धाहारं प्रयच्छत ॥ २२५ ॥
स्वयं ज्ञास्यथ सद्भावं दौर्बल्यहेतुमप्यथ ।
तैराहूतोप्यनुज्ञातो गुरुभिस्तद्गृहं ययौ ॥ २२६ ॥
पोष्यमाणो वराहारैरप्यसौ कृशतां भजेत् ।
अहर्निशमधीयानो रसास्वादं न बुध्यते ॥ २२७ ॥
स्वजनावि(व्य)मृशन्नस्य भुक्तं भस्मनि होमवत् ।
ददुर्बहुतरं ते च ततोप्यस्य न किंचन ॥ २२८ ॥
प्रेक्षिरे व्यतिरेकं ते प्रांताहारप्रदायिनः ।
न्यषेधयन्नध्ययने पुरावस्थांगमागमूत् ॥ २२९ ॥
प्रतीतास्तेन संबोधं प्राप्यन्त स्वजना निजाः ।
पुनरागाद्गुरूपान्ते शान्ते चेतसि सुस्थितः ॥ २३० ॥
तत्र गच्छे च चत्वारः प्राज्ञा मुनिमतल्लिकाः ।
दुर्बलः पुष्पमित्रोथ विन्ध्याख्यः फल्गुरक्षितः ॥ २३१ ॥
गोष्ठामाहिलनामा च जितौशनसचेतनः ।
तेषां विन्ध्योऽथ मेधावी गुरून् विज्ञपयत्यदः ॥ २३२ ॥

---

१ J H शाकटं. २ J H समभ्यस्यहो० र्षीन्ममश्रुतः । ३ J H भवेत्कः. ४ J and H–स्वजनात्समुशन्नस्य भुंक्ते; ५ J & H–omit 'ददुर्बहुत……भागभूत्.'

महत्यामनुयोगस्य मण्डल्यां पाठघोषतः ।
स्खलति श्रुतपाठो मे पृथग्मे कथ्यतां ततः॥२३३॥ त्रिभिर्विशेषकम्।
सूरिराह स्वयमहं व्याख्यामि भवतः पुरः ।
व्याख्यानमण्डलीं तूर्लंघयामि महतीं कथम् ॥ २३४ ॥
तस्मात्ते वाचनाचार्यो दुर्बलः पुष्पमित्रकः ।
महामतिरुपाध्यायोऽधीष्व शीघ्रं तदग्रतः ॥ २३५ ॥
एवं कृते दिने(नैः)कैश्चित्स विन्ध्योऽध्यापको गुरून् ।
कृतांजलि(ली) रहोऽवादीत् प्रभो शृणुत मद्वचः ॥ २३६ ॥
अहं वाचनया व्यग्रः स्वाधीतं विस्मरामि यत् ।
गुणने भंगपातेन तत्खिन्नः किं करोम्यहम् ॥ २३७ ॥
यदा स्वकगृहे प्रैषि पूज्यैर्गुणनवारणात् ।
तत्कृतात्स्खलितं किंचित् तदाधीतं पुरापि यत् ॥ २३८ ॥
यद्यतःपरमेतस्य वाचनां दापयिष्यथ ।
ततो मे नवमं पूर्वं विस्मरिष्यत्यसंशयम् ॥ २३९ ॥
श्रुत्वेत्यचिन्तयत्सूरिरीदृग्मेधानिधिर्यदि ।
विस्मरत्यागमं तर्हि कोऽन्यस्तं धारयिष्यति ॥ २४० ॥
ततश्चतुर्विधः कार्योनुयोगोऽतः परं मया ।
ततोंगोपांगमूलाख्यग्रन्थच्छेदकृतागमः ॥ २४१ ॥
अयं चरणकरणानुयोगः परिकीर्तितः ।
उत्तराध्ययनाद्यस्तु सम्यग्धर्मकथापरः॥ २४२ ॥
सूर्यप्रज्ञप्तिमुख्यस्तु गणितस्य निगद्यते ।
द्रव्यस्य दृष्टिवादोऽनुयोगाश्चत्वार ईदृशः २४३ त्रिभिर्विशेषकम्।
विन्ध्यार्थमिति सूत्रस्य व्यवस्था सूरिभिः कृता ।
पुरा चैकत्रसूत्रेऽभूदनुयोगचतुष्टयम् ॥ २४४ ॥
अन्यदा मथुरापुर्यामार्यरक्षितसूरयः ।
तस्या भूमेरधिष्ठातुर्व्यन्तरस्याश्रयेऽवसन् ॥ २४५ ॥
इतश्चास्ति विदेहेषु श्रीसीमंधरतीर्थकृत् ।
तदुपास्त्यै ययौ शक्रोऽश्रौषीद्व्याख्यां च तन्मनाः ॥ २४६ ॥
निगोदाख्यानमाख्याच्च केवली तस्य तत्त्वतः ।
इन्द्रः पप्रच्छ भरते कोऽन्यस्तेषां विचारकृत् ॥ २४७ ॥
अथार्हत्प्राह मथुरानगर्यामार्यरक्षितः ।
निगोदान्मद्वदाचष्ट ततोऽसौ विस्मयं ययौ ॥ २४८ ॥

---

१ J H–तूर्णं लघयामि महती कथम्. २ J H–कश्चित् सवघ्योऽध्यापको

प्रतीतोऽपि च चित्रार्थं वृद्धब्राह्मणरूपभृत् ।
आययौ गुरुपार्श्वे स शीघ्रं हस्तौ च धूनयन् ॥ २४९ ॥
काशप्रसूनसंकाशकेशो यष्टिश्रिताङ्गकः ।
सश्वासप्रसरो विष्वग्गलच्चक्षुर्जलप्लवः ॥ २५० ॥ युग्मम् ।
एवंरूपः स पप्रच्छ निगोदानां विचारणम् ।
यथावस्थं गुरुर्व्याख्यौत्सोऽथ तेन चमत्कृतः ॥ २५१ ॥
जिज्ञासुर्ज्ञानमाहात्म्यं पप्रच्छ निजजीवितम् ।
ततः श्रुतोपयोगेन व्यचिन्तयदिदं गुरुः ॥ २५२ ॥
तदायुर्दिवसैः पक्षैर्मासैः संवत्सरैरपि ।
तेषां शतैः सहस्रैश्चायुतैरपि न मीयते ॥ २५३ ॥
लक्षाभिः कोटिभिः पूर्वैः पल्यैः पल्यशतैरपि ।
तल्लक्षकोटिभिर्नैव सागरेणापि नान्तभृत् ॥ २५४ ॥ युग्मम् ।
सागरोपमयुग्मे च पूर्णे ज्ञाते तदायुषि ।
भवान् सौधर्मसुत्रामा परीक्षां किं म ईक्षसे ॥ २५५ ॥
प्रकाश्याथ निजं रूपं मनुष्यप्रेक्षणक्षमम् ।
यथावृत्ते समाख्याते शक्रः स्थाने निजेऽचलत् ॥ २५६ ॥
प्रतीक्षिणेऽर्थिते किंचिद्यावद्यतिसमागमम् ।
रूपर्द्धिदर्शनैः साधुर्निदानेन न्यषेधयत् ॥ २५७ ॥
तथापि किंचिदाधेहि चिह्नमित्यथ सोऽतनोत् ।
वेश्म तद्विपरीतद्वाः प्रययौ त्रिदिवं ततः ॥ २५८ ॥
आयाते मुनिभिर्द्वारे नासे गुरुरुदैरयत् ।
विपरीतपथायाताजग्मुस्ते चातिविस्मृताः ॥ २५९ ॥
संभ्रमात्किं किमित्यूचिवांसस्ते बोधितास्तदा ।
गुरुभिर्गोत्रभृद्वृत्तं याथातथ्यान्निवेदितम् ॥ २६० ॥
देवेन्द्रादर्शनात् खिन्ना इव किंचित्तदावदन् ।
मन्दभाग्यैः कथं नाम दृश्यन्ते वासवा नरैः ॥ २६१ ॥
अथो विजहुरन्यत्र प्रभवो मथुरां पुनः ।
आगतो नास्तिवादी च तं गोष्टामाहिलोऽजयत् ॥ २६२ ॥
असौ तत्रैव संघेन चतुर्मासीं व्यधाप्यत ।
वादलब्धियुतस्तादृक् केनावस्थाप्यते नहि ॥ २६३ ॥
आर्यरक्षितसूरिश्च व्यमृशत् कः पदोचितः ।
दुर्बलः पुष्पमित्रोऽयं तद्विचारे समागमत् ॥ २६४ ॥
सूरीणां निजवर्गीया व्यमृशन् फल्गुरक्षितम् ।

१ J H–काशप्रशस्त. २ P–व्याख्यन्. ३ J H–तेषा सहस्रैः शतैश्चायुतैरपि.
४ J H–प्रतिक्षणे. ५ J H–ता.

गच्छाधिपत्ये तं गोष्ठामाहिलं चात्र मोहतः[1] ॥ २६५ ॥
कुम्भत्रितयमानायि तत्राचार्यैः सुपूरितम् ।
निष्पावतैलसर्पिर्भिरथ[2] तच्च विरेचितम् ॥ २६६ ॥
वल्लाः सर्वेऽपि निर्यातास्तैलमीषत्पुनः स्थितम् ।
घृतं च बहुसंलग्नं पयस्तेमामुदाहुतिम् ॥ २६७ ॥
दुर्बले[3]ऽहं मुनौ जज्ञे शतशिम्बिक[4]कुम्भवत् ।
बन्धौ[5] तैलकुटौपम्यो मातुले घृतकुम्भवत् ॥ २६८ ॥
तन्मत्पदेऽयमेवास्तु प्रतीष्टं तैर्गुरोर्वचः ।
ततो न्यवेशयत्तत्र परमाक्षरमार्हतम् ॥ २६९ ॥
ततो गुरुभिरादिष्टं दुर्बलस्य नवप्रभोः ।
मदीयमातुलभ्रात्रोर्वर्त्यं मद्वत् पितुश्च मे ॥ २७० ॥
यतयो[6]ऽन्येऽपि गच्छस्था गुरुभिः पितृसोदरौ ।
तावशिष्यन्त साध्व्यश्च वचोभिर्मधुरैस्तदा ॥ २७१ ॥
यूयं मयीव वर्तध्वं मत्तोऽपि विनयाधिकाः ।
अस्मिन् यतो(तौ) व्रताचारे स्मृते वा विस्मृतेऽपि वा ॥२७२॥
अकृते वा कृते वापि तत्सर्वं मसृषे मया ।
पुनरेष नवत्वेनाकृतेक्षूं[7]णमवाप्स्यति ॥ २७३ ॥ युग्मम् ।
ततोऽस्यापर्तितं वाक्यं कार्यमेव सदोद्यतैः ।
आमृत्यु पादमूलं च न मोक्तव्यममुष्य भोः ॥ २७४ ॥
एवं गच्छव्यवस्था तैरार्यरक्षितसूरिभिः ।
विहिता प्रान्तकाले त्वनशनं प्रत्यपादि च ॥ २७५ ॥
निर्यामिताश्च गीतार्थैर्दैवीं भुवमुपाययुः ।
पृथक्करणतः सर्वानुयोगस्यानुवर्तकाः ॥ २७६ ॥ युग्मम् ।
श्रीपुष्पमित्रसूरिश्च गच्छं वर्तयते ततः ।
गुरुतोऽभ्यधिंकां[8] चास्य समाधिमुपपादयत् ॥ २७७ ॥
स गोष्ठामाहिलस्तत्र यथाविप्रतिपत्तिभूः ।
निह्नवः सप्तमो जज्ञे ज्ञेयं शास्त्रान्तराद्धि तत् ॥ २७८ ॥

इत्यार्यरक्षितविभोर्विशदं चरित्रं
चित्रं जगत्त्रितयपावनगाङ्गवारि ।
विद्वज्जनश्रवणकुण्डलतां[9] प्रयात-
मापुष्पदन्तरुचि नन्दतु वन्दनीयम् ॥ २७९ ॥

---

१ J H–मोहितः. २ J H–रैव. ३ J H–लो. ४ J H–शम्बिक. ५ J H–वन्धो तेलकुटो. ६ J H–यतयोपि स्वगच्छस्था. ७ J H–क्ष ८ J H–ठि ९ P–का

श्रीचन्द्रप्रभसूरिपट्टसरसीहंसप्रभः श्रीप्रभा-
चन्द्रः सूरिरनेन चेतसि कृते श्रीरामलक्ष्मीभुवा ।
श्रीपूर्वर्षिचरित्ररोहणगिरौ सोमार्षिसूनोः कथा
श्रीप्रद्युम्नमुनीन्दुना विशदितः शृङ्गो द्वितीयोऽगमत् ॥ २८० ॥

ग्रन्थाग्रं० २८५ अक्षर ११ ॥ उभयं ४९२ । अक्षर २२ ॥ ॥

---

श्रीआर्यनदिलप्रबन्धः ।

आर्यरक्षितवंशीयः स श्रीमानार्यनन्दिलः ।
संसारारण्यनिर्वाहसार्थवाहः पुनातु वः ॥ १ ॥
क आर्यनन्दिलस्वामिगुणवर्णन ईशिता ।
अष्टौ कुलानि नागानां यदाज्ञां शिरसा दधुः ॥ २ ॥
यत्प्रसादेन वैरोद्या क्षमाया उपदेशतः ।
नागेन्द्रदयिता जज्ञे नाममन्त्राद्विषापहा ॥ ३ ॥
किंचित्प्रस्तौमि तद्वृत्तं गुरुणा गुरुणावृतः ।
प्रसादेन मृगाङ्कस्यो(स्य) मृगः किं नाश्नुते नभः ॥ ४ ॥
अस्ति स्वस्तिनिधिः श्रीमत्पद्मिनीषण्डपत्तनम् ।
मण्डितं सारकासारैः पद्मिनीखण्डमण्डितैः ॥ ५ ॥
तत्र वित्रासिताशेषशत्रुपक्षः क्षमापतिः ।
पद्मप्रभाभिधः पद्मासन्नपद्मनिभाननः ॥ ६ ॥
तस्य पद्मावती कान्ता कान्ताशतशिरोमणिः ।
यया देहश्रिया जिग्ये कान्ता स्वर्गपतेरपि ॥ ७ ॥
तत्रामात्रश्रियां पात्रं श्रेष्ठी श्रेष्ठकलानिधिः ।
अर्थिचातकपाथोदः पद्मदत्तोस्ति विश्रुतः ॥ ८ ॥
तस्य पद्मयशा नाम वल्लभाऽस्ति रतिप्रभा ।
पुत्रः सुत्रामपुत्राभरूपः पद्माभिधस्तयोः ॥ ९ ॥
कलाकलापसंपूर्णं तं मत्वा सार्थनायकः ।
वरदत्तः स्वकां पुत्रीं वैरोद्याख्यां व्यवाहयत् ॥ १० ॥
अन्यदा वन्यदावाग्निदुस्सहे समुपागते ।
अन्तप्रतिभुवि न्यक्षपक्षेषु जगतोऽशिवे ॥ ११ ॥
युतः स परिवारेण पुण्यनैपुण्यसंक्षयात् ।
वरदत्तः पुरं प्राप विपापः समवर्तिनः ॥ १२ ॥ युग्मम् ।
ततः प्रभृति तुच्छत्वात् श्वश्रूः शुश्रूषिताप्यलम् ।
वैरोद्यामवजानाति तां निष्पितृगृहामिति ॥ १३ ॥

---

१ J H-क्षमया २ P-ह. ३ J H-श्रा. ४ J H-च.

रूपं राढा(?)धनं तेजः सौभाग्यं प्रभविष्णुता ।
प्रभावात्पैतृकादेव नारीणां जायते ध्रुवम् ॥ १४ ॥
ततस्तद्वचनैर्दूना विनीतानां शिरोमणिः ।
साहोरात्रं भजेत्कार्श्यं कर्मोपालम्भतत्परा ॥ १५ ॥
अन्येद्युः साथ भोगीन्द्रस्वप्नसंसूचितं तदा ।
उवाह रत्नगर्भेव रत्नं गर्भे शुभाद्भुतम् ॥ १६ ॥
तृतीये मासि पूर्णे च दोहदं द्रोहदं द्विषाम् ।
बभार सा रसत्वाढ्या दृढं पायसभोजने ॥ १७ ॥
अथार्यनन्दिलः सूरिरुद्याने समवासरत् ।
साधुवृन्दवृतः सार्द्धनवपूर्वधरः प्रभुः ॥ १८ ॥
तस्यामापन्नसत्वायामपि श्वश्रूरदक्षिणा ।
वदन्ती कद्वदा यत्किंचिदपि प्रतिकूलति ॥ १९ ॥
अस्याः कथं सुतो भावी निर्भाग्यैकशिरोमणेः ।
सुतैव भाविनी निष्पित्र्या या दारिद्र्यदीर्घिका ॥ २० ॥
इत्थं दुर्वचनैर्दूना साथ प्रभुपदान्तिकम् ।
आयाद्विमृष्य यच्चैत्यगृहं पितृगृहं[१] न तु ॥ २१ ॥
अभिवन्द्याथ सावादीदुदश्रुः प्राग्भवे मया ।
प्रभो विराधिताम्बा किं यन्मं[२]य्यति विरोधिनी ॥ २२ ॥
प्रभुराह पुराकर्मकृते दुःखसुखे जने ।
तत् किमन्यस्य दोषो हि दीयतेऽत्र विवेकिभिः ॥ २३ ॥
मानुषे दुर्लभे लब्धे सुखदा श्लाघ्यते क्षमा ।
यदस्यामादृतायां ते सर्वं भावि शुभं शनैः ॥ २४ ॥
ज्ञानाज्ज्ञातो मया वत्से दोहदस्तव पायसे ।
[३]अवतीर्णः स पुण्येन सोपि संपूरयिष्यते ॥ २५ ॥
इति वागमृतैस्तस्याविध्यायन्मन्युपावकः(?) [४]।
शीतीभूता ययौ गेहे स्मरन्ती तद्वचो हृदि ॥ २६ ॥
पुण्डरीकतपश्चैत्रपौर्णि(र्णे)मास्यामुपोषिता ।
व्यधात्पद्मयशास्तस्योद्यापनं च प्रचक्रमे ॥ २७ ॥
तद्दिने पा[५]यसापूर्णः प्रदीयेत पतद्ग्रहः ।
गुरूणां समधर्माणां वात्सल्यं क्रियतेऽथ सा ॥ २८ ॥
तस्मिन्कृते [६]समस्तेऽपि कदर्यान्नं ददे तदा ।
श्वश्र्वावज्ञावशाद्दध्वा धिग्दर्पं गुणदूषकम् ॥ २९ ॥

१ J H—प्रतिगृहं नतु. २ J & H—मय्यपि. ३ P—अवतीर्णनूपुण्येन. ४ P—मन्युपावका. ५ J H—पयसा पूर्ण.. ६ J H—समस्तोपि.

वधूर्दोहदमाहात्म्यार्त्किचिच्छेषं च पायसम्।
वस्त्रे बद्ध्वा घटे क्षिप्त्वा जलायेव बहिर्ययौ ॥ ३० ॥
कुम्भं मुक्त्वा तरोर्मूले यावद्याति जलाश्रये।
अंह्रिशौचाय सद्वृत्ता क्षैरेयीस्वादतन्मनाः ॥ ३१ ॥
ततोऽलिञ्जरनागेन्द्रकान्ताप्यागाद्रसातलात्।
भ्रमन्ती पायसे लुब्धा तदैक्षिष्ट घटे च सा ॥ ३२ ॥
वस्त्रखण्डात्समाकृष्य बुभुजे चाथ तत्तया।
पुनर्यथागतं प्रायात्पातालं नागवल्लभा ॥ ३३ ॥
प्रत्यावृत्तौ च वैरोट्या तदप्रेक्ष्य घटान्तरा।
न शुशोच न चाकुप्यत्सा सती किंत्विदं जगौ ॥ ३४ ॥
येनेदं भक्षितं भक्ष्यं पूर्यतां तन्मनोरथः।
याद्दग्ममेति शान्तान्तःकरणेत्याशिषं ददौ ॥ ३५ ॥
इतश्च पन्नगेन्द्रस्य कान्तया पत्युरग्रतः।
निवेदितेऽवधेर्ज्ञात्वा सर्वं तां स विगीतवान् ॥ ३६ ॥
सानुतापा ततः सापि तदुपघ्नगृहस्थितेः।
स्त्रियः स्वप्नं ददौ तस्याः क्षमया रञ्जिता सती ॥ ३७ ॥
यदलिंजरनागस्य प्रियाहं तनया च मे।
वैरोट्या पायसं दद्या अस्या दोहदपूरकम् ॥ ३८ ॥
तथा च मद्वचः कथ्यं तेवाहं यत्पितुर्गृहम्।
ध्रुवं निवारयिष्यामि श्वश्रूभवपराभवम् ॥ ३९ ॥
भोजिता पायसं भक्त्या तथा सा पुण्यवर्णिनी।
संपूर्णदोहदप्रीताजीजनत्सुतमद्भुतम् ॥ ४० ॥
नागकान्तापि सूते स्म नागानां शतमुत्तमम्।
वर्द्धन्ते तेजसा तेऽपि तेजःप्रतिनिभप्रभाः ॥ ४१ ॥
वैरोट्या नागिनीं दध्यौ नामारोपणिपर्वणि।
नन्दनस्य ततोम्बाया आदेशात्पन्नगोत्तमैः ॥ ४२ ॥
वयं पितृगृहं तस्याः प्रतिश्रुत्येति मानुषे।
लोके तैरेत्य तद्गेहमलञ्चक्रे ससंमदैः ॥ ४३ ॥ युग्मम्।
केचिन्मतङ्गजारूढा अश्वारूढाश्च केचन।
सुखासनगताः केचित्केचिन्नरविमानगाः ॥ ४४ ॥

---

१ J H—जलाय च. २ J H—क्षैरयी. ३ P on the margin दोहदात् for भ्रमंती; J H पायसलुब्धा. ४ J H—प्रत्यावृत्त्या. ५ J H—करणात्या॰. ६ J H ततश्च—निवेदितोऽवधे॰. ७ J H—सानुतप्य तत. सान्हेस्थिते. ८ J H प्रियाहमनया॰. ९ J H—तथाहं यत् १० J H—तेज. प्रतिनिभाप्रभाः. ११ J & H—नागारोपण.

वक्रियातिशयाद्रूपशतभाजः सुरा अथ ।
तद्वेश्म संकटं चक्रुः पाटकं चापि पत्तनम् ॥ ४५ ॥
केपि वाला घटे क्षिप्त्वा अपिधानावृतास्यके ।
रक्षार्थमंचयो सर्पा वैरोट्याया: समर्पिताः ॥ ४६ ॥
वधूपितृकुले तस्मिन्नायाते श्रीकुलाद्भुते ।
श्वश्रूः स्नानादिभिस्तेषां सत्कर्तुमुपचक्रमे ॥ ४७ ॥
अहो लक्ष्मीवतामेव पक्षः श्रेयान् जयीजने ।
यज्जातेयं विगीता सा तन्निजागौरवास्पदम् ॥ ४८ ॥
कयापि कर्मकर्याथ पर्वकर्मविहस्तया ।
अश्मन्तकस्थितस्थालीमुखे नागघटो ददे ॥ ४९ ॥
दृष्ट्वा व्याकुलया वैरोट्यया चोत्तारितो घटः ।
स्नातया जननी वाक्यात्केशौघ्रैः सोऽभ्यषिच्यत ॥ ५० ॥
ते तत्प्रभावतः स्वच्छास्तस्थुरेकः पुनः शिशुः ।
अस्पर्शाज्जलबिन्दूनां विपुच्छोऽजायत क्षणात् ॥ ५१ ॥
स्खलिते यत्र तत्रापि क्षुतादौ वदति स्म सा ।
बण्डो जीवत्विमां वाचं तस्य स्नेहेन मोहिता ॥ ५२ ॥
बन्धवो नागरूपास्ते सर्वेभ्यो ददुरद्भुतम् ।
क्षौमसौवर्णरत्नौघमुक्ताभरणमण्डलम् ॥ ५३ ॥
तत्र पर्वणि संपूर्णे यथास्थानं च ते ययुः ।
नागास्तेन प्रभावेण गौरव्यासाभवद्गृहे ॥ ५४ ॥
अन्यदालिञ्जरः पुत्रान्नागराजो निभालयत् ।
बण्डं ददर्श कोपश्च चक्रेऽवयवखण्डनात् ॥ ५५ ॥
तज्ज्ञात्वावधिना गेहे वैरोट्यायाः समाययौ ।
दंशमस्या विधास्यामि ध्रुवं मन्नन्दनद्रुहः ॥ ५६ ॥
इति संश्रवमाकर्ण्य पत्युस्तद्रक्षणोद्यता ।
समागान्नागिनी भक्ता वैरोट्येति प्रवादिनी ॥ ५७ ॥
गिरेति श्रुतया पत्न्याः किञ्चिच्छान्तः परीक्षितुम् ।
अन्तर्गृहं कपाटस्य पश्चाद्गूढतनुः स्थितः ॥ ५८ ॥
प्रदोषतामसात्किंचिद्दर्दरिं स्थितमग्रतः ।
अदृष्ट्वा रभसा यान्ती सा गुल्फे पीडिता भृशम् ॥ ५९ ॥
वण्डो जीवत्विति ततो वादिनी फणभृत्पतिम् ।
सद्यः संतोषयामास तुष्टोऽसौ नूपुरे ददौ ॥ ६० ॥

१ P–चापि पत्तनम्. २ J H–मंचया सर्पा. ३ J H–च्चोरितो घटः । ४ J H–केशाभि॰. ५ J H–तत. प्रभावतः स्वस्था. ६ J H–प्रभारन्वे. ७ J H–स्तद्रहणो. ८ J H–दरिरि॰.

यातायातं चानुजज्ञे तस्याः पातालवेश्मसु ।
तेन नागाश्च तद्गेहमायान्त्यपि यथा तथा ॥ ६१ ॥
ततो बालाबलामुख्योऽभवल्लोकोभयभ्रमिः ।
इति ख्यातं च तद्गेहं दुर्गमं नागमन्दिरम् ॥ ६२ ॥
विज्ञप्तं पद्मदत्तेन गुरूणां तद्यथातथम् ।
जगदुस्तेच नागानां स्ववध्वा ख्यापयेरिदम् ॥ ६३ ॥
अस्मद्गृहे न वस्तव्यं जनानुग्रहकाम्यया ।
वस्तव्यं वा न दृष्टव्यमिति कृत्यं मदाज्ञया ॥ ६४ ॥
वैरोट्यायाः समादिष्टं त्वं गच्छाशीविषाश्रये ।
वक्तव्या नागिनीपुत्रा उल्लङ्घ्याज्ञा हि मे नहि ॥ ६५ ॥
तया गत्वा च पाताले ज्ञापिताः फणवद्भपाः ।
आज्ञां प्रभोस्ततो मान्यामीषामाख्येयमद्भुता ॥ ६६ ॥
जीविताम्नागिनीनागशतं चास्यास्तथा पिता ।
आलिखरश्च नागेन्द्रो विषज्वालाप्लुताम्बरः ॥ ६७ ॥
अनाथाहंच सन्नाथा कृता येन सनूपुरौ ।
चरणौ रचिताविस्याशिषं प्रादात्सुधोर्मिभाम् ॥ ६८ ॥
छत्रध्वजावृतिध्यानाद्देवदेवजिनेशितुः ।
पन्नगप्रेतभूताग्निचौरव्यालभयं नहि ॥ ६९ ॥
डाकिनीशाकिनीवृन्दं योगिन्यश्च निरन्तरम् ।
न विद्रवन्ति जैनाज्ञा यस्य मूर्धनि शेखरः ॥ ७० ॥
यश्च तस्य गुरोराज्ञां वैरोट्यायास्तथा स्तवम् ।
नित्यं ध्यायति तस्य स्यान्नैव क्षुद्रभवं भयम् ॥ ७१ ॥
गुडाज्यपायसैः स्वाद्यं बलिं ढौकयते च यः ।
जिनस्य जैनसाधोश्च दत्ते सा तं च रक्षति ॥ ७२ ॥
उपदेशं प्रभोरेनमाकर्ण्यान्येऽपि भोगिनः ।
उपशान्तास्तथा पूज्या वैरोट्याख्याभवत्सती ॥ ७३ ॥
नागदत्तश्च तत्पुत्रा भाग्यसौभाग्यरङ्गभूः ।
तत्कुलोन्नतिमाधत्त धर्मकर्मणि कर्मठः ॥ ७४ ॥
संसारानित्यतामन्यदिने सद्गुरुगीर्भरात् ।
संभाव्य नागदत्तं स्वे पदेन्याधाद्गुणोज्ज्वलम् ॥ ७५ ॥
पद्मदत्तः प्रियापुत्रसहितो जगृहे व्रतम् ।
उग्रं ततस्तपस्तप्त्वा सौधर्मे ससुतो ययौ ॥ ७६ ॥

---

१ J H–ततो बलोबला०. २ J H–स्तेन नागाना स्ववधा०. ३ P–वास्तव्यं ४ J H–माज्ञा मिषामाख्यैय. ५ P–वैरोट्यायास्तव. ६ J H–क्षुन्नभव. ७ J H–उपदेशांतास्त०. ८ J–वैरोयाख्यान०. ९ P–न्यास्थद्.

तथा पद्मयशाः पूज्यादेशाद्वध्वा तया सह ।
मिथ्यादुष्कृतमाधाय देवी तत्रैव साभवत् ॥ ७७ ॥
वैरोट्यापि फणीन्द्राणां ध्यानाद्धर्मोद्यता सती ।
मृत्वाभूद्धरणेन्द्रस्य देवी श्रीपार्श्वसेवितुः ॥ ७८ ॥
सापि प्रभोर्भक्तिमतां चक्रे साहाय्यमद्भुतम् ।
विषवह्न्यादिभीतानां दध्यात्युपशमं ध्रुवम् ॥ ७९ ॥
श्रीआर्यनन्दिलः स्वामी वैरोट्यायाः स्तवं तदा ।
नमिऊणजिणं पासमिति मन्त्रान्वितं व्यधात् ॥ ८० ॥
एकचित्तः पठेन्नित्यं त्रिसंध्यं य इमं स्तवम् ।
विषाद्युपद्रवाः सर्वे तस्य न स्युः कदाचन ॥ ८१ ॥

ये वैरोट्याख्यानमेतत्पवित्रम्
क्षान्त्यक्षीणश्रेयसां मूलशाला ।
श्रुत्वा मर्त्या ये क्षमामाद्रियेरन्
तेषां स्वर्गो नापि मोक्षो दुरापः ॥ ८२ ॥

श्रीचन्द्रप्रभसूरिपट्टसरसीहंसप्रभः श्रीप्रभा-
चन्द्रः सूरिरनेन चेतसि कृते श्रीरामलक्ष्मीभुवा ।
श्रीपूर्वर्षिचरित्ररोहणगिरौ श्रीनन्दिलाख्यानकं
श्रीप्रद्युम्नमुनीन्दुना विशदितः शृङ्गस्तृतीयोऽजनि ॥ ८३ ॥

प्रभो श्रीप्रद्युम्नाभिनवरसधाराधरविना-
भवन्तं सद्धर्वक्षरविषयतृष्णातरलितम् ।
सुलम्भान्यश्रीमद्भुवननिरपेक्षं विशदनै-
र्गिरां सारैः शिष्यं ननु धिनु निजं चातकशिशुम् ॥ ८४ ॥

अक्षर २४ ॥ उभयं ५७७ ॥

---

श्रीकालकसूरिप्रबन्धः ४

श्रीसीमंधरतीर्थेशविदितोऽनणुतो गुणान् ।
कुतश्चिदपि सोऽव्याद्वः कालकः सूरिकुञ्जरः ॥ १ ॥
प्राच्यैर्बहुश्रुतैर्वृत्तं यस्य पर्युषणाश्रयम् ।
आदृतं कीर्त्यते किं न शकटी शकटानुगा ॥ २ ॥

---

१ P–पद्मजसा. २ P–दैवी. ३ J H–मुनीद्राणां. ४ P–शुम्नाभिप-नरस. ५ J H–विदद्तै ६ P–गिरासारैः P–ग्रन्थाग्र उभय ५७७ अ ४८ इति श्रीनदिलाचार्यप्रबन्धस्तृतीयः । ७ J H–नऽनणुनोगुणान.

श्रीधारावासमित्यस्तिनगरं नगरोजयी (?) ।
द्विजिह्वास्यसमुद्गीर्णो यत्र साधुवचोऽमृतैः ॥ ३ ॥
आशशाङ्कं बलं वाढ्या (?) महाबलभरोच्छ्रिता ।
कीर्तिः पताकिका यस्याक्रान्तव्योमा गुणाश्रया ॥ ४ ॥ युग्मम् ।
श्रीवीरसिंह इत्यस्ति राजा विक्रमराजितः ।
यत्प्रतापो रिपुस्त्रीणां पत्रवल्लीरशोषयत् ॥ ५ ॥
तस्य श्रीशेषकान्तेव कान्तास्ति सुरसुन्दरी ।
उत्पत्तिभूमिर्भद्रस्य महाभोगविराजिता ॥ ६ ॥
जयन्त इव शक्रस्य शशाङ्क इव वारिधेः ।
कालकोकालकोदण्डखण्डितारिः (?) सुतोऽभवत् ॥ ७ ॥
सुता सरस्वती नाम्ना ब्रह्मभूर्विश्वपावना ।
यदागमात्समुद्रोऽपि गुरुः सर्वाश्रयोऽभवत् ॥ ८ ॥
कालकोऽश्वकलाकेलिकलनायान्यदा बहिः ।
पुरस्य भुवमायासीदनायासी हयश्रमे ॥ ९ ॥
तत्र धौरितकात् प्लुत्या वल्गितेनापि वाहयन् ।
उत्तेजिताल्सद्गत्या हयानुत्तेरितादपि ॥ १० ॥
श्रान्तस्तिमितगन्धर्वो गन्धर्व इव रूपतः ।
अशृणोन्मसृणोदारं स्वरमाराममध्यतः ॥ ११ ॥
अथाह मन्त्रिणं राजपुत्रः कीदृक् स्वरो ह्यसौ ।
मेघगर्जितगम्भीरः कस्य वा ज्ञायतां ततः ॥ १२ ॥
व्यजिज्ञपत्स विज्ञाय नाथ सूरिर्गुणाकरः ।
प्रशान्तपावनीं मूर्तिं विभ्रद्धर्मं दिशत्यसौ ॥ १३ ॥
विश्राम्यद्भिर्नृपारामे श्रूयतेऽस्य वचोऽमृतम् ।
अस्त्वेवमिति सर्वानुज्ञाते तत्राभ्यगादसौ ॥ १४ ॥
गुरुं नत्वोपविष्टे च विशेषादुपचक्रमे ।
धर्माख्यां योग्यतां ज्ञात्वा तस्य ज्ञानोपयोगतः ॥ १५ ॥
धर्मार्हद्गुरुतत्त्वानि सम्यग्विज्ञाय संश्रयः ।
ज्ञानदर्शनचारित्ररत्नत्रयविचारकः ॥ १६ ॥
धर्मो जीवदयामूलः सर्वविद्देवताजिनः ।
ब्रह्मचारी गुरुः संगभङ्गभूरागभङ्गभित् ॥ १७ ॥

---

१ P-श्रीधरावास. २ P-आशाकंधा(ठा)[illegible] [illegible]
३ P-सैरिसिं. ४ J H-कातरलासि० ५ J H कान्तेन[illegible]. ६ J [illegible]
[illegible]पोभुला द गते० H-[illegible]भुला [illegible] [illegible] [illegible] ७ P-[illegible]
m argin [illegible].

व्रतपञ्चकसंवीतो यतीनां संयमाश्रितः ।
दशप्रकारसंस्कारो धर्मः कर्मच्छिदाकरः ॥ १८ ॥
य एकदिनमप्येकचित्त आराधयेदमुम् ।
मोक्षं वैमानिकत्वं वा स प्राप्नोति न संशयः ॥ १९ ॥
अथो गृहस्थधर्मश्च व्रतद्वादशकान्वितः ।
दानशीलतपोभावभङ्गीभिरभितः शुभः ॥ २० ॥
स सम्यक्पाल्यमानश्च शनैर्मोक्षप्रदो नृणाम् ।
जैनोपदेश एकोऽपि संसाराम्भोनिधेस्तरी ॥ २१ ॥
श्रुत्वेत्याह कुमारोऽपि मंगिनी मंगिनीं (?) दिशः ।
दीक्षां मोक्षं यथाज्ञानवेलाकूलं लभे लघु ॥ २२ ॥
पितरौ स्वावनुज्ञाप्यागच्छतस्तौ²स्तु चिन्तितम् ।
अत्यादरेण तत्कृत्वागाज्जाम्या सहितस्ततः ॥ २३ ॥
³प्रव्रज्यादायि तैस्तस्य तया युक्तस्य च स्वयम् ।
⁴अधीती सर्वशास्त्राणि स प्रज्ञातिशयादभूत् ॥ २४ ॥
⁵स्वपट्टे कालकं योग्यं प्रतिष्ठाप्य गुरुस्ततः ।
श्रीमान् गुणाकरः सूरिः प्रेत्यकार्याण्यसाधयत् ॥ २५ ॥
अथ श्रीकालकाचार्यो विहरन्नन्यदा ययौ ।
⁶पुरीमुज्जयिनीं वाह्यारामेऽस्याः समवासरत् ॥ २६ ॥
मोहान्धतमसे तत्र मग्नानां भव्यजन्मिनाम् ।
सम्यगर्थप्रकाशेऽभूत्प्रभूष्णुर्मणिदीपवत् ॥ २७ ॥
तत्र श्रीगर्दभिल्लाख्यः पुर्यां राजा महाबलः ।
कदाचित्पुरवाह्योर्व्यां कुर्वाणो राजपाटिकाम् ॥ २८ ॥
कर्मसंयोगतस्तत्र व्रजन्तीमैक्षत स्वयम् ।
⁷जामिं कालकसूरीणां काको दधिघटीमिव ॥ २९ ॥ युग्मम् ।
हा रक्ष रक्ष सोदर्य क्रन्दन्तीं करुणं स्वरम् ।
अपाजीहरदत्युग्रकर्मभिः पुरुषैः स ताम् ॥ ३० ॥
साध्वीभ्यस्तत्परिज्ञाय कालकप्रभुरप्यथ ।
स्वयं राजसमज्यायां गत्वावादीत्तदग्रतः ॥ ३१ ॥
वृत्तिर्विधीयते कच्छे रक्षायै फलसंपदः ।
फलानि भक्षयेच्चैवाख्येयं कस्याग्रतस्तथा ॥ ३२ ॥

---

१ J–मगिनी दिशा, H मगिनी मगिनी दिशा. २ P–तस्ते. ३ P–प्रवृज्या. ४ J H–अधीत॰. ५ J H–स्वे॰ ६ J H–पुरिमुज्जयिनीगाग॰. ७ P–जामिकालक॰. ८ J H–omit अथ. ९ J H–मध्यनिर्मध्येन.

राजन् समग्रवर्णानां दर्शनानां च रक्षकः ।
त्वमेव तन्न ते युक्तं दर्शनिव्रतलोपनम् ॥ ३३ ॥
उन्मत्तकभ्रमोन्मत्तवदुन्मत्तो नृपाधमः ।
न मानयति गामस्य म्लेच्छ(व)द्धसते तथा ॥ ३४ ॥
संघेन मन्त्रिभिः पौरैरपि विज्ञापितो दृढम् ।
अवाजीगणदारूढो मिथ्यामोहे गलन्मतिः ॥ ३५ ॥
प्राक्क्षात्रतेज आचार्य उन्निद्रमभजत्ततः ।
प्रतिज्ञां विदधे घोरां तदा कातरतापिनीम् ॥ ३६ ॥
जैनापभ्राजिनां ब्रह्मबालप्रमुखघातिनाम् ।
अर्हद्बिम्बविहन्तॄणां लिप्येहं पाप्मना स्फुटम् ॥ ३७ ॥
न चेदुच्छेदये शीघ्रं सपुत्रपशुबान्धवम् ।
अन्यायकर्दमक्रोडं विब्रुवन्तं नृपब्रुवम् ॥ ३८ ॥ युग्मम् ।
असंभाव्यमिदं तत्र सामान्यजनदुष्करम् ।
उक्त्वा निष्क्रम्य दम्भेनोन्मत्तवेषं चकार सः ॥ ३९ ॥
एकाकी भ्रमति सायं चतुष्के चत्वरे त्रिके ।
असम्बद्धं वदन् द्वित्रिश्चेतनाशून्यवत्तदा ॥ ४० ॥
गर्द्दभिल्लो नरेन्द्रश्चेत्ततस्तु किमतः परम् ।
यदि देशः समृद्धोस्ति ततस्तु किमतः परम् ॥ ४१ ॥
वदन्तमिति तं श्रुत्वा जनाः प्राहुः कृपाभरात् ।
स्वस्रुर्विरहितः सूरिस्तादृग्ग्रहिलतां गतः ॥ ४२ ॥ युग्मम् ।
दिनैः कतिपयैस्तत्सान्निध्ययावेक एव सः ।
पश्चिमां दिशमाश्रित्य सिन्धुतीरमगाच्छनैः ॥ ४३ ॥
शाखिदेशश्च तत्रास्ति राजानस्तत्र शाखयः ।
शकापराभिधाः सन्ति नवतिः षड्भिरर्गला ॥ ४४ ॥
तेषामेकोधिराजोस्ति सप्तलक्षतुरङ्गमः ।
तुरङ्गायुतमानाश्चापरेपि स्युर्नरेश्वराः ॥ ४५ ॥
एको माण्डलिकस्तेषां प्रेक्षि कालकसूरिणा ।
अनेककौतुकप्रेक्षाहृतचित्तः कृतोऽथ सः ॥ ४६ ॥
असौ विश्वासतस्तस्य वयस्यति तथा नृपः ।
तं विना न रतिस्तस्य तं वहूकैर्यथाक्षणम् ॥ ४७ ॥
सभायामुपविष्टस्य मण्डलेशस्य सूरिणा ।
सुखेन तिष्ठतो गोष्ठ्यां राजदूतः समाययौ ॥ ४८ ॥
प्रवेशितश्च विज्ञप्तेः प्रतीहारेण सोऽवदत् ।
प्राचीनरूढितो भक्त्या गृह्यतां राजशासनम् ॥ ४९ ॥

---

१ J H—दर्शनि. २ J H—छेन्द हसते. ३ J H—तेनता: शून्य.
४ P—शाका: पराभिधा: ५ J H—विनार्

असिधेनुं च भूयोऽथ तद्गृहीत्वाशु मस्तके ।
ऊर्ध्वीभूयाथ संयोज्य वाचयामास च स्वयम् ॥ ५० ॥
इति कृत्वा विवर्णास्यो वक्तुमप्यक्षमो नृपः ।
विलीनचित्तः श्यामाङ्गो निःशब्दाषाढमेघवत् ॥ ५१ ॥
पृष्टश्चित्रान्मुनीन्द्रेण प्रसादे स्वामिनः स्फुटे ।
आयाते प्राभृते हर्षस्थाने किं विपरीतता ॥ ५२ ॥
तेनोचे मित्र कोपोऽयं न प्रसादः प्रभोर्ननु ।
प्रेष्यं मया शिरश्छित्वा स्वीयं शस्त्रिकयानया ॥ ५३ ॥
एवं कृते च वंशे मे प्रभुत्वमवतिष्ठते ।
नो चेद्राष्ट्रस्य राज्यस्य विनाशः समुपस्थितः ॥ ५४ ॥
शस्त्रिकायामथैतस्यां षण्णवत्यङ्कदर्शनात् ।
मन्ये षण्णवतेः सामन्तानां क्रुद्धो धराधिपः ॥ ५५ ॥
सर्वेऽपि गुप्तमाहूय सूरिभिस्तत्र मेलिताः ।
तरीभिः सिन्धुमुत्तीर्य सुराष्ट्रान्ते समाययुः ॥ ५६ ॥
घनागमे समायाते तेषां गतिविलम्बके ।
विभज्य षण्णवत्यंशैस्तं देशं तेऽवतस्थिरे ॥ ५७ ॥
राजानस्ते तथा शूरा वाहिनीव्यूहबुद्धिना ।
राजहंसद्रुहा भूयस्तरवारितरङ्गिणा ॥ ५८ ॥
साध्वी साध्वी त्वया पाप श्येनेन चटकेव यत् ।
समारुध्यन्त मेघेन वलिष्टेनेव शत्रुणा ॥ ५९ ॥
निर्गमय्यासनादुग्रदु(मु)पसर्गमुपस्थितम् ।
प्रापुर्घनात्ययं मित्रमिवाब्जास्यविकाशकम् ॥ ६० ॥
परिपक्किमवाक्शालिः प्रसीदत्सर्वतोमुखः ।
अभूच्छरदृतुस्तेषामानन्दाय सुधीरिव ॥ ६१ ॥
सूरिणाथ सुखं राजा प्रयाणेऽजल्प्यत स्फुटम् ।
स प्राह शंबलं नास्ति येन नो भावि शंयतम् ॥ ६२ ॥
श्रुत्वेति कुम्भकारस्य गृहं पश्यन् जगाम सः ।
वह्निना पच्यमानं चेष्टिकापाकं ददर्श स ॥ ६३ ॥
कनिष्टिकाननं पूर्णं चूर्णयोगस्य [illegible] ।
आक्षेपात्तत्र चिक्षेपालक्ष्यशक्तिमनाः गुरुः ॥ ६४ ॥
निर्ध्यातेऽत्र यथायत्र [illegible] ।
[illegible] ॥ ६५ ॥

तथेत्यादेशमाधाय तेऽकुर्वन् पर्वं सर्वतः ।
प्रस्थानकं गजाश्वादिसैन्यपूजनपूर्वकम् ॥ ६६ ॥
पञ्चालतलाटदेशेशभूपान् जित्वाथ सर्वतः ।
शका मालवसंधिं ते प्रापुराक्रान्तविद्विषः ॥ ६७ ॥
श्रुत्वापि बलमागच्छन् विद्यासामर्थ्यगर्वितः ।
गर्दभिल्लनरेन्द्रो न पुरीदुर्गमसज्जयत् ॥ ६८ ॥
अथाप शाखिसैन्यं च विशालातलमेदिनीम् ।
पतङ्गसैन्यवत्सर्वं प्राणिवर्गभयंकरम् ॥ ६९ ॥
मध्यस्थो भूपतिः सोऽथ गर्दभीविद्यया बलैः ।
नादर्युन्मादरीतिस्थः सैन्यं सज्जयतिस्म न ॥ ७० ॥
कपिशीर्षेषु नोढिं वा कोट्टकोणेषु नग्रसाः ।
विद्याधरीषु नो काण्डपूरणं चूरणं द्विषाम् ॥ ७१ ॥
न वा भटकपाटानि पुःप्रतोलीष्वसज्जयत् ।
इति चारैः परिज्ञाय सुहृद्रूपं जगौ गुरुः ॥ ७२ ॥
अनावृतं समीक्ष्येदं दुर्गमाभूरनुद्यमः ।
यदष्टमीचतुर्दश्योरर्चयत्येष गर्दभीम् ॥ ७३ ॥
अष्टोत्तरसहस्रं च जपत्येकाग्रमानसः ।
शब्दं करोति जापान्ते विद्या सा रासभी निभात् ॥ ७४ ॥
तं बू (फू)त्कारस्वरं घोरं द्विपदो वा चतुष्पदः ।
यः शृणोति स वक्त्रेण फेनं मुंचन् विपद्यते ॥ ७५ ॥
अर्द्धतृतीयगव्यूत(ति)मध्ये स्थेयं न केनचित् ।
आवासान् विरलान् दत्वा स्थातव्यं सबलैर्नृपैः ॥ ७६ ॥
इत्याकर्ण्य कृते तत्र देशे कालकसद्गुरुः ।
सुभटानां शतं सार्ष्टं प्रार्थयच्छब्दवेधिनाम् ॥ ७७ ॥
स्थापिताः स्वसमीपे ते लब्धलक्षाः सुरक्षिताः ।
खरकाले मुखं तस्या बभ्रु (भ्रौ)र्वा(बा)णैर्निषङ्गवत् ॥ ७८ ॥
सा मूर्ध्नि गर्दभिल्लस्य कृत्वा विण्मूत्रमीर्ष्यया ।
हत्वा च पादघातेन रोषेणान्तर्दधे खरी ॥ ७९ ॥
अबलोयमिति ख्यापयित्वा तेषां पुरो गुरुः ।
समग्रसैन्यमानीयमानीतां दुर्गमाविशत् ॥ ८० ॥
पातयित्वा धृतो बद्ध्वा प्रपात्य च गुरोः पुरः ।
गर्दभिल्लो भटैर्मुक्तः प्राह तं कालको गुरुः ॥ ८१ ॥

---

१ P–प्रास्थानिक. २ P–राष्ट्रेश. ३ J H–तलमागच्छन्. ४ J H–विशालतात. ५ P–विद्ययाबले. ६ J H–अर्द्धतृतीये. ७ P–मानीतदुर्ग ८ P–कालक प्रभु..

बलभिद्भानुरुल्लासवता चाशुगतीभृता ।
नीता गुरुविनीतापि तत्कर्मकुसुमं ह्यदः ॥ ८२ ॥
फलं तु नरकः प्रेत्य तद्विबुध्याधुनापि हि ।
उपशान्तः समादत्स्व प्रायश्चित्तं शुभावहम् ॥ ८३ ॥
आराधय परं लोकं भविता रुचितं निजम् ।
विधेहीति श्रुतेर्दूनस्त्यक्को ऽरण्ये ततो ऽभ्रमत् ॥ ८४ ॥
व्याघ्रेण भक्षितो भ्राम्यन् दुर्गतो दुर्गतिं गतः ।
तादृक्साधुद्रुहामीदृक् गतिरित्यल्पकं फलम् ॥ ८५ ॥
सूरेरादेशतो मित्रं भूयः स्वामी ततो ऽभवत् ।
विभज्य देशमन्ये ऽपि तस्थुः शाखिनराधिपाः ॥ ८६ ॥
आरोपिता व्रते साध्वी गुरुणाथ सरस्वती ।
आलोचितप्रतिक्रान्ता गुणश्रेणिमवाप च ॥८७ ॥
विद्यादेव्यो यतः सर्वा अनिच्छुस्त्रीव्रतच्छिदः ।
कुप्यन्ति रावणो ऽपीदृक्सीतायां न दधौ हठम् ॥ ८८ ॥
एतादृक् शासनोन्नत्या जैनतीर्थं प्रभावयन् ।
बोधयन् शाखिराजांश्च कालकः सूरिराड् बभौ ॥ ८९ ॥
शकानां वंशमुच्छेद्य कालेन कियतापि हि ।
राजा श्रीविक्रमादित्यः सार्वभौमोपमो ऽभवत् ॥ ९० ॥
स चोन्नतमहासिद्धिः सौवर्णपुरुषोदयात् ।
मेदिनीमनृणां कृत्वाचीकरद्वत्सरं निजम् ॥ ९१ ॥
ततो वर्षशते पञ्चत्रिंशता साधिके पुनः ।
तस्य राज्ञो ऽन्वयं हत्वा वत्सरः स्थापितः शकैः ॥ ९२ ॥
इति प्रसङ्गतो ऽजल्पि प्रस्तुतं प्रोच्यते ह्यदः ।
श्रीकालकः प्रभुर्देशे विजह्रे राजपूजितः ॥ ९३ ॥
इतश्चास्ति पुरं लाटललाटतिलकप्रभम् ।
भृगुकच्छं नृपस्तत्र बलमित्रो ऽभिधानतः ॥ ९४ ॥
भानुमित्रोऽग्रजन्मासीत्स्वस्रीयः कालकप्रभोः ।
स्वसा तयोश्च भानुश्री बलभानुश्च तत्सुतः ॥ ९५ ॥ युग्मम् ।
अन्यदा कालकाचार्यवृत्तं तैर्लोकतः श्रुतम् ।
तोषादाहूतये मन्त्री तैर्निजः प्रेष्यत प्रभोः ॥ ९६ ॥
विहरन्तस्ततस्ते चाप्रतिबद्धं विबुद्धये ।

---

१ P–चाशुगभी०. H also but here ती is correction of भी. २ J H–उपशान्तसमादित्स्व. ३ J H–आराधकः परं लोकम्. ४ J & H–व for च. ५ J H–विद्यादेव्यो जिन सर्वा अनिच्छु स्त्रीव्रतच्छिदः. ६ P–श्रीकालकप्रभु. ७ J H–चार्यवृत्तं ते लोकत:. ८ J & H मन्त्रि- निर्जै. and मन्त्रितैर्निजः. respectively.

आयगुर्नगरे तत्र यतिश्च समवासरन् ॥ ९७ ॥
राजा श्रीबलमित्रोऽपि ज्ञात्वाभिमुखमभ्यगात् ।
उत्सवातिशयात्सूरिः प्रवेशं विदधे मुदा ॥ ९८ ॥
उपदेशामृतैस्तत्र सिञ्चन्भव्यानसौ प्रभुः ।
पुष्करावर्तवत्तेषां विश्वं तापमनीनशत् ॥ ९९ ॥
श्रीमच्छकुनिकातीर्थस्थितं श्रीमुनिसुव्रतम् ।
प्रणम्य तच्चरित्राख्यादिभिर्नृपमबोधयत् ॥ १०० ॥
अन्येद्युस्तत्पुरोधाश्च मिथ्यात्वग्रहसङ्ग्रहः ।
कुविकल्पवितण्डाभिर्वदन्वादे जितः स तैः ॥ १०१ ॥
ततोऽनुकूलवृत्त्याथ तं सूरिमुपसर्प्पयन् ।
उवाच दम्भभक्त्या स राजानमृजुचेतसम् ॥ १०२ ॥
नाथामी गुरवो देवा इव पूज्या जगत्यपि ।
एतेषां पादुकाः पुण्या जनैर्धार्याः स्वमूर्धनि ॥ १०३ ॥
किञ्चिद्विज्ञप्यते लोकभूपालानां हितं मया ।
अवधारय तच्चित्ते भक्तिश्चेन्मातुजे गुरौ ॥ १०४ ॥
विशतां नगरान्तर्यच्चरणा विम्बिताः पथि ।
उल्लङ्घ्यन्ते जनैरन्यैः सामान्यैस्तदघं बहु ॥ १०५ ॥
धर्मार्जनं तनीयोऽत्र परं कुरु महामते ।
प्रतीत आर्जवाद्राजा प्राहास्ते संकटं महत् ॥ १०६ ॥
विद्वांसो मातुलास्तीर्थरूपाः सर्वार्चिता इमे ।
तथा वर्षा अवस्थाप्य पार्यन्ते प्रेषितुं किमु ॥ १०७ ॥
द्विजः प्राह महीनाथ मन्त्रये ते हितं सुखम् ।
तव धर्मो यशस्ते च प्रयास्यन्ति स्वयं सुखात् ॥ १०८ ॥
नगरे डिण्डिमो वाद्यः सर्वत्र स्वामिपूजिताः ।
प्रतिलाभ्या वराहारैर्गुरवो राजशासनात् ॥ १०९ ॥
आहारमाध्य(?)कर्मादि दृष्ट्वानेषणयान्वितम् ।
स्वयं ते निर्गमिष्यन्ति काप्यश्लाघा न ते पुनः ॥ ११० ॥
अस्त्वेवमिति राज्ञोक्ते स तथेति व्यधात्पुरे ।
अन्वेषणां च ते दृष्ट्वा यतयो गुरुमभ्यधुः ॥ १११ ॥
प्रभोः सर्वत्र मिष्टान्नाहारः संप्राप्यतेतराम् ।
गुरुराहोपसर्गोऽयं प्रत्यनीकादुपस्थितः ॥ ११२ ॥
गन्तव्यं तत्प्रतिष्ठानपुरे संयमयात्रया ।

---

१ J H–नृपमबोधत. २ J H–राजान मृदुचेतसम्. ३ J H–तथामी ...। ..पादुकाः पुण्यजनैर्धार्या स्व०. ४ J H °त्रापर. ५ P–षणयाश्रितम्. ६ J H– इहोपस.

श्रीसातवाहनो राजा तत्र जैनो दृढव्रतः ॥ ११३ ॥
ततो यतिद्वयं तत्र प्रैषि सङ्घाय सूरिभिः ।
प्राप्तेष्वस्मासु कर्त्तव्यं पर्वपर्युषणं ध्रुवम् ॥ ११४ ॥
तौ तत्र सङ्गतौ संघमानितौ वाचिकं गुरोः ।
तत्राकथयतां मेने तेनैतत्परया मुदा ॥ ११५ ॥
श्रीकालकप्रभुः प्राप शनैस्तन्नगरं ततः ।
श्रीसातवाहनस्तस्य प्रवेशोत्सवमातनोत् ॥ ११६ ॥
उपपर्युषणं तत्र राजा व्यज्ञपयद्गुरुम् ।
अत्र देशे प्रभो भावी शक्रध्वजमहोत्सवः ॥ ११७ ॥
नभस्यशुक्लपञ्चम्यां ततः षष्ठ्यां विधीयताम् ।
स्वं पर्व नैकचित्तत्वं धर्मे नो लोकपर्वणि ॥ ११८ ॥
प्रभुराह प्रजापाल पुराहद्गणभृद्गणः ।
पञ्चमीं नात्यगादेतत्पर्वास्मद्गुरुगीरिति ॥ ११९ ॥
कम्पते मेरुचूलापि रविर्वा पश्चिमोदयः ।
नातिक्रमति पर्वेदं पञ्चमीरजनीं ध्रुवम् ॥ १२० ॥
राजावदच्चतुर्थ्यां तत्पर्वपर्युषणं ततः ।
इत्थमस्तु गुरुः प्राह पूर्वैरप्याहृतं ह्यदः ॥ १२१ ॥
अर्वागपि यतः पर्युषणं कार्यमिति श्रुतिः ।
महीनाथस्ततः प्राह हर्षादेतत्प्रियं प्रियम् ॥ १२२ ॥
यतः कुहूदिने पर्वोपवासो पौषधस्थिताः ।
अन्तःपुरपुरन्ध्र्यो मे पक्षादौ पारणाकृतः ॥ १२३ ॥
तत्राष्टमं विधातॄणां निर्ग्रन्थानां महात्मनाम् ।
भवतु प्रासुकाहारैः श्रेष्ठमुत्तरपारणम् ॥ १२४ ॥
उवाच प्रभुरप्येतन्महादानानि पञ्च यत् ।
निस्तारयन्ति दत्तानि जीवं दुष्कर्मसागरात् ॥ १२५ ॥
पथश्रान्ते तथाग्लाने कृतलोचे बहुश्रुते ।
दानं महाफलं दत्तं तथा चोत्तरपारणे ॥ १२६ ॥
ततः प्रभृति पञ्चम्याश्चतुर्थ्यामागतं ह्यदः ।
कषायोपशमे हेतुः पर्वसांवत्सरं महत् ॥ १२७ ॥
श्रीमत्कालकसूरीणामेवं कत्यपि वासराः ।
जग्मुः परमया तुष्ट्या कुर्वतां शासनोन्नतिम् ॥ १२८ ॥

---

१ J H–जैनदृढव्रतः. २. J H–संघमानी तौ. ३ P–विज्ञपय. H–धर्मो. ५ J H– प्रिय प्रियम्. ६ J H–स्थिता. ७ P– निग्र. H–पंचम्याचतु.

अन्येद्युः कर्मदोषेण सूरीणां तादृशामपि ।
आसन्नविनयाः शिष्या दुर्गतौ दोहदप्रदाः ॥ १२९ ॥
अथ शय्यातरं प्राहुः सूरयो वितथं वचः ।
कर्मबन्धनिषेधाय यास्यामो वयमन्यतः ॥ १३० ॥
त्वया कथ्यममीषां च प्रियकर्कशवाग्भरैः ।
शिक्षयित्वा विशालायां प्रशिष्यान्ते ययौ गुरुः ॥ १३१ ॥
इत्युक्त्वागात्प्रभुस्तत्र तद्विनेयाः प्रगे ततः ।
अपश्यन्तो गुरूनूचुः परस्परमवाङ्मुखाः ॥ १३२ ॥
एष शय्यातरः पूज्यशुद्धिं जानाति निश्चितम् ।
एष दुर्विनयोऽस्माकं शाखाभिर्विस्तृतोऽधुना ॥ १३३ ॥
पृष्टस्तैः स यथौचित्यमुक्त्वोवाच प्रभुस्थितिम् ।
ततस्ते संचरन्ति स्मोज्जयनीं प्रति वेगतः ॥ १३४ ॥
गच्छन्तोऽध्वनि लोकैश्चानुयुक्ता अवदन्मृषा ।
पश्चादग्रस्थिता अग्रे पश्चात्स्थाः प्रभवो ननु ॥ १३५ ॥
यान्तस्तन्नाम शृङ्गारात्पथि लोकेन पूजिताः ।
नारीसेवकशिष्याणामवज्ञा स्वामिनं विना ॥ १३६ ॥
इतः श्रीकालकः सूरिर्वस्त्रवेष्टितरत्नवत् ।
यत्याश्रये विशालायां प्राविशच्छन्नदीधितिः ॥ १३७ ॥
प्रशिष्यः सागरः सूरिस्तत्र व्याख्याति चागमम् ।
तेन नो विनयः सूरेरभ्युत्थानादिको दधे ॥ १३८ ॥
तत ईर्यां प्रतिक्रम्य कोणे कुत्रापि निर्जने ।
परमेष्ठिपरावर्त्तं कुर्वंस्तस्थावसङ्गधीः ॥ १३९ ॥
देशनानन्तरं भ्राम्यंस्तत्रेत्य सूरिराह च ।
किंचित्तपोनिधे जीर्णे पृच्छ सन्देहमादृतः ॥ १४० ॥
आकिंचिज्ज्ञो जरत्त्वेन नावगच्छामि ते वचः ॥
तथापि पृच्छये नाहं संशयोपगमक्षमः ॥ १४१ ॥
अष्टपुष्पीमथो पृष्टो दुर्गमां सुगमामिव ।
गर्वाद्यत्किंचनव्याख्यादनादरपरायणः ॥ १४२ ॥
दिनैः कैश्चित्ततो गच्छ आगच्छत्तदुपाश्रयम् ।
सूरिणाभ्युत्थितोऽवादीद्गुरवोऽग्रे समाययुः ॥ १४३ ॥
वास्तव्या अवदन् वृद्धं विनैकं कोऽपि नाययौ ।
तेष्वागच्छत्सु गच्छोऽभ्युदस्थात्सूरिश्च सत्रपः ॥ १४४ ॥

---

१ P–शिष्यातर. २ P–गुर्व्ययौ. ३ P–गच्छतो...श्चानुयुक्ता. ४ J H–यान्तस्तन्नम. ५ P नारीशवक. ६ JH–इति P वस्त्रे. ७ H–इर्यां. ८ P–तत्रत्यसूरि. ९ P–व्याख्यादः. १० J H–श्चागमस्तु.

गुरूनक्षमयद्गच्छः पल्लग्नः सूरिररप्यंभूत् ।
तं च तं चानुशिष्यैते सूरिमित्थमबोधयन् ॥ १४५ ॥
सिकतासंभृतः प्रस्थः स्थाने स्थाने विरेचितः ।
रिक्ते तत्रावदद्वत्स दृष्टान्तं विद्धयमूदृशम् ॥ १४६ ॥
श्रीसुधर्मा ततो जम्बूः श्रुतकेवलिनस्ततः ।
षट्स्थाने पतितास्ते च श्रुते हीनत्वमाययुः ॥ १४७ ॥
ततोऽप्यनुप्रवृत्तेषु न्यूनं न्यूनतरं श्रुतम् ।
अस्मद्गुरुषु यादृक्षं तादृक्ष मयि निष्प्रभे ॥ १४८ ॥
यादृग्मे त्वद्गुरोस्तन्न यादृक्तस्य न तेऽस्ति तत् ।
सर्वथा मा कृथा वत्स गर्वं सर्वंकषं ततः ॥ १४९ ॥
अष्टपुष्पीं च तत्पृष्टः प्रभुर्व्याख्यानयत्तदा ।
अहिंसासूनृतास्तेयब्रह्माकिंचनता तथा ॥ १५० ॥
रागद्वेषपरित्यागो धर्मध्यानं च सप्तमम् ।
शुल्कध्यानमष्टमं च पुष्पैरात्मार्चनाच्छिवम् ॥ १५१ ॥
एवं च शिक्षयित्वा तं मार्दवातिशये स्थितम् ।
आपृच्छ्य व्यचरत्सङ्गहीनोऽन्यत्र पवित्रधीः ॥ १५२ ॥
श्रीसीमंधरतीर्थेशानिगोदाख्यानपूर्वतः ।
इन्द्रप्रश्नादिकं ज्ञेयमार्यरक्षितकक्षया ॥ १५३ ॥
श्रीजैनशासनक्षोणीं(णी)समुद्धारादिकच्छपः ।
श्रीकालकप्रभुः प्रायान्यायाद्देवभुवं शमी ॥ १५४ ॥

श्रीमत्कालकसूरिसंयमनिधेर्वृत्तं प्रवृत्तं श्रुतात्
श्रुत्वात्मीयगुरोर्मुखादवितथख्यातप्रभावोदयम् ।
संदृब्धं मयकातमस्ततिहरं श्रेयःश्रिये जायताम्
श्रीसंघस्य पठन्तु तच्च विबुधा नन्द्याच्च कोटीः समाः ॥१५५॥
श्रीचन्द्रप्रभसूरिपट्टसरसीहंसप्रभः श्रीप्रभा-
चन्द्रः सूरिरनेन चेतसि कृते श्रीरामलक्ष्मीभुवा ।
श्रीपूर्वर्षिचरित्ररोहणगिरौ श्रीकालकाख्यानकं
श्रीप्रद्युम्नमुनीन्दुना विशदितः शृङ्गश्चतुर्थोऽभवत् ॥ १५६ ॥

ग्रंथं ७३४ ॥ अक्षर ॥ १५ ॥

---

१ P–रप्यमून्. २ J & H omit सर्वं before कष ३ P–शुक्लध्यान. ४ P कक्षया. ५ P–समद्धारादि. P–प्रायात्प्रायाद्देव भुव. ६ P adds इति श्रीकालकाचार्यप्रबन्धः ग्रंथा १५७ अ. २३.

## श्रीपादलिप्तप्रबन्धः ।

जयन्ति पादलिप्तस्य प्रभोश्चरणरेणवः ।
श्रियः संवनने वश्यचूर्णं तत्प्रणताङ्गिनाम् ॥ १ ॥
गुणैकदेशमप्यस्य किमहं वर्णितुं क्षमः ।
जडस्तथापि तस्योक्तिर्लोकयुग्मोपकारिणी ॥ २ ॥
विमृश्यैवं भणिष्यामि पूज्यैर्मस्तकहस्तितः ।
खण्डखण्डश्रुतं वृत्तं चित्रं शृणुत कौतुकात् ॥ ३ ॥
सरयूजाह्नवीवारिसेवाहेवाकिमानवा ।
अस्ति विस्तारकुशला कोशला नामतः पुरी ॥ ४ ॥
तत्रासीद्धास्तिकास्मीयापहस्तितरिपुव्रजः ।
विजयब्रह्म इत्याख्याविख्यातःक्षितिनायकः ॥ ५ ॥
संफुल्लमल्लिकावल्लीकुसुमप्रोल्लसद्यशाः ।
फुल्लाख्यः फुल्ललक्ष्मीकः श्रेष्ठी श्रेष्ठगुणावनिः ॥ ६ ॥
रूपेणाप्रतिमानस्य प्रतिमाख्यातिवल्लभा ।
सुधा मुधाकृता यस्या गिरयागाद्रसातलम् ॥ ७ ॥
अपत्यीयितचित्तायास्तस्या हस्तनिरीक्षणम् ।
होराविद्यामहामन्त्रा वन्ध्यागर्भकराण्यपि ॥ ८ ॥
औषधानि प्रयुक्तानि क्षेत्रपद्राद्दिदेवताः ।
उपयाचितलक्षैश्चाराद्धा आसंश्च निष्फलाः ॥ ९ ॥ युग्मम् ।
तीर्थस्नानप्रयोगाश्च यथा कथनतः कृताः ।
अपत्यार्थमहोमोहः स्त्रीणां सौहृत्यहृज्जने ॥ १० ॥
अस्ति श्रीपार्श्वनाथस्य चैत्ये शासनदेवता ।
वैरोट्यानामविद्याया निर्विण्णा सा समाश्रयत् ॥ ११ ॥
कर्पूरमृगनाभ्यादिर्भोगैः संपूज्यतामसौ ।
उपवासैर्व्यधादष्टाह्निकामेकाग्रमानसा ॥ १२ ॥
अष्टमेऽहनि तुष्टा सा प्रत्यक्षीभूय तां जगौ ।
वरं वृणु तया पुत्रो ययाचे कुलदीपकः ॥ १३ ॥
अथो फणीन्द्रकान्ता सावादिदेश सुते शृणु ।
पुरा नमिविनम्याख्यविद्याधरवरान्वये ॥ १४ ॥

---

१ P—स्तथापि तद्भक्तिर्लो २ J & H—मास्तक. ३ J & H—श्रीया P—ख्याविख्यातक्षि ४ J & H—रूपेण प्रतिमानस्य । गिरायागाद्रसात-लात् ५ J & H—अपत्ती यि ६ J & H—द्रादि. ७ J & H—omit अप...हृ. and give सौहृत्यवज्जने. ८ P—स्वस्ति for अस्ति ९ P—वैरोद्यातामटाद्याया. १० P—भागै..

आसीत्कालिकसूरिः श्रीश्रुताम्भोनिधिपारगः ।
गच्छे विद्याधराख्यस्यार्यनागहस्तिसूरयः ॥ १५ ॥
खेलादिलब्धिसम्पन्नाः सन्ति त्रिभुवनार्चिताः ।
पुत्रमिच्छसि चेत्तेषां पादशौचजलं पिबेः ॥१६॥ त्रिभिर्विशेषकम्
श्रुत्वेति चैत्यतः प्रातस्तेषामागादुपाश्रये ।
प्रविशन्ती च सापश्यत्साधुमेकं तटस्थितम् ॥ १७ ॥
करस्थप्रभुपादाब्जक्षालनोदकपात्रकम् ।
तत्पार्श्वे प्रार्थनापूर्वं तत्पयः सापिबन्मुदा ॥ १८ ॥ युग्मम्
अथ तत्राग्रतो गत्वा नमश्चक्रे प्रभोः पदौ ।
धर्मलाभाशिषं दत्वा नमित्तं (त) चाहसद्गुरुः ॥ १९ ॥
अस्मत्तो दशभिर्हस्तै (र्) दूरे पीतं त्वयोदकम् ।
दशभिर्योजनैरन्तरितो वर्धिष्यते सुतः ॥ २० ॥
यमुनापरतीरे च मथुरायां प्रभावभूः ।
भविष्यन्ति तथान्ये ते नवपुत्रा महाद्भुतः ॥ २१ ॥
साहाथ प्रथमः पुत्रो भवतामर्पितो मया ।
अस्तु श्रीपूज्यपार्श्वस्थो दूरस्थस्यास्य को गुणः ॥ २२ ॥
श्रुत्वेत्याह प्रभुः सज्ज्ञानतोद्धारादिशूकरः ।
स भविष्यति ते पुत्रः सुत्रामसचिवो धिया ॥ २३ ॥
इत्यादाय प्रभोर्वाक्यं शकुनग्रन्थिबन्धिनी ।
गृहं ययौ गृहेशस्य तुष्टा वृत्तं न्यवेदयत् ॥ २४ ॥
गर्भोऽभूत्तद्दिनेऽमुष्या नागेन्द्रस्वप्नसूचितः ।
तदौचित्यकृतश्चास्या वृद्धैः सार्धं मनोरथैः ॥ २५ ॥
दिनेषु परिपूर्णेषु सुतो जज्ञे सुलक्षणः ।
रूपेणातिस्मरः श्रीमांस्तेजसा चातिभानुमान् ॥ २६ ॥
वैरोट्यायास्ततः पूजां कृत्वा तत्पादयोः पुरः ।
न्यस्यातो गुरुपादान्ते मुक्तस्तेषां तथार्पितः ॥ २७ ॥
वर्धतामस्मदायत्त इति प्रत्यर्पितः स तैः ।
प्रवर्धितोऽतिवात्सल्यात्तथा तद्गुरुगौरवात् ॥ २८ ॥
नागेन्द्राख्यां ददौ तस्मै फुल्ल उत्फुल्ललोचनः ।
आत्तो गुरुभिरागत्य सगर्भाष्टमवार्षिकः ॥ २९ ॥
तेद्गुरुभ्रातरः सन्ति संगर्मसिंहसूरयः ।
आदेशं प्रददुस्तेषां प्रभवः शुभमायतौ ॥ ३० ॥

१ E. ९—१ J H—निमित्तं. २ P—यमुनापुर. ३ द्धिः ४ J & H—तद्गुरु. ५ P—संगमः सिंह.

प्रव्रज्यां प्रददुस्तस्य शुभे लग्ने स्वरोदये ।
उपादानं गुरोर्हस्तं शिष्यस्य प्राभवे न तु ॥ ३१ ॥
गणिश्च मण्डनो नाम तदीयगणमण्डनः ।
आदिष्टः प्रभुभिस्तस्य शुश्रूषाध्यापनादिषु ॥ ३२ ॥
वैदग्ध्यातिशयादन्यपाठकानां पुरोपि यत् ।
ख्यातं तदपि गृह्णाति स्वपाठ्येषु तु का कथा ॥ ३३ ॥
लसल्लक्षणसाहित्यप्रमाणसमयादिभिः ।
शास्त्रैरनुपमो जज्ञे विज्ञेशो वर्षमध्यतः ॥ ३४ ॥
गुणैरुत्तमतां प्राप्य नृषु प्रथमरेखया ।
धूनन्नवनवाविश्वलक्षणेभ्योऽधिकस्ततः ॥ ३५ ॥
अन्येद्युरारनालाय प्रहितो गुरुभिस्तदा ।
विधिना तत्समादायोपाश्रये पुनराययौ ॥ ३६ ॥
तदीर्यापथिकीपूर्वमालोचयदनाकुलः ।
गाथया कोविदश्रेणीहृदयोन्माथया ततः ॥ ३७ ॥
तथाहि–अंबं तं बच्छीए अपुप्फियं पुप्फदंतपंतीए ।
नवमालिकं जियं नववहूइकुडएणमेदिन्नम् ॥ ३८ ॥
श्रुत्वेतिगुरुभिः प्रोक्तः शब्देन प्राकृतेन सः ।
पलित्तो इति शृङ्गाराग्निप्रदीप्ताभिधायिना ॥ ३९ ॥
स च व्यजिज्ञपत्पूज्यैः शिष्यः कर्णात्प्रसाद्यताम् ।
श्रुत्वेति प्रज्ञया तस्य तुतुषुर्गुरवो भृशम् ॥ ४० ॥
विमृश्येत्यतिहल्लासपूरितास्ते तदग्रतः ।
पादलिप्तो भवान्व्योमयानसिद्ध्या विभूषितः ॥ ४१ ॥
इत्यसौ दशमे वर्षे गुरुभिर्गुरुगौरवात् ।
प्रत्यष्ठाप्यत पट्टे स्वे कषपट्टे प्रभावताम् ॥ ४२ ॥
मथुरायां गुरुः प्रैषीदसंख्यातिशयाश्रयम् ।
तेजोविस्तारसंघोपकारहेतोस्तमन्यदा ॥ ४३ ॥
दिनानि कतिचित्तत्र स्थित्वासौ पाटलीपुरे ।
जगाम तत्र राजास्ति मुरण्डो नाम विश्रुतः ॥ ४४ ॥
केनापि तस्य चित्रायस्तत्र ग्रथितवृत्तकः ।
गूढवक्त्रमिलत्तंतुचयात्ज्ञातावसानकः ॥ ४५ ॥
ढौकितः कन्दुकः पादलिप्तस्य च गुरोः पुरः ।
राज्ञा प्राहीयत प्रज्ञापरीक्षावीक्षणोद्यमात् ॥ ४६ ॥ युग्मम् ।

---

१ J H–क्रमशो वर्षे. २ P–च ३ P–समादायौ. ४ J H गाथायाः कोवि योन्माथया ५ P–नवसालिकजियं. ६. P–विज्ञपत. P–प्रभावनाम्. ७ P–नापितस्य, J H–ग्रंथित. ८ J H–तंतुभयाज्ञाता.

अथोत्पन्नधिया सूरिर्विलोल्योष्णोदकाप्लवैः ।
सिक्थकं निपुणं प्रेक्ष्य तत्तन्तुप्रान्तमाप सः ॥ ४७ ॥
उन्मोच्य प्रहितो राज्ञे तद्बुद्ध्यासौ चमत्कृतः ।
प्रज्ञाविज्ञाततत्त्वाभिः कलाभिः को न गृह्यते ॥ ४८ ॥
तथा गङ्गातरोर्यष्टिः समाश्लक्ष्णा समर्पिता ।
तन्मूलाग्रपरिज्ञानहेतवे स्वामिना भुवः ॥ ४९ ॥
तारयित्वा जले मूले गुरुत्वात्तन्निमज्जनात् ।
अग्रमूले परिज्ञायाचख्यौ राज्ञः पुरस्ततः ॥ ५० ॥
तथा समुद्गकोऽनीक्ष्य सन्धिः सूरेः प्रदर्शितः ।
उष्णोदकात्समुद्धाट्य तच्चित्रं प्रकटीकृतम् ॥ ५१ ॥
श्रीपादलिप्ताचार्येण तन्तुंग्रथिततुम्बकम् ।
पेशीकोशायितं वृत्तं प्रहितं राजपर्षदि ॥ ५२ ॥
उन्मोचितं न तत्तत्र केनापि मुमुचे ततः ।
तद्युक्तं तेन मोच्येत नान्यैरित्यतिभाषिभिः ॥ ५३ ॥
भूपाहूतः स आगत्योज्जग्रन्थ च यतीश्वरः ।
मुरण्डनृपतिस्तत्राक्षिप्तश्चिन्तयते तदा ॥ ५४ ॥
बालाचार्योऽयमीदृक्षैः खेलनीयः कुहेतुभिः ।
दृश्यावहमयं किंत्वधृष्यः केसरिवच्छिशुः ॥ ५५ ॥
वयस्तेजसि नो हेतुरिति सत्यं पुरा वचः ।
को हि सिंहार्भकं सत्रेऽणुरूपमपि लंघयेत् ॥ ५६ ॥
शिरोवेदनयाक्रान्तः सोऽन्यदा भूपतिः प्रभुम् ।
व्यजिज्ञपत्प्रधानेभ्यः श्रुते नष्टे स्मृतीरवेः ॥ ५७ ॥
तर्जनीं प्रभुरप्येष त्रिः स्वजानावचालयत् ।
भूपतेर्वेदना शान्ता तस्य किं दुष्करं प्रभोः ॥ ५८ ॥
तथाहि—जह जह पएसिणिं जाणुयंमि पालित्त उं भमाडेइ ।
तह तह सिसिरवियणा पणस्सइ मुरण्डरायस्स ॥ ५९ ॥
मन्त्ररूपामिमां गाथां पठन्यस्य शिरः स्पृशेत् ।
शाम्येत वेदना तस्याद्यापि मूर्ध्नोऽतिदुर्धरा ॥ ६० ॥
स तत्कालोपकारेण हृतान्तःकरणो नृपः ।
सूरेर्बालस्य पादानां प्रणामेच्छूरवेरिव ॥ ६१ ॥
समाययौ ययौ श्रेष्ठेन्द्रागाहह्य(?) तदाश्रयम् ।
सकर्णः को न गृह्येत गुणैः सत्यैर्लघोरपि ॥ ६२ ॥ युग्मम् ।

---

१ P—ल्लाल्योष्णो दकोप्लवैः; सिक्तक. २ J H—तंतुग्रंथित., पशीकोशाशायित. ३ P—यमीक्षैाश्वखलनीयः त्वदृष्य॰. ४ P—शरोवे. ५ J H—श्रेष्ठो न्द्रागामृत्य.

प्रभोरुपांतमासीनो रहः पप्रच्छ भूपतिः ।
भृत्याः कृत्यानि नः कुर्युर्वेतनस्यानुसारतः ॥ ६३ ॥
तद्भिनामी विनेयाश्च युष्माकं तु कथं विभोः ।
भिक्षैकवृत्तिपात्राणां ते कार्यकरणोद्यताः ॥ ६४ ॥ युग्मम् ॥
सूरयः प्राहुरस्माकं विना दानं सदोद्यताः ।
कार्याणि भूप कुर्वन्ति लोकद्वयहितेच्छया ॥ ६५ ॥
भूपः प्राह न मन्येऽहं द्रव्यस्वादे जनस्थितिः[1] ।
निःस्वस्त्याज्यः पुमाँल्लोकेऽरण्यं दग्धं मृगैरिव ॥ ६६ ॥
अथाह सूरिरुर्वीश त्वद्भृत्या वहुवृत्तयः ।
तादृगुक्तं न कुर्वन्ति यादृङ्गो दानमन्तरा ॥ ६७ ॥
इहार्थे प्रत्ययो भूप कौतुकादवलोक्यताम् ।
दक्षः शुचिर्गुणी कश्चित्प्रतिष्ठां प्रापितः सदा ॥ ६८ ॥
ताम्बूलाभरणक्षौमैरात्मतुल्यः[2] सदेक्षितः ।
विश्वासस्य परा भूमिर्मूर्त्यन्तरमिवापरम् ॥ ६९ ॥
आहूयतां पुमान्पृष्टः सौष्ठवीकोपि भृत्यराट् ।
यथा प्रतीतिसम्पत्तिर्मद्वाक्यस्य भवेत्ततः ॥७०॥ त्रिभिर्विशेषकम्
क्षत्रा क्षत्रपतिस्तत्राहूतवान्प्राग्गुणान्वितम् ।
प्रधानमाजगामायं मूर्धन्यस्तकरद्वयः ॥ ७१ ॥
स प्रोवाच प्रसादं मे स्वामिन्नादेशतः कुरु ।
सुदुष्करतरेप्यर्थे भृत्यलेशो निजे मयि ॥ ७२ ॥
राजा प्राह सखे गङ्गा वहतीह कुतोमुखी ।
इत्युक्तेऽन्तःस्मितः सोपहासं चिन्तयति स सः ॥ ७३ ॥
अहो वालर्षिसंसर्गाद्राज्ञः शैशवमागतम् ।
गङ्गाकुतोमुखी वालाङ्गनाख्यातमिदं वचः ॥ ७४ ॥
ततः प्रमाणमादेश इत्युक्त्वा स ययौ वहिः ।
ऐश्वर्यग्रहिलो राजा नाहमप्यस्मि तादृशः ॥ ७५ ॥
फल्गुवाग्भिस्ततः स्वीयं सुखं परिहरामि किम् ।
ध्यात्वेति व्यसनी तत्र प्रायः प्रायाद्दुरोदरे ॥ ७६ ॥
खेलन्निर्वाह्य तत्रासौ चतस्रः पञ्च नाडिकाः ।
गत्वा स्वामिपुरः पूर्वामुखीत्युत्तरमाह सः ॥ ७७ ॥
अपसर्प्यैः प्रसर्प्यद्भिस्तद्वृत्तं भूपतेः पुरः ।
न्यवेद्यथ[3] यतिस्वामी स्मितं कृत्वाभ्यधादिति ॥ ७८ ॥
भूपालचेष्टितं दृष्टं धनमानातिशायिनः ।

---

१ P–जनस्थित. २ J क्षोदानेरालतुल्ये H क्षोदानेरात्मतुल्यः
३ J H न्यवेद्यत.

निज[1]प्रसादवित्तस्यापरेषां तु कथापि का ॥ ७९ ॥
अद्यश्वीनविनेयस्याशिक्षितस्य व्यवस्थितिम् ।
पश्य नश्यन्मद[2]स्नेहं चित्तान्तश्चित्रकारिणीम् ॥ ८० ॥
आगच्छामिनवक्षुल्ल व्याहृते चेति सूरिभिः ।
इच्छामीति वदन् शीघ्रमुत्तस्थौ [3]सरजोहृतिः ॥ ८१ ॥
विनयानम्रमौलिश्च मेदिनीं प्रतिलेखयन् ।
पुर आगाद्गुरोर्जानू भुव्यास्ये न्यस्य पोतिकाम् ॥ ८२ ॥
प्रभोऽनुशास्तिमिच्छामीत्युक्ते तेनावदत्प्रभुः ।
गङ्गाकुतोमुखी वत्स वहत्याख्याहि निर्णयम् ॥ ८३ ॥
तदाचावश्यकीपूर्वं निर्गच्छन्नाश्रयाद्बहिः ।
विन्यस्य कम्बलं स्कन्धे कृत्वा दण्डं [4]करे निरैत् ॥ ८४ ॥
प्रश्नानुचिततां जानन् बालवृद्धयुवस्त्रियाम् ।
अपृच्छन्मध्यवयसं प्रवीणं पुरुषं ततः ॥ ८५ ॥
[5]गङ्गाकुतोमुखी पूर्वाभिमुखी प्रापितोत्तरः ।
तेनेति त्रिःकृते प्रश्ने सर्वत्रासीत्समोत्तरः ॥ ८६ ॥
तथापि निश्चिकीर्षुः स स्वर्धुनीजलसन्निधौ ।
प्रत्युपेक्ष्य ततो दण्डं करस्थि[6]तमवग्रकः ॥ ८७ ॥
जलान्तरमुचत्तं च श्रोतसातिरयात्ततः ।
[7]प्राग्वाहिते करे दण्डसहिते प्रत्ययं ययौ ॥ ८८ ॥ युग्मम् ।
आगत्याश्रयमत्रेर्यापथिकीपूर्वकं ततः ।
[8]आलोचयद्यथावृत्तं प्रवृत्तश्च स्वकर्मणि ॥ ८९ ॥

उक्तच श्रीजिनभद्रग(ग)णिक्षमाश्रमणभाष्यकारेण—

निवपुच्छिएण भणिउ गुरुणा गङ्गा कुउमुही वहइ ।
संपाइय वंसी सो जह तह सव्वच्छ कायव्वम् ॥ ९० ॥
[9]प्राग्वचारैर्यथाख्याते सत्य एव निवेदिते ।
प्रतीतः प्राह भूपालस्त्वद्वृत्तं हि कथातिगम् ॥ ९१ ॥
इति [10]प्रभुकैस्तैस्तैश्चित्रैः सर्वलोकोपकारकैः ।
नृपो विभ्रच्चमत्कारं कालं यान्तं न बुध्यते ॥ ९२ ॥
अन्यदा मथुरायां स सूरिर्गत्वा महायशाः ॥
श्रीसुपार्श्वजिनस्तूपेनमत् श्रीपार्श्वमञ्जसा ॥ ९३ ॥
ततोऽसौ [11]लाटदेशांतश्चोङ्काराख्यपुरे प्रभुः ।

---

१ P–प्रसादचित्त. २ P–नश्यन्मदस्येहं ३ J & H सरजौहृति. ४ J H–करेतिन्चेत् ५ P–गंगाकुतोमुखीति प्रापितोत्तरः ६ J H–स्थिततदभक. ७ J H–प्रोगवायिते. ८ P–आलोचयहथावृत्त. ९ P–प्राग्वचारै १० J H–प्रभुक्तैश्चित्रै. ११ J H–'देशीतश्चांका'

आगतः स्वांगतान्यस्य तत्राधाङ्गीमभूपतिः ॥ ९४ ॥
शरीरस्थस्य बाल्यस्य माहात्म्यं वितरन्निव ।
स क्रीडत्यन्यदा डिम्भैर्विजने विश्ववत्सलः ॥ ९५ ॥
भरेण रमते यावत् श्रावकास्तावदाययुः ।
देशान्तरोच्चदाकुंठोत्कंठास्तद्वंदनोत्सुकाः ॥ ९६ ॥
कालो युगप्रधानस्य पादलिप्तप्रभोः कुतः ।
उपाश्रयोऽस्ति शिष्याभं पप्रच्छुश्च तमेव ते ॥ ९७ ॥
तत्रोत्पन्नमतिः सूरिर्दूरभ्रमणहेतुभिः ।
प्रकटैस्तदभिज्ञानैस्तेषामकथयत्तदा ॥ ९८ ॥
स्वयं पटींच प्रावृत्य संवृत्याकारमात्मनः ।
आचार्याः संत्युपाविक्षद्दक्षः स क्षिप्रमुन्नते ॥ ९९ ॥
श्राद्धाश्च तावदाजग्मुः प्रणेमुरतिभक्तितः ।
क्रीडन् दृष्टः स एवायं तैरुपालक्षि दाक्ष्यतः ॥ १०० ॥
विद्याश्रुतवयोवृद्धसदृशीं धर्मदेशनाम् ।
विधाय तत्पुरोऽवादीत् तद्विकल्पापलापकृत् ॥ १०१ ॥
अवकाशः शिशुत्वस्य दातव्यश्चिरसंगतैः ।
इति सत्यवचोभङ्ग्या जहृषुस्ते शिशुप्रभोः ॥ १०२ ॥
गते विहर्तुमन्येद्युः प्रौढसाधुकदम्बके ।
विजने स ययौ रथ्यां गच्छत्सु शकटेषु च ॥ १०३ ॥
कुर्वन् मर्कटकीक्रीडां दृष्टः पूर्व्ववदाश्रयम् ।
परप्रवादिभिर्दूरदेशेनैषामुदाहरत् ॥ १०४ ॥
चिरेणायान्ति यावत्ते सम्पन्नातिभ्रमश्रमाः ।
गुरुः सिंहासने तावत्तुष्णापासौ पटीवृतः ॥ १०५ ॥
ताम्रचूडः स्वरश्चक्रे तैः प्रातःक्षणशंसकः ।
उत स्वरं ततोऽधासीत् सूरिस्तत्परिपन्थिनाम् ॥ १०६ ॥
तेषां द्वारमपावृत्य तस्थौ सिंहासने प्रभुः ।
तस्य ते विस्मयस्मेरा ददृशुर्मूर्तिमद्भुताम् ॥ १०७ ॥
तर्कोक्तिभिर्जितास्ते च प्रश्नमेकं च गाथया ।
तथाहि—एतजिगीषवः सन्तो विदधुर्दुर्घटं तदा ॥ १०८ ॥
"पालित्तयक हेसुफुडं संयलं महिमण्डलं भमंतेण ।

१ P–आगतस्वागत० २ J H–वालस्य...हरन्निव. ३ P–क्रीडयत्य
४ J H–देशांतरात्तदा कुतोत्कगस्तद्वदतोत्सुकः ॥ देशांतरात्तदाकूतोत्कण्ठास्तद्वद्नोत्सुका' इति स्यात्. ५ J काल्यु and P–कुलौ कलौ इति स्यात्.
६ J H–प्रकटैस्तदभिज्ञायतै स्तेषा. ७ J & H–पटीं चेत्य. ८ P–आचार्यो सन्युपाविक्षद्दसक्षिप्रमुन्नते. ९ P–हसि० १० P–सयलमहिम.

दिट्ठो सुवकच्छवि चंदणरससीयलो अग्गी ॥ १०९ ॥"
सूरिः श्रीपादलिप्तोपि तत्क्षणं प्राह गाथया।
उत्तरं द्राग्विलम्बो हि प्रज्ञावलवतां कुतः ॥ ११० ॥
साच-अयसाभिउंग अभिदूमि यस्स पुरिसस्स सुद्धहिययस्स।
होईवहन्तस्स फुडं चंदणरससीयलो अग्गी ॥ १११ ॥
इत्युत्तरेण ते सूरेर्मुदमापुर्जिता अपि।
पराजयोऽपि सत्पात्रैः कृतो महिमभूर्भवेत् ॥ ११२ ॥
ततः सङ्केन विज्ञप्ते सद्गुणेषु प्रमोदिना।
शत्रुंजयगिरौ यात्रां पादलिप्तप्रभुर्व्यधात् ॥ ११३ ॥
मानखेटपुरं प्राप्ताः कृष्णभूपालरक्षितम्।
प्रभवः पादलिप्ताख्या राज्ञाभ्यर्च्यंत भक्तितः ॥ ११४ ॥
तत्र प्रांशुपुरात्प्राप्ताः श्रीरुद्रदेवसूरयः।
ते चावबुद्धतत्वार्थाः श्रीयोनिप्राभृते श्रुते ॥ ११५ ॥
अन्येद्युर्निजशिष्याणां पुरस्तस्माच्च शास्त्रतः।
व्याख्याता शफरोत्पत्तिः पापसंन्तापसाधिका ॥ ११६ ॥
सा कैवर्त्येन कुड्यान्तरितेन प्रकटं श्रुता।
अनावृष्टिस्तदा चासीत् विश्वलोकभयङ्करी ॥ ११७ ॥
मीनानुत्पत्तिरत्रासीत्तत्र श्रीतप्रयोगतः।
मत्स्यान् कृत्वा बहूनेषोऽजीवयद्बन्धुमण्डलम् ॥ ११८ ॥
कदापि हर्षतस्तत्र प्रभूपकृतिरञ्जितः।
आययौ धीवरो भक्त्या नत्वा च प्रोचिवानिति ॥ ११९ ॥
युष्मत्कथितयोगेनादानो मीनान् व्यधामहम्।
खादित्वा तांश्च दुर्भिक्षे कुटुम्बं निरवाहयम् ॥ १२० ॥
श्रुत्वेति सूरयः पश्चादतप्यन्त कृतं हि किम्।
यतो वधोपदेशेनास्माभिः कल्मषमर्जितम् ॥ १२१ ॥
जीवन् जीववधात्पापभयं बह्वर्जयिष्यति।
तस्मात् किमपि तत्कार्यं येनाधत्ते न स स्वयम् ॥ १२२ ॥
इति ध्यात्वोचिवान् सूरिर्निष्पत्तौ रत्नसंततेः।
प्रयोगं शृणु दारिद्र्यं कदापि न भवेद्यथा ॥ १२३ ॥
स च स्फुरति नो मांसाशनजीवविघातयोः।
विधीयमानयोस्तत्वमम् वर्जयसे यदि ॥ १२४ ॥
कथयामि तदा तत्ते श्रुत्वेत्याहेदमप्यहम्।
जाने जीववधात्पापं कुटुम्बं तु न वर्त्तते ॥ १२५ ॥

---

१ P–अग्री. २ J & H सचाह for साच. ३ P–हाइ वई…अग्गी. ४ P–पाशुपुरात्प्रायुः ५ P–संपत्ति. ६ P–ततश्रीत. ७ H–योगे नदीनो मी. J योगेन दानो. ८ J & H omit हि before किम्.

नाथ प्रसादतश्चित्ते विना पापं धनं भवेत् ।
सद्गतिः प्रेत्य तन्मे स्यात्प्रमाणं पूज्यवाक्यतः ॥ १२६ ॥
अतःपरं गृहे गोत्रे न मे पिशितभक्षणम् ।
इत्युक्ते रत्नयोगस्तैरुक्तः सोऽभूच्च धार्मिकः ॥ १२७ ॥

तथा केचिदिति वदन्ति—

शिक्षितः सिंहयोगं च चक्रे तं तेन भक्षितः ।
यतोऽल्पदोषतः पुण्यं बहु किं न समर्ज्यते ॥ १२८ ॥

तथा—विलासनगरे पूर्वं प्रजापतिरभूत्ततः ।
ततः श्रमणसिंहाख्याः सूरयश्च समाययुः ॥ १२९ ॥
तानाहूय नृपः प्राह चित्रं किमपि दर्श्यताम् ।
सूरयः प्राहुरर्कस्य कोपि वेत्तीह संक्रमम् ॥ १३० ॥
भूपतिः सिद्धदेवज्ञानाहूय वदतिस्म सः ।
रविसंक्रातिसमयमाख्यातास्मत्पुरःसरम् ॥ १३१ ॥
नाडिकापलसङ्ख्याभिस्तं स्फुटं वीक्ष्य तेऽब्रुवन् ।
आचार्य्यैः स्माहुरेकोऽस्माससूचिर्नः समर्प्यताम् ॥ १३२ ॥
सांवत्सरस्य च ततो नृपस्तदकरोदरम् ।
सूरिस्तं समयं सूक्ष्मं ज्ञात्वा(स्म)(श्म)न्यक्षिपच्च ताम् ॥१३३॥
उवाच सूचिकामेनां मौहूर्त्तिकविनिष्कषः ।
संक्रातिसमये यस्मात्सर्वं जलमयं भवेत् ॥ १३४ ॥
गणकोऽपि ततः प्राह ज्ञाने मे नियतिर्दशा ।
प्राप्तं तत्सूरिविज्ञानं दृष्ट्वा भूपो विसिष्मिये ॥ १३५ ॥
एकदा सूरयो राज्ञा पृष्टा वृष्टिविधौ पुनः ।
विचिन्त्य कथयिष्यामः प्रोच्येति स्वाश्रये ययुः ॥ १३६ ॥
तैर्देवेन्द्राभिधः शिष्यः प्रैक्ष्यत क्षितिपाग्रतः ।
कथ्यं किंचिद्विसंवादि यथासौ स्यादनादरः ॥ १३७ ॥
इति तच्छिक्षितः प्राज्ञो ययौ तत्र जगौ च सः ।
उत्तरस्या(स्यां) दिशो(शि) वृष्टिरमुतः पञ्चमेऽहनि ॥ १३८ ॥
संजज्ञे वर्षणं पूर्वदिशास्त(शित)त्र दिने स्फुटम् ।
दिग्विसंवादतो राजा किंचिन्मन्दादरोऽभवत् ॥ १३९ ॥
कर्मबन्धनिषेधाय तदुपेत्य कृतं च तैः ।
अभीक्ष्णं राजकार्याणां कथनं कल्मषावहम् ॥ १४० ॥

---

१ J & H–श्रेति. २ J & H–ससृज्यते. ३ P–आचार्योस्माहरेको-ऽमासमूचिर्नः ॥ 'आचार्याः स्माहुरेकोऽस्मा ससूचिर्न.' इति स्यात् ४ H & J –ज्ञात्वारमन्य. ५ J & H–सचिका. P–विनिःकप, सर्वे. ६ P–ज्ञान० मेने यती–शां J & H विस्मिये,७ J & H–देवेंद्रोभिधः...प्रैक्ष० ८ H & P –उत्तरस्या दिंशौ and 'उत्तरस्यां दिशो'

मानखेटपुरं प्रापुस्तेऽथ कालेन केनचित् ।
निमित्तग्रन्थनिष्णाता राज्ञां ज्ञाताः कलावशात् ॥ १४१ ॥
अथार्यखपटाः सन्ति विद्याप्राभृतसंभृताः ।
तद्यथा–तद्वृत्तमिह जैनेन्द्रमतोल्लासि प्रतन्यते ॥ १४२ ॥
विंध्योदधिकृता घाटा लाटदेशललाटिका ।
पुरं श्रीभृगुकच्छाख्यमस्ति रेवापवित्रितम् ॥ १४३ ॥
यानपात्रं भवाम्भोधौ यत्र श्रीमुनिसुव्रतः ।
पातकातङ्कतः पातिस्वर्भुवोभूर्भुवं जनम् ॥ १४४ ॥
तत्रास्ति बलमित्राख्यो राजाबलभिदासमः ।
कालिकाचार्यजामेयः स्थेयः श्रेयधियां निधेः ॥ १४५ ॥
भवाध्वनीनभव्यानां संति विश्रामभूमयः ।
तत्रार्यखपटा नाम सूरयो विद्यतो(यो)दिताः ॥ १४६ ॥
तेषां च भागिनेयोऽस्ति विनेयो भवनाभिधः ।
कर्णश्रुत्याप्यसौ प्राज्ञो विद्यां जग्राह सर्वतः ॥ १४७ ॥
बौद्धान्वादे पराजित्य यैस्तीर्थं संघसाक्षिकम् ।
तद्ग्रहध्वान्ततो भानुप्रतिरूपैरमोच्यत ॥ १४८ ॥
तदा च सौगताचार्य एको वट्टुकराभिधः ।
गुडशस्त्रपुरात्प्राप्तो जिगीषुर्जैनशासनम् ॥ १४९ ॥
गुडपिण्डैः पुरा तत्र शत्रुसैन्यमभज्यत ।
गुडशस्त्रमिति ख्यातिरतोऽस्याजनि विश्रुता ॥ १५० ॥
सर्वानित्यप्रवादी स चतुरङ्गसभापुरः ।
जैनाचार्यस्य शिष्येण जितः स्याद्वादवादिना ॥ १५१ ॥
कांदिशीकस्ततो मन्युपूरपूरितमानसः ।
कोपादनशनं कृत्वा मृत्वा यक्षो बभूव सः ॥ १५२ ॥
निजस्थानेऽवतीर्यासौ सकोपः श्वेतभिक्षुषु ।
अवजानाति तांस्तेषामुपसर्गान् ददाति च ॥ १५३ ॥
तत्पुरस्थेन सङ्घेन तदार्यखपटप्रभुः ।
तत्र प्रतिद्वयं प्रेष्य ज्ञापितस्तत्पराभवम् ॥ १५४ ॥
एषा कपलिका वत्स नोन्मोच्या कौतुकादपि ।
कदापि शिक्षयित्वेति जामेयमचलत्ततः ॥ १५५ ॥
पुरे तत्र गतस्तस्य यक्षस्यायतनेऽवसत् ।

१ J & H–विंध्याधिकृताघाट....लाटिकाः । २ J & H–भूर्भुवर्भुभव ॥ ‘स्वर्भुवर्भूभव’ ३ J & H–श्रेयःश्रियां निधिः । ४ J H–omit भवाध्व etc ५ J & H–तेषां च भागिनेयो भुवनाभिधः ६ P–repeats विनेयोस्ति, ७ विश्रुतम्. ८ P–निजस्थानवितीर्या० and मुपसर्गानूधाति च. ९ P–omits it

उपानहौ निधायास्य कर्णयोः शयनं व्यधात् ॥ १५६ ॥
यक्षार्चकः समायातस्तं तथा वीक्ष्य भूपतेः ।
व्यजिज्ञपदथो तस्मै कुपतिः कुपितस्ततः ॥ १५७ ॥
समेत्य शयितं वाढं पेटं प्रावृत्य सर्वतः ।
निजैरुत्थापयामास तेऽद्राक्षुः परितः स्रुतौ ॥ १५८ ॥
तैराख्याते पुनः क्रुद्धो नृपस्तं लेष्टुयष्टिभिः ।
अघातयत्स घातानां प्रवृत्तिमपि वेत्ति नः ॥ १५९ ॥
क्षणेन तुमुलो जज्ञे पुरेऽप्यन्तःपुरेऽपि च ।
पूत्कुर्वन्तः समाजग्मुः सौविदाअवदंस्तथा ॥ १६० ॥
रक्ष रक्ष प्रभो न्यक्षः शुद्धान्तो लेष्टुयष्टिभिः ।
अदृष्टविहितैः कैश्चित् प्रहारैर्जर्जरीकृतः ॥ १६१ ॥
तदाकर्ण्य नृपो दध्यौ विद्यासिद्धोऽसकौ ध्रुवम् ।
संचारयति शुद्धान्ते प्रहारान् स्वं तु रक्षति ॥ १६२ ॥
तदयं माननीयो मे ध्यात्वेति तमसान्त्वयत् ।
वटुभिः पटुभिर्भूपस्ताधिष्ठायकदेववत् ॥ १६३ ॥
अथार्य्यखपटाचार्यः कृत्वा कपटनाटकम् ।
उत्थितः प्रणतो भूमिभुजा भून्यस्तमस्तकम् ॥ १६४ ॥
यक्षं प्रोचे मया सार्द्धं चलेति स ततोऽचलत् ।
तमनुप्राचलन् देवरूपकाण्यपराण्यपि ॥ १६५ ॥
चाल्यं नरसहस्रेण तत्र द्रोणीद्वयं तथा ।
चालितं कौतुकेनेत्थं तत्प्रवेशोत्सवोऽभवत् ॥ १६६ ॥
तत्प्रभावाद्भुतं वीक्ष्य जनेशोऽपि जनोपि च ।
जिनशासनभक्तोऽभून्महिमानं च निर्ममे ॥ १६७ ॥
सूरिर्नृपेण विज्ञप्तो यक्षं स्थाने न्ययोजयत् ।
स शान्तो द्रोणियुगलं तत्रैव स्थापितं पुनः ॥ १६८ ॥
इतश्च श्रीभृगुक्षेत्रात् यतिद्वितयमागमत् ।
तेन प्रोचे प्रभो प्रैषीत्संघो नौ भवदन्तिके ॥ १६९ ॥
स्वस्त्रीयः संविनेयो यः बलात्कापलिकां ततः ।
उन्मोच्य पत्रमेकं सोऽवाचयच्चारितप्रियः ॥ १७० ॥
तेभ्योऽपि महाविद्या पाठसिद्धास्य संगता ।
तत्प्रभावाच्छरादस्मानीय स्वद्तेतराम् ॥ १७१ ॥

---

१ P [illegible] २ J H [illegible] पटं ३ P संभार ४ P–पटुभि-[illegible] देवव । ५ P–[illegible] ६ P–[illegible] ७ J & H–[illegible] ८ P–[illegible] ९ J & H–[illegible] १० J [illegible], H [illegible].

स्थविरैः शिक्षितः कोपात् सौगतान्तःस्वयंगतः ।
अतीव भोजने गृद्धः स्वविद्यागर्वनिर्भरः ॥ १७२ ॥
तत्प्रभावेण पात्राणि गतानि गगनाध्वना ।
भोज्यपूर्णान्युपायान्ति बौद्धोपासकवेश्मनः ॥ १७३ ॥
पात्राणां पुरतः श्राद्धगृहे याति पतद्ग्रहः ।
स प्रधानासने न्यस्य भ्रियते सह पात्रकैः ॥ १७४ ॥
प्रातिहार्यमिदं दृष्ट्वा शाक्या अपि तदाहृताः ।
ततोऽपभ्राजनामेतां हरतागत्यवेगतः ॥ १७५ ॥
गुडशस्त्रपुरात्ते च भृगुकच्छं समाययुः ।
भुवने न च पात्राणि प्रैक्ष्यन्त श्राद्धवेश्मनि ॥ १७६ ॥
पूर्णानि तानि भोज्यानामायान्ति गगनाध्वना ।
गुरुभिः कृतयादृश्यशिलया व्योम्नि पुस्फुटुः ॥ १७७ ॥
स प्रभूनागतान् ज्ञात्वा चिह्नेन तेन भीतिभृत् ।
प्राणेशदथ पूज्याश्च बौद्धानामालये ययुः ॥ १७८ ॥
बौद्धैर्बुद्धनताबुक्तैः सूरिभिर्जल्पितं तथा ।
वत्स शुद्धोदनिसुत वन्दस्वाभ्यागतं हि माम् ॥ १७९ ॥
प्रतिमास्थस्ततो बुद्ध आगत्यांह्रिपुरोऽपतत् ।
तद्वारे चास्ति बुद्धांडः प्रोक्तस्तैः सम्पदोपनः (?) ॥ १८० ॥
समेत्य प्रणतः सोऽपि प्रभुपादांबुजद्वये ।
उत्तिष्ठेति गिरासूरेरेखार्द्धावनतः स्थितः ॥ १८१ ॥
अद्यापि स तथैवास्ति निर्ग्रन्थनमिताभिधः ।
बुद्धस्थाने तदादेशादेकपार्श्वेन तु स्थितः ॥ १८२ ॥
अथो महेन्द्रनामास्ति शिष्यस्तेषां प्रभावभूः ।
सिद्धप्राभृतनिष्णातस्तद्वृत्तं प्रस्तुवीमहि ॥ १८३ ॥
नगरी पाटलीपुत्रं वृत्रारिपुरसप्रभम् ।
दाहडो नाम राजास्ति मिथ्यादृष्टिर्निकृष्टधीः ॥ १८४ ॥
दर्शनव्यवहाराणां विलोपेन वहन्मुदम् ।
बौद्धानां नग्नतां शैवव्रजे निर्जटतां च सः ॥ १८५ ॥
वैष्णवानां विष्णुपूजात्याजनं कौलदर्शने ।
धम्मिल्लं मस्तके नास्तिकानामास्तिकतां तथा ॥ १८६ ॥
ब्राह्मणेभ्यः प्रमाणं च जैनर्षीणां स पापभूः ।
तेषां च मदिरापानमन्विच्छन् धर्मनिह्नवी ॥ १८७ ॥
आज्ञां ददौ च सर्वेषामाज्ञाभङ्गे स चादिशत् ।

१ P-बौद्धोपासकवेश्मतः २ J & H-श्राद्धा ३ P-प्रैक्ष्य. ४ P-नाम स्तैः सपदोः पनः- ५ J & H-गिरा. सुरेर्वाद्धा वनमित ६ J & H-अग ७ P-राजात्र ८ J & H-नग्नतां & धम्मिल. ९ P-मदन्दग ।.

तेषां प्राणहरं दण्डमत्र प्रतिविधिर्हि कः ॥ १८८ ॥
नगरस्थितसंघाय समादिष्टं च भूभुजा ।
प्रणम्या ब्राह्मणाः पुण्या भवद्भिर्वोऽन्यथा वधः ॥ १८९ ॥
धनप्राणादिलोभेन मेने तद्वचनं परैः ।
निष्किंचनाः पुनर्जैनाः पर्यालोचं प्रपेदिरे ॥ १९० ॥
देहत्यागान्न नो दुःखं शासनस्याप्रभावना ।
तत्पीडयति को मोहो देहे यायावरे पुनः ॥ १९१ ॥
विमृश्य गुरुभिः प्रोचे श्रीआर्यखपटप्रभोः ।
शिष्याग्रणीर्महेन्द्रोऽस्ति सिद्धप्राभृतसंभृतः ॥ १९२ ॥
भृगुक्षेत्रे ततः संघो गीतार्थं स्थविरद्वयम् ।
प्रहिणोतु स चामुष्मिन्नर्थे प्रतिविधास्यति ॥ १९३ ॥
तथाकृतेन संघेन तत्पूज्यैः प्रहितोऽथ सः ।
अभिमन्त्रितमानैषीत्करवीरलताद्वयम् ॥ १९४ ॥
उवाच च नृपादेशः प्रमाणं गणकैः पुनः ।
वीक्षणीयो मुहूर्त्तोऽसौ य आयतिशुभावहः ॥ १९५ ॥
इति स ज्ञापयामास भूपालाय कृतीश्वरः ।
सत्त्वोत्सेकं दधौ शक्तिरपूर्वकरणे मम ॥ १९६ ॥
दैवज्ञैश्चार्चिते लग्ने स्वीयप्रज्ञानुमानतः ।
महेन्द्राधिष्ठिता जग्मुः सूरयस्तन्नरैः सदः ॥ १९७ ॥
याज्ञिका दीक्षिता वेदोपाध्याया होमशालिनः ।
सायंप्रातर्मता आवसथीयाः स्मार्तकृत्विजः ॥ १९८ ॥
गाङ्गमृच्चन्दनालेपतिलकौघप्रपंचित्रिताः ।
काषायाधौतपोताढ्याः सोपवीतपवित्रिकाः ॥ १९९ ॥
सिंहासनेषु चित्रेषु गन्दिकाद्यास्तृतेषु ते ।
उपविष्टास्तदा दृष्टा महेन्द्रेण मनीषिणा ॥ २०० ॥ विशेषकम् ।
ऊचे तेन क्षितेर्नाथ यदपूर्वमिदं हि नः ।
पूर्वं पूर्वामुखान् किंवा नमामः पश्चिमामुखान् ॥ २०१ ॥
जल्पन्ति निकरेणासौ करवीरलतां किल ।
संमुखानां परावृत्त्य पृष्टे चाभ्रामयत्ततः ॥ २०२ ॥ युग्मम् ।
आसन्लुञ्चितशीर्षास्ते निश्चेष्टा मृतसंनिभाः ।
अभूच्च भूपतेर्वक्त्रं विच्छायं शशिवद्दिने ॥ २०३ ॥
सम्पन्नाश्च तथा सम्बन्धिनस्तेषां कृपाभुवः ।

---

१ P–देहत्यागान्नवो दुक्ख J & H शासनस्य प्रभा. २ P–शिष्याग्रणीमहे. ३ J & H– करणे मना. ४ J H–वेदोपाधायो P–आवसथावा. ५ P–पवित्रिती. ॥ कषाय, साप० ६ P–उपतिष्ठामहेंद्रेण स्तदा. ७ पूर्वंपूर्व ८ P–संमुखीनां पुरा J & H चाभ्रमय. ९ P–लुठित.

जल्पयन्त्यभिधाग्राहं को हि जल्पत्यचेतनः ॥ २०४ ॥
क्रन्दन्ति स्वजनाः सर्वे विकर्म फलितं हि नः ।
अदृष्टश्रुतपूर्वा हि जैनर्षीणां नतिः परे ॥ २०५ ॥
भूपरूपेण कालोयं दर्शनानामुपस्थितः ।
पुस्तकस्थपुराणेषु कथापीदृग्नहि श्रुता ॥ २०६ ॥
उत्थायाथासनाद्भूपः पश्चात्तापमुपागतः ।
महेन्द्रस्य महेन्द्रस्य धीरेषु न्यपतत्पदोः ॥ २०७ ॥
रक्ष रक्ष महाविद्य प्रसीद त्वं ममोपरि ।
क्षमस्वैकं व्यलीकं मे सन्तो हि नतवत्सलाः ॥ २०८ ॥
संजीवय द्विजानेतान् रुदत्संबन्धियोषितः ।
कस्ते माहात्म्यसात्म्यस्य पारं प्राप्तः सुधीरपि ॥ २०९ ॥
इत्याकर्ण्य गिरं प्राह महेन्द्रः शमिनां पतिः ।
अनात्मज्ञ धराधीश कस्ते मिथ्याग्रहोलगत् ॥ २१० ॥
निर्वाणमधितस्थुश्चेज्जिना आनन्दचिन्मयाः ।
तदधिष्ठायिकाः सन्ति प्रत्ययाढ्यास्तथाप्यहो[1] ॥ २११ ॥
एवं मृष्यति को नाम प्राकृतोपि विडंबनम् ॥
ब्राह्मणानां गृहस्थानां प्रणामो यद्व्रतस्थितैः ॥ २१२ ॥
दैवतैः शिक्षिता एते त्वदन्यायप्रकोपिभिः ।
न मे कश्चित्प्रकोपोऽस्ति मादृशां रण्डनं शमः ॥ २१३ ॥
पुनर्बाढं नृपः प्राह त्वमेव शरणं मम ।
देवो गुरुः पिता माता किमन्यैर्लल्लिभाषितैः ॥ २१४ ॥
अमून् जीवय जीवातो जीवानां करुणां कुरु ।
अथाचोचत्कृती देवान् सान्त्वयिष्ये प्रकोपिनः ॥ २१५ ॥
विद्यादेव्यः षोडशापि[2] चतुर्विंशतिसंख्यया ।
जैना यक्षास्तथा यक्षिण्यश्च वोऽभिदधाम्यहम् ॥ २१६ ॥
अज्ञानादस्य भूपस्यापराद्धं जिनशासने ।
द्विजैरमीभिस्तत्क्षम्यं मानवाः स्युः कियद्दृशः ॥ २१७ ॥
इत्युक्ते तेन दैवी वाक् प्रादुरासीद्दुरासदा[3] ।
एषां प्रव्रज्यया मोक्षोऽन्यथा नास्त्यपि जीवितम् ॥ २१८ ॥
अभिषेकेण तेषां गीर्मुत्कला च व्यधीयतः (त)[4] ।
पृष्टा अङ्गीकृतं तैश्च को हि प्राणान्न वाञ्छति ॥ २१९ ॥
उत्तिष्ठतेति तेनोक्ता भ्राम्यताथापराळता[5] ।
सज्जीवभूवुः प्रागवत्ते जैना ह्यमितशक्तयः ॥ २२० ॥
संघेन सह रोमांचांकुरकन्दलितात्मना[6] ।

१ J & H प्रत्ययाद्याः २ J & H षोडशोपि. ३ J & H दुरासदां. ४ J H–गीर्मुत्कालवन्व्यधीयत. ५ P–त्रास्यतोघोपरा. ६ J & H–तुर.

राज्ञा कृतोत्सवेनाथ स्वं विवेशाश्रयं मुनिः ॥ २२१ ॥
प्रव्रज्योत्सवमाधास्यन् सङ्घस्तेन द्विजन्मनाम्।
न्यपेक्ष्यतार्यखपटप्रभुः कर्त्तेति जल्पता ॥ २२२ ॥
एवं प्रभावभूमेस्ते कीदृगस्ति गुरुः प्रभोः।
इत्युक्तः श्रीमहेन्द्रोऽसौ प्राह कोऽहं तदग्रतः ॥ २२३ ॥
मार्जारेभ्य इव क्षीरं सौगतेभ्यो न्यमोच्यत।
अश्वावबोधतीर्थं श्रीभृगुकच्छपुरे हि यैः ॥ २२४ ॥
श्रीआर्यखपटाख्यानां प्रभूणां महिमाद्भुतम्।
तेषां स्तोतुमलं कः स्याद्वादिद्विपहरिश्रियाम् ॥२२५॥युग्मम्।
चारित्राश्मनि संप्रपीष्य मदनं पात्रे वरिष्ठात्मके
वृद्धस्नेहभरे तपोऽनलमिलज्ज्वाले विपक्वः स्फुटम्।
रोदः कुंजरकुण्डके सितरुचिज्योत्स्नाम्लके यद्यशो-
राशिः स्यादवलेकिमोऽभ्रविवरः स्वाद्यः सतां सोऽवतात् २२६
अथासौ ब्राह्मणैः सार्द्धं संघेनानुमतो ययौ।
उपपूज्यं दीक्षिताश्च वाडवाः प्रभुभिस्ततः ॥ २२७ ॥
इत्यार्यखपटश्चक्रे शासनस्य प्रभावनाम्।
उपाध्यायो महेंद्रश्च प्रसिद्धिं प्रापुरद्भुताम् ॥ २२८ ॥
अश्वावबोधतीर्थे च प्रभावकपरम्परा।
अद्यापि विद्यते यस्य संताने सूरिमण्डली ॥ २२९ ॥
सूरिः श्रीपादलिप्तः प्रागाख्यातगुरुसन्निधौ।
प्रतीतप्रातिहार्याणि तानि शास्त्राण्यधीतवान् ॥ २३० ॥
पादलिप्ताख्यभाषा च विद्वत्सङ्केतसंस्कृता।
कृता तैरपरिज्ञेयोऽन्येषां यत्रार्थ इष्यते ॥ २३१ ॥
आवर्जितश्च भूपालः कृष्णाख्यः संसदा सह।
न ददात्यन्यतो गंतुं गुणगृह्यो मुनीशितुः ॥ २३२ ॥
अथार्यखपटः सूरिः कृतभूरिप्रभावनः।
अन्तेऽनशनमाधाय दैवीभुवमशिश्रियत् ॥ २३३ ॥
श्रीमहेन्द्रस्ततस्तेषां पट्टे सूरिपदेऽभवत्।
तीर्थयात्रां प्रचक्राम शनैः संयमयात्रया ॥ २३४ ॥
पुरा ये पाटलीपुत्रे द्विजाः प्रव्रजिता बलात्।
जातिवैरेण तेनात्र ते मत्सरमधारयन् ॥ २३५ ॥

---

१ H & J–पूज्वा. २ J & H–जल्पत. ३ H & J–प्रवीक्ष्य. and वरिष्ठात्मको...मुके यशो. ४ P–शितभुविनरस्वाद्यसतां ५ P–इत्याचार्य. J & H–प्रभावना ६ P–सूरिमूडली. ७ P–णिधीत. ८J H–संस्कृतातैरपि ज्ञेयान्येषां.

संघेन पादलिप्तस्य विज्ञैर्विज्ञापितं नरैः ।
ततस्तेषां समादिक्षत् स विमृश्य प्रभुस्तदा ॥ २३६ ॥
कार्त्तिक्यामहमेष्यामीत्युक्त्वा तान् स व्यसर्जयत् ।
ततो राजानमापृच्छ्य भृगुकच्छं समाययौ ॥ २३७ ॥
पूर्वाह्णे व्योममार्गेण रत्नवद्भास्वराकृतिः ।
अवतीर्णो विशीर्णैनाः श्रीसुव्रतजिनालये ॥ २३८ ॥
तत्रागतं तमुत्प्रेक्ष्य भास्वन्तमिव भूगतम् ।
लोकः कोक इवानन्दं प्राप दुष्प्रापदर्शनम् ॥ २३९ ॥
चित्रात्तत्रागमद्राजा नमश्चक्रे च तं गुरुम् ।
महानन्दं ददौ तत्र भक्त्या संघसमन्वितः ॥ २४० ॥
तत् प्रदापितमर्थिभ्यो द्रव्यं गुरुभिरद्भुतम् ।
द्विजा व्योमाध्वगं तं च दृष्ट्वातिभयतोऽनशन् ॥ २४१ ॥
राजाह सुकृती कृष्णः पूज्यैर्यो न विमुच्यते ।
दर्शनस्यापि नार्हाः स्मो मूले जाता वयं कथम् ॥ २४२ ॥
कियन्त्यपि दिनान्यत्रावतिष्ठध्वं सुखाय नः ।
प्राहुः पूज्याश्च युक्तैवावस्थितिर्भवदन्तिके ॥ २४३ ॥
संघादेशो ह्यनुल्लङ्घ्यः स्नेहश्च नृपतेरपि ।
पुरस्तस्यापराह्णे चागमनं प्रति शुश्रुवे ॥ २४४ ॥
ततः शत्रुञ्जये रैवतके संमेतपर्वते ।
अष्टापदे च कर्त्तव्या तीर्थयात्रा ममाधुना ॥ २४५ ॥
आपृष्टोऽपि महाराज तज्जैने भव भक्तिमान् ।
इत्युक्त्वाकाशमार्गेण यथारुचि ययौ प्रभुः ॥ २४६ ॥
तीर्थयात्रां प्रकुर्वाणः पादचारेण सोऽन्यदा ।
सुराष्ट्राविषयं प्रापद्पारश्रुतपारगः ॥ २४७ ॥
तत्रास्ति विगतातङ्का ढंकानाम महापुरी ।
श्रीपादलिप्तस्तत्रायाच्छिरत्न् प्रनर्मालया ॥ २४८ ॥
तत्र नागार्जुनो नाम रससिद्धिविदांवरः ।
भाविशिष्यो गुरोस्तस्य तद्वृत्तमपि कथ्यते ॥ २४९ ॥
अस्ति क्षत्रियमूर्धन्यो धन्यः समरकर्मसु ।
संग्रामनामा विख्यातस्तस्य नार्यस्ति सुव्रता ॥ २५० ॥
सहस्रफणशेषाहिस्वप्नसंसूचितस्थितिः ।
कृतनागार्जुनाभिख्यस्तयोः पुत्रोऽस्ति गुणवान् ॥ २५१ ॥

---

१ J H-प्राहुर्द्वि. २ J H-दृष्ट्वा. ३ P-स्थे ४ P-ष्वः, J H गमनमेव ५ P तदत्रा० ६ J H-गुणवान्.

स वर्षत्रयदेशीयोऽन्यदा क्रीडन् शिशुव्रजैः ।
सिंहार्भकं विदार्यागात्तस्मात्किंचिच्च भक्षयन् ॥ २५२ ॥
पित्रा निवारितः क्षात्रे कुले भक्ष्यो नखी नहि ।
तदागतेन चैकेन सिद्धपुंसेति वर्णितम् ॥ ५५३ ॥
मा विषीदस्व पुत्रस्य विहितेन नरोत्तम ।
अशक्यास्वादसूतस्यास्वादं प्राप्स्यत्यसौ सुतः ॥ २५४ ॥
विनिद्र उद्यमी भास्वानाबाल्यादपि तेजसा ।
प्रवृद्धपुरुषैः संगमङ्गीचक्रे कलाङ्कुतैः ॥ २५५ ॥
गिरयः सरितो यस्य गृहाङ्गणमिवाभवन् ।
दूरदेशान्तरं गेहान्तरं भूरिकलादरात् ॥ २५६ ॥
नागवंगीकृताभ्यासैस्तारस्तारङ्गस्य रङ्गभूः ।
संग्रही चौषधीनां यो रससिद्धिकृतामिह ॥ २५७ ॥
यः सत्त्वं तालके पिष्टं गंधके द्रावमभ्रके ।
जारणं मारणं सूते वेत्ता छेत्ता सुदुःस्थितेः ॥ २५८ ॥
सहस्रलक्षकोट्यंशधूमवेधान् रसायनम् ।
वङ्गिवद्धान् चकाराथ नदीष्णो रससाधने ॥ २५९ ॥
स महीमण्डलं भ्रान्त्वान्यदा स्वपुरमासदत् ।
पादलिप्तं च तत्रस्थं जज्ञे निःसंख्यसिद्धिकम् ॥ २६० ॥
पर्वताश्रितभूमौ च कृतावासः स्वशिष्यतः ।
अकार्षीत् पादलेपार्थी ज्ञापनं गणभृत्पतेः ॥ २६१ ॥
तृणरत्नमये पात्रे सिद्धं रसमढौकयत् ।
छात्रो नागार्जुनस्य श्रीपादलिप्तप्रभोः पुरः ॥ २६२ ॥
स प्राह रससिद्धोयं ढौकने कृतवान् रसम् ।
स्वान्तर्द्धनमहोस्नेहस्तस्येत्येवं स्मितो न्यधात् ॥ २६३ ॥
पात्रं हस्ते गृहीत्वा च भित्तावास्फाल्य खण्डशः ॥
चक्रे च तन्नरो दृष्ट्वा न्यषीदद्वक्रवक्त्रभृत् ॥ २६४ ॥
मा विषीद तव श्राद्धपार्श्वतो भोजनं वरम् ।
प्रदापयिष्यते चैवमुक्त्वा संमान्य भोजितः ॥ २६५ ॥
तस्मै चापृच्छ्यमानाय काचपात्रं प्रपूर्य सः ।
प्रश्रावस्य ददौ तस्मै प्राभृतं रसवादिने ॥ १६६ ॥
नूनमस्मद्गुरुर्मूर्खः योऽनेन स्नेहमिच्छति ।
विमृशन्निति स स्वामिसमीपं जग्मिवांस्ततः ॥ २६७ ॥

१ J H–कुर्वन्. २ J H–दूरे. ३ P–ताभ्यास. ४ J H–लक्षधूम...नय. ५ J H–विडवद्धान् ६ J H. omit पुरः. ७ J H–रसविधेय. ८ J H–सामा. ९ J H–काचामत्र.

पूज्यैः सहाद्भुता मैत्री तस्येतिस्मितपूर्वकम् ।
सम्यग्विज्ञप्य वृत्तान्तं तदमत्रं समार्पयत् ॥ २६८ ॥
द्वारमुन्मुद्य यावत्स सन्निधत्ते दृशोः पुरः ।
आजिघ्रति ततः क्षारविस्रगन्धं स बुद्धवान् ॥ २६९ ॥
अहो निर्लोभतामेष मूढतां वा स्पृशेदथ ।
विमृश्येति विषादेन बभंजाश्मनि सोऽपि तत् ॥ २७० ॥
दैवसंयोगतस्तत्रैकेन वह्निः प्रदीपितः ।
भक्ष्यपाकनिमित्तं च क्षुत्सिद्धस्यापि दुःसहः ॥ २७१ ॥
पेक्कानृजलवेधेन वह्नियोगेसुवर्णकम् ।
सुवर्णसिद्धिमुत्प्रेक्ष्य सिद्धशिष्यो विसिष्मिये ॥२७२॥
व्यजिज्ञपद्गुरुं सिद्धं सिद्धिस्तस्याद्भुता प्रभोः ।
ग्रावा हेमीभवेद्यस्य मलमूत्रादिसङ्गमे ॥ २७३ ॥
ततो नागार्जुनः सिद्धो विस्मयस्मेरमानसः ।
दध्यौ स मम का सिद्धिर्दोरित्थं कुर्वतः सदा ॥ २७४ ॥
कास्तेत्र चित्रको रक्तः कृष्णमुण्डी च कुत्र सा ।
शाकम्भर्यांश्च लवणं वज्रकन्दश्च कुत्र वा ॥ २७५ ॥
इत्येवं दूरदेशस्थौषधपिण्डान् प्रपिण्डयन् ।
भिक्षाभोजनतोम्लानदेहोऽहं सर्वदाभवम् ॥ २७६ ॥ युग्मम्
आचार्योऽयं शिशुत्वादप्यारभ्य प्राप्तपूजनः ।
सुखी विहायोगामिन्या सिद्धया साध्यानि साधयन् ॥२७७॥
तथा यद्देहमध्यस्था मलमूत्रादयो वसु ।
साधयन्ती मृदश्मादिद्रव्यैस्तस्यास्तु का कथा ॥ २७८ ॥
रसोपकरणं मुक्त्वा ततोऽसौ प्रभुसन्निधौ ।
जगाम विनयानम्रमौलिर्मदभरोज्झितः ॥ २७९ ॥
प्रणम्य चावदन्नाथ सिद्धिगर्वः स सर्वतः ।
समागलत् प्रभौ दृष्टे देहसिद्धे जितस्पृहे ॥ २८० ॥
ततः प्रभुपदाम्भोजं सदाप्यवलगाम्यहम् ।
मिष्टान्नं लभमानस्य कदन्नं कस्य रोचते ॥ २८१ ॥
इति श्रीपादलिप्तस्य चरणक्षालनादिकम् ।
देहशुश्रूषणं नित्यं विदधाति प्रशान्तगीः ॥ २८२ ॥
सूरयश्च मुनिव्राते गते विचरितुं तदा ।
प्रागुक्तपञ्चतीर्थान्ते गत्वा व्योम्ना प्रणम्य च ॥ २८३ ॥

---

१ J H–सहम् २ J P–पक्का ३ P–योगे सुवर्णसिद्धमत्प्रेक्ष्य शिष्यो-विसिष्मिये. पुच ४ J P–प्रावो. ५ J H–कास्ते. ६ P–च ७ JH–omit सिद्धे. ८ J H omit मियम.

समायान्ति मुहूर्तस्य मध्ये नियमपूर्वकम्।
विद्याचारणलब्धीनां समानास्ते कलौ युगे ॥ २८४ ॥
आयातानामथैतेषां चरणक्षालनं ध्रुवम्।
जिघ्रासुरौषधानीह निर्विकारश्चकार सः ॥ २८५ ॥
स जिघ्रन् विमृशन् पश्यन् स्वादयन् संस्पृशन्नपि।
प्रज्ञाबलादौषधीनां जज्ञे सप्ताधिकं शतम् ॥ २८६ ॥
विधायौषधसंयोगं ततः कल्कं चकार सः।
पादमालेपयत्तेनोच्छलितो गगनं प्रति ॥ २८७ ॥
स ताम्रचूडसंपातं कृत्वा च न्यपतद्भुवि।
उच्चैःप्रदेशात्पातेन जानौ गुल्फे च पीडितः ॥ २८८ ॥
रक्ताभ्यक्तव्रणक्लिन्नजङ्घो दृष्टः शमीश्वरैः।
उक्तं च किमहो पादलेपः सिद्धो गुरुं विना ॥ २८९ ॥
सोऽब्रवीन्न सितं कृत्वा नास्ति सिद्धिर्गुरुं विना।
निजप्रज्ञाबले किंतु परीक्षां चक्रिवानहम् ॥ २९० ॥
प्राह श्रीपादलिप्तोऽपि प्रसन्नस्तस्य सत्यतः।
शृणु नाहं न ते तुष्टो रससिद्ध्या न तेऽनया ॥ २९१ ॥
शुश्रूषयानया नापि परं प्रज्ञाबलेन ते।
तोषोंह्रिक्षालनात्को हि वस्तुनामानि बुध्यते ॥ २९२ ॥
ततो दास्यामि ते विद्यां परं मे गुरुदक्षिणाम्।
कां दापयसि स चोवाच यामादिशसि मे प्रभो ॥ २९३ ॥
ऊचे च गुरुणा सिद्ध त्वयि स्निग्धं मनो मम।
उपदेक्ष्यामि ते पथ्यं तथ्यं गाथां ततः शृणु ॥ २९४ ॥
सा च—दीहरफणिंदनाले महिहरकेसरदिसा बहुदलिल्ले।
उपियइकालभमरो जणमयरन्दं तुहइपउमे ॥ २९५ ॥
ततो विश्वहितं धर्ममाद्रियस्व जिनाश्रयम्।
तथेति प्रतिपन्ने च तेन तद्गुरुपादिशत् ॥ २९६ ॥
आरनालविनिर्धौततंडुलामलवारिणा।
पिष्टौषधानि पादौ च लिप्त्वा व्योमाध्वगोऽभवत् ॥ २९७ ॥
तथैव विहितेऽसौ च जगाम गगनाध्वना।
पक्षिराजवदुड्डीय यथाभिलषितां भुवम् ॥ २९८ ॥
कृतक्षेन ततस्तेन विमलाद्रेरुपत्यकाम्।
गत्वा समृद्धिभाक् चक्रे पादलिप्ताभिधं पुरम् ॥ २९९ ॥

---

१ P-सु. २ J H विया ३ J H omit नया ते. ४ J H दासामि and omit प्रभो ५ J H मु.

अधित्यकायां श्रीवीरप्रतिमाधिष्ठितं पुरा ।
चैत्यं विधापयामास स सिद्धः साहसीश्वरः ॥ ३०० ॥
गुरुमूर्तिं च तत्रैवास्थापयत्तत्र च प्रभुम् ।
प्रत्यष्ठापयदाहूयार्हद्भिस्त्वाण्यपराण्यपि ॥ ३०१ ॥
श्रीपादलिप्तसूरिश्च श्रीवीरपुरतः स्थितः ।
स्तवं चक्रे वरं गाहाजुअलेणेति संज्ञितम् ॥ ३०२ ॥
गाथाभिश्चेति सौवर्णव्योमसिद्धिसुगोपिते ।
प्रभुर्जजल्प नामाग्याः प्रबुध्यन्तेऽधुनातनाः ॥ ३०३ ॥
तथा रैवतकक्ष्माभृदधो दुर्गसमीपतः ।
श्रीनेमिचरितं श्रुत्वा तादृशात्प्रभोर्मुखात् ॥ ३०४ ॥
कौतुकात्तादृशं सर्वमावासादि व्यधादसौ ।
दशार्हमण्डपं श्रीमदुग्रसेननृपालयम् ॥ ३०५ ॥
विवाहादिव्यवस्थां च वेदिकायां व्यधात्तदा ।
अद्यापि धार्मिकैस्तत्र गतैस्तत्प्रेक्ष्यतेऽखिलम् ॥ ३०६ ॥
इतः पृथ्वीप्रतिष्ठाने नगरे सातवाहनः ।
सार्वभौमोपमः श्रीमान्नृप आसीद्गुणावनिः ॥ ३०७ ॥
तथा श्रीकालकाचार्यस्वस्रीयः श्रीयशोनिधिः ।
भृगुकच्छपुरं पाति बलमित्राभिधो नृपः ॥ ३०८ ॥
अन्येद्युः पुरमेतच्च रुरुधे सातवाहनः ।
द्वादशाब्दानि तत्रास्थाद्बहिर्न व्याहतं भवत् ॥ ३०९ ॥
अथाशक्यग्रहे दुर्गे निर्विण्णश्चिरकालतः ।
श्रीपादलिप्तशिष्यस्तन्मन्त्रीनाथं व्यजिज्ञपत् ॥ ३१० ॥
ग्राहयिष्याम्यहो दुर्गं भेदात्तत्प्रेषयस्व माम् ।
एवमस्त्विति तेनोक्ते निर्ययौ शिबिरात्ततः ॥ ३११ ॥
स भागवतवेषेण प्राविशन्नगरान्तरा ।
भूपालमन्दिरे गत्वा तं नाथं च व्यलोकयत् ॥ ३१२ ॥
जीर्णदेवगृहोद्धारो महादानादिसत्क्रिया ।
पुण्याय स्फूर्यते दुर्गरोधाद्यावन्निवर्तते ॥ ३१३ ॥
सोऽपि संरोधनिर्विण्णस्तद्दाक्षितो व्यधाददः ।
धर्मोपदेश आपत्सु कार्य्यपक्षे हि जायते ॥ ३१४ ॥
धर्मस्थानानि भज्यन्ते बहिर्यैत्राः सगोलकैः ।
समारचयते राजा तस्य धर्मोपदेशतः ॥ ३१५ ॥
पौनःपुन्येन भज्यन्ते निष्पाद्यन्ते पुनः पुनः ।
एवं च बलमित्रस्य सर्वस्वं निष्ठितं तदा ॥ ३१६ ॥

१ J H omit बहिर्यंत्रा·····पौनःपुन्येन भज्यते.

श्रीसातवाहनो दुर्गं मंत्रिबुद्ध्या ततोऽग्रहीत् ।
तन्निगृह्य महीपालं नगरं स्वं ययौ मुदा ॥ ३१७ ॥
अन्यदा तस्य राजेन्द्रो राज्यं विदधतः सतः ।
चत्वारः शास्त्रसंक्षेपकवयो द्वारमभ्ययुः ॥ ३१८ ॥
प्रतीहारेण ते राज्ञो विज्ञाप्य भवनान्तरा ।
मुक्ता[1] एकैकपादं च श्लोकस्याहुर्नृपाग्रतः ॥ ३१९ ॥
तथाहि–जीर्णे भोजनमात्रेयः कपिलः प्राणिनांदया ।
बृहस्पतिरविश्वासः पाञ्चालस्त्रीषु मार्दवम् ॥[2] ३२० ॥
पूर्वं प्रशस्य तेषां स महादानं ददौ प्रभुः ।
परिवारो न किं स्तौतीत्युक्ते तैराह भूपतिः ॥ ३२१ ॥
भोगवत्यभिधां वारवनितां त्वं स्तुतिं कुरु ।
पादलिप्तं विना नान्यः स्तोतव्यो मम साब्रवीत् ॥ ३२२ ॥
आकाशमार्गजंघालो विद्यासिद्धो महाक्रियः ।
पादलिप्तादृते कोन्य एवंविधगुणावनिः ॥ ३२३ ॥
संधिविग्रहिको राज्ञः शंकरो नाम मत्सरी ।
असहिष्णुः स्तुतिं तस्यावादीदादीनवस्थितिः ॥ ३२४ ॥
मृतो जीवति यस्तस्य पाण्डित्यं प्रकटं वयम् ।
मन्यामहेपि ते कीरा विद्वांसो गगनेचराः ॥ ३२५ ॥
भोगवत्याह तत्रेदमपि संभाव्यते ध्रुवम् ।
[3]अतुल्यप्राभवा जैना देवा इव महर्षयः ॥ ३२६ ॥
मानखेटपुरात् कृष्णमापृच्छ्य स भूपतिः ।
श्रीपादलिप्तमाह्वासीदेतस्मादेव कौतुकात् ॥ ३२७ ॥
आययौ नगराद्बाह्योद्याने जैनो मुनीश्वरः ।
विद्वान् बृहस्पतिर्ज्ञात्वा परीक्षामस्य चक्रिवान् ॥ ३२८ ॥
विलीनसर्पिषा पूर्णं रौप्यकच्चोलकं ततः ।
[4]प्रेषिवान्निपुणेनैष स प्रभोस्तददर्शयत् ॥ ३२९ ॥
धारिणीविद्यया सूचिमवस्थाप्योर्ध्वसंस्थिति ।
[5]प्रैषयत्तेन तद्दृष्टं विषण्णोऽथ बृहस्पतिः ॥ ३३० ॥
अथाभ्यागत्य भूपालः प्रवेशोत्सवमादधे ।
गुरोरुपाश्रयस्तस्य महार्हश्च प्रदर्शितः ॥ ३३१ ॥
कथा तरङ्गलोलाख्या व्याख्यातामिलवा पुरः ।
भूपस्य तत्र पांचालः कविर्भृशमसूयितः ॥ ३३२ ॥

---

१ J H मुक्त्वा २ P श्वासपंचालः स्त्रीषुमार्दवः ३ J H omit this line ४ P प्रेषि. ५ J H प्रैषयत्तेनदृष्टिं.

प्रशंसति कथां नैव दूषयेत्प्रत्युताधिकम् ।
रासभस्य मुखात्किंस्यात् शान्तिपानीयनिर्गमः ॥ ३३३ ॥
मद्ग्रंथेभ्यो मुषित्वार्थबिन्दुं कंथेयमग्रथि ।
बालगोपाङ्गनारङ्गसङ्गि ह्येतद्वचः सदा ॥ ३३४ ॥
विदुषां चित्तरङ्गेनोत्पादयेत्प्राकृतं हि तत् ।
स्तौति भोगवती ह्येतत्तादृशां तादृगौचिती ॥ ३३५ ॥
अन्यदा कपटात् स्वस्य मृत्युमैक्षयत प्रभुः ।
दाहात्पूत्कारपूर्वं च जनस्तत्रामिलद् घनः ॥ ३३६ ॥
शिबिकांतस्तनुःसाधु क्षिप्त्वा यावत्समाययौ ।
वादित्रैर्वाद्य मानैश्च पञ्चालभवनाग्रतः ॥ ३३७ ॥
तावद्गेहाद्विनिष्क्रामन् जज्ञेऽसौ शोकपूरितः ।
आह हाहा महासिद्धिपात्रं सूरिर्ययौ दिवम् ॥ ३३८ ॥
मादृशोऽसूययाक्रान्तः सत्पात्रे सूनृतव्रते ।
अकुर्वत दृशो रक्ता मोक्षो नास्ति तदेनसः ॥ ३३९ ॥
(यतउक्तम्) आकरः सर्वशास्त्राणां रत्नानामिव सागरः ।
गुणैर्न परितुष्यामो यस्य मत्सरिणो वयम् ॥ ३४० ॥
(तथा) सीसं कहवि न फुट्टं जमस्स पालित्तयं हरंतस्य ।
जस्समुहनिज्झराउ तरंगलोला नई वूढा ॥ ३४१ ॥
पंचालसत्यवचनाज्जीवितोहमिति ब्रुवन् ।
उत्तस्थौ जनताहर्षारावेण सह सूरिराट् ॥ ३४२ ॥
जनैराक्रुश्यमानश्च ततोऽसौ गुणिमत्सरी ।
निर्वास्यमानो न्यकारपूर्वमुर्वीपतेर्गिरा ॥ ३४३ ॥
रक्षितो मानितंश्चाथ बन्धुवन्धुरसौहृदैः ।
श्रीपादलिप्तगुरुभिर्गुरुविद्यामदोज्झितैः ॥ ३४४ ॥
श्रावकाणां यतीनां च प्रतिष्ठा दीक्षया सह ।
उत्थापना प्रतिष्ठार्हद्बिम्बानां द्युसदामपि ॥ ३४५ ॥
यदुक्तविधितो बुद्ध्वा विधीयेतात्र सूरिभिः ।
निर्वाणकलिकाशास्त्रं प्रभुश्चक्रे कृपावशात् ॥ ३४६ ॥
प्रश्नप्रकाश इत्याख्यं ज्योतिःशास्त्रं च निर्ममे ।
लाभालाभादिपृच्छासु सिद्धादेशः प्रवर्तते ॥ ३४७ ॥
अन्यदायुः परिज्ञाय सह नागार्जुने मते ।
विमलाद्रिमुपाजग्मुः श्रीनाभेयं ववंदिरे ॥ ३४८ ॥

१ P-द्रूषयेत. २ P हाहापूत्कारपूर्वं ३ P भुवना. ४ P गेहान. ५ P-वचना. ६ P रादेण. ७ P-श्चाथवन्धुरसौ. ८ P नागार्जु.

सिद्धक्षेत्रसि(शि)रःसारशिलां सिद्धिशिलातुलां ।
शमसंवेगनिधय एकामासेदुरादरात् ॥ ३४९ ॥
प्रायोपवेशनं सद्य आस्थाय शशिरोचिषा ।
धर्मध्यानाम्भसा विध्यापितरागादिवह्नयः ॥ ३५० ॥
मनोवचनकायानां चेष्टाः संहृत्य सर्वतः ।
शुक्लध्यानसमानान्तःकरणावस्थितिस्थिराः ॥ ३५१ ॥
द्वात्रिंशद्वासरान् सम्यग् लयलीनमनःक्रमाः ।
देहं जीर्णकुटीतुल्यमुज्झित्वा प्रकटप्रभाः ॥ ३५२ ॥
द्वितीयकल्पे देवेन्द्रसामानिकतनूभृतः ।
अभूवन्नर्चिता भूपैः श्रीपादलिप्तसूरयः॥३५३॥ चतुर्भिः कलापकम् ।

उत्पत्तिसिद्धिपटुरत्र स रुद्रदेव-
सूरिर्गुरुः श्रमणसिंहनिमित्तसिंहः ।
विद्याभृदार्यखपटप्रभुरेष सिद्धो-
पाध्याय इत्यतिशयप्रकटो महेन्द्रः ॥ ३५४ ॥
चत्वार इत्यनवधिप्रभसिद्धविद्याः
श्रीपादलिप्तसहिता विवृता मयैते ।
यत्किञ्चिदत्र गदितं न चरित्रदोष-
मज्ञानतस्तदिह वृत्तविदः क्षमन्ताम् ॥ ३५५ ॥
श्रीचन्द्रप्रभसूरिपट्टसरसीहंसप्रभः श्रीप्रभा-
चन्द्रः सूरिरनेन चेतसि कृते श्रीरामलक्ष्मीभुवा ।
श्रीपूर्वर्षिचरित्ररोहणगिरेः श्रीपादलिप्ताख्यया
श्रीप्रद्युम्नमुनीन्दुना विशदितः शृङ्गोऽगमत्पञ्चमः ॥ ३५६ ।
पूर्वमुनिवृत्तवीते मम गाम्भीर्यविनाविकृतनो मत्ता ।
कृतपथे गच्छन्ती यदि शाला प्रगुणगोपनिनां ॥ ३५७ ॥

ग्रंथाग्रं ३७२ अक्षर २८ उभयं ११०८ अक्षर ॥ ११ ॥
इति श्रीप्रभाचन्द्रसूरिविरचिते श्रीपादलिप्ताचार्यप्रबन्धः पंचमः

श्रीविजयसिंहसूरिप्रबन्धः ६

श्रीविजयसिंहसूरिर्गुरु[illegible] परं पथि नित्यं [illegible] ।
[illegible] ( ? )[illegible] ॥ १ ॥
[illegible] ।
[illegible] ॥ २ ॥

[illegible]

तीर्थमश्वावबोधं श्रीमेकलकन्यकातटे जयति ।
तत्र गुरुरसौ समभूत्तद्वृत्तान्तोऽपि वक्तव्यः ॥ ३ ॥
कनकगिरिशिखरसोदरतुङ्गप्राकारवलयपरिकलितम् ।
श्रीपुरमिति नाम्नासीत्पुरा पुरं सकलपुरमुकुटः ॥ ४ ॥
तस्य च वहिरुद्याने समवासार्षीद् द्वितीयजिननाथः ।
श्रीमानजितस्वामी तत्तीर्थं पूर्वमिति विदितम् ॥ ५ ॥
पश्चात्पुष्कलकालेऽतीते चन्द्रप्रभःप्रभुरवात्सीत् ।
उद्यान एतदीयनाम्ना च सरस्वतीपीठे ॥ ६ ॥
पुनरपि वहुकालेन क्षीणं तद्भृगुरिति प्रथितनामा ।
उद्दध्रे च महर्षिर्भृगुपुरमभवत्ततः प्रभृति ॥ ७ ॥
वंशे मेरुगिरीन्द्रे चन्द्रार्धमणिकिरणरज्जुविस्तारे ।
यत्कीर्तिवंशनटी नृत्यति विश्वेषु सभ्येषु ॥ ८ ॥
स नृपतिरिह जितशत्रुः शत्रुश्रेणीपतङ्गगणदीपः ।
कलिकालकलुषतामसविघटनपटुरात्मविषयोऽभूत् ॥ ९ ॥ [illegible]
छागानां शतषट्कं त्रिन्यूनं सोऽन्यदा महीनाथः ।
विप्रोपदेशमासाद्य यज्ञविधये जुहाव भृशम् ॥ १० ॥
अन्त्ये दिने द्विजैस्तैरानाय्यन(ध्यत)होतुमत्र पट्टाश्वः ।
रेवादर्शनतोऽस्य च पूर्वभवः स्मृतिपथं प्राप्तः ॥ ११ ॥
अथ मुनिसुव्रतनाथस्तं सार्ति पूर्वजन्मसुहृदम् ।
ज्ञात्वा निश्येकस्यामतीत्य गव्यूतिविंशशतम् ॥ १२ ॥
तस्य प्रवोधनार्थं तदा प्रतिष्ठाननामतो नगरात् ।
सिद्धिपुरे विश्रम्य क्षणमेकमुपाजगामात्र ॥ १३ ॥
कोरिण्टकाभिधाने परिकरितस्त्रिंशता मुनि[illegible]ः ।
वाह्योद्याने समवासार्षीच्चूतद्रुमस्याधः ॥ १४ ॥ [illegible]
सर्वज्ञं तं मत्वा सम्प्राप्तस्तेन वाजिना सहितः ।
राजा गत्वा यज्ञफलं तदनु पप्रच्छ ॥ १५ ॥
अवदच्च जिनाधीशः प्राणिवधाने [illegible] ।
अभ्यधाच्च साधुर्नघः प्रभुदर्शन[illegible] ॥ १६ ॥
जिनपतिरबोधयदमुं नृपतिसमक्षं [illegible] ।
स्वपूर्वभवं [illegible] ॥ १७ ॥
प्राग[illegible] ।
[illegible] ॥ १८ ॥
[illegible] ।
[illegible] ॥ १९ ॥

१ [illegible]

तस्य प्राक्कर्मवशात्क्षयनामा चान्यदाभवद्रोगः ।
निजधर्मत्यागादयसस्याभूत्तंनिजाः प्राहुः ॥ २० ॥
तस्यापि भावहानिर्व्याधिग्रस्तस्य संबभूव तदा ।
स्वकजनवचनैः कोपि प्रलुभ्यते न चटुपटुभिर्वा ॥ २१ ॥
पर्वण्युद्गयनाख्ये क्रियमाणे लिङ्गपूर्णमहे च ।
आह्रियमाणेषु तदा प्राज्येष्वाज्येषु कुतपेभ्यः ॥ २२ ॥
अश्वन्युज्झिततल्लेशसंगताः किल घृतेलिमा अमिताः ।
प्रत्यावृत्तः सागरपोतः सद्यो निनिन्द तं धर्म्मम् ॥ २३ ॥
निःशूकैस्तैश्चतदा सयष्टिमुष्ट्यादिभिः प्रहतः ।
किंकरपादाघातैः क्षुण्णः स ददर्श सघृणमनाः ॥ २४ ॥
आर्त्तध्यानान्मृत्वा तिर्यग्गतिभवशतेषु विभ्रम्य ।
अश्वः समभूच्च भवानथ मे शृणु भवमहो पूर्वम् ॥ २५ ॥
अजनि पुरा चन्द्रपुरे श्रीवर्मा नरपतिः प्रथितकीर्तिः ।
आबोधि बीजलाभादहंभवे सप्तमे श्रीमान् ॥ २६ ॥

उक्तचागमे–सिवकेउसोहम्मे कुबेरदत्तोसणं कुमारम्मि ।
सिरिवज्जकुंडलोबं भलोयकप्पं मिसिरिवम्मो ॥ २७ ॥

पाणयकप्पेमुणि सव्वउअतिछाहिवो भवे नवमे ।
इय संखेवो भणिउ विछसमयं अउबुछम् ॥ २८ ॥
व्यवहारी च भृगुपुरात् समुद्रदत्ताख्य आययौ तत्र ।
निःसंख्यपण्यपूरितयानं स्थानं समस्तलक्ष्मीणाम् ॥ २९ ॥
नृपतिस्तेन समैक्ष्यत तदर्पितप्राभृतैर्मुदितचित्तः ।
दानगुणादिस्वागतकरणादेषोपि तमनुजग्राह ॥ ३० ॥
राज्ञः प्रसादवृद्ध्या साधोस्तदुचितविधानतश्चापि ।
सख्यमभूज्जिनधर्मे बोधेश्चास्मादवनिपस्य ॥ ३१ ॥
सागरपोतेनापि तत्रायातेन तद्वयस्येन ।
मैत्री राज्ञः समजनि तद्बोधसमानबोधत्वात् ॥ ३२ ॥
अन्ते समाधिमरणात् प्राणतकल्पे नृपोऽभवद्देवः ।
सोऽहं तस्माच्च्युत्वा भरतक्षेत्रे नृपो जज्ञे ॥ ३३ ॥
इत्याकर्ण्यतुरङ्गः प्रभुकर्मकथां नृपेण सोऽनुमतः ।
सप्तदिनान्यनशनभृत् समाहितोऽगात्सहस्रारम् ॥ ३४ ॥
तत्र पुरन्दरसामानिकतां सप्तदशसागरायुरसौ ।
भुञ्जानोऽवधिना प्राग्भवमस्मार्षीच्च तत्रस्थः ॥ ३५॥

---

१ J H धर्मं आगादयमस्या °दयशस्योभूत् इति स्यात्. २ P प्रलभ्यते.
३ J H बोधिश्चास्या. ४ P धर्म्मंचा (त्वा) त्.

सार्धद्वादशकोट्यस्तेन सुवर्णस्य ववृषिरे तत्र ।
राजा पुरलोकश्च प्रबोधितो जैनवरधर्मे ॥ ३६ ॥
चामीकररत्नमयं श्रीमुनिसुव्रतविभोस्तदा चैत्यम् ।
माघस्य पूर्णिमास्यां सुकृती स स्थापयामास ॥ ३७ ॥
माघस्य सितप्रतिपदि विभुरागादश्वरत्नबोधाय ।
तस्यैव सिताष्टम्यां तुरङ्गः सुरलोकमायासीत् ॥ ३८ ॥
इति नर्मदातटेऽभूद्भृगुकच्छेऽश्वावबोध इति नाम्ना ।
तीर्थं समस्ततीर्थातिशायि पुण्यप्रवृत्तमदः ॥ ३९ ॥
श्रीसुव्रतनिर्वाणात् द्वादशसु ततः समासहस्रेषु ।
अधिकेषु द्वादशभिः पद्मश्चक्रीदमुद्दध्रे ॥ ४० ॥
हरिषेणचक्रवर्ती पुनरुद्धारं चकार दशमोऽस्य ।
एवं पञ्चवर्षलक्षा एकादश जग्मुरभ्यधिकाः ॥ ४१ ॥
षण्णवतिसहस्राब्दे रुद्धारशते च तत्र जातेऽस्य ।
सुदर्शनोत्पत्तिरथ प्रकीर्त्यते तदुपरि तदुद्धारः ॥ ४२ ॥
वैताढ्यपर्वतोपरि रथनूपुरचक्रवालनाम्निपुरे ।
राजा विजयरथोऽभूत्तत्कान्ता विजयमालेति ॥ ४३ ॥
विजयाथो तद्दुहिता तीर्थानां प्रणमनाय किल यान्ती ।
कुर्कुटसर्पं पुरतोऽवतीर्णमालोकयामास ॥ ४४ ॥
अपशकुन इति पत्तिजनैरुपेक्षितवती ग्रहण्यमानं सा ।
श्रीशान्तिनाथतीर्थं गत्वा च ननाम सा भावात् ॥ ४५ ॥
तत्र च विद्याचारणयतिनीर्यतनैकनिष्टचारित्रा ।
नत्वा जीववधस्योपेक्षया सानुतापाभूत् ॥ ४६ ॥
तत्कर्म तनूचक्रे किञ्चिदपान्ते स्वजीवितव्यस्य ।
निजगृहधनमोहार्त्तध्यानान्मृत्वाभवच्छकुनिः ॥ ४७ ॥
स व्यालो व्याधोऽभूत्ततोऽन्यदा मासि भाद्रपदसंज्ञे ।
वहुदिनवर्षोपशमे वटवृक्षस्था च सा क्षुधिता ॥ ४८ ॥
ससापत्यनिमित्तं स्वार्थं चाहारवीक्षिका शकुनिः ।
व्याधस्य तस्य गेहे चञ्च्वा जगृहे पललखण्डम् ॥ ४९ ॥ युग्मम्
उड्डीय चाऽन्तरिक्षे गच्छन्ती प्रणिहितेषुणा तेन ।
श्रीसुव्रतचैत्यपुरः पतिता कण्ठागतप्राणा ॥ ५० ॥
तत्पुण्यतोऽथ भानुर्भूषण इति यतियुगं तत्रागात् ।
कृपया ताभ्यामाश्वासिता च पानीयसंसेकात् ॥ ५१ ॥

---

१ P-शायिप्रवृत्तमदः २ P मोग. ३ P हुत्र. ४ J[1] अशाम
५ P पेशायां ६ P दर्पात नमोरिरान.

पञ्चपरमेष्ठिमंत्रं साश्राव्यत तत्र यामयुगलाभ्याम् ।
तत्तीर्थध्यानपरा परलोकं सा ततः समगात् ॥ ५२ ॥
अस्ति च सागरतीरे दक्षिणखण्डेऽथ सिंहलद्वीपः ।
राजात्र चन्द्रशेखरनामा कामाकृतिर्जज्ञे ॥ ५३ ॥
तस्यास्ति चन्द्रकान्ता रूपेण जितरतिप्रीतिः ।
शकुनिस्तद्दुहिताभूत्सुदर्शनेत्याख्यया विदिता ॥ ५४ ॥
अथ च जिनदासनामा भृगुपुरसार्थेश्वरः प्रवहणेन ।
तत्रायासीद्भूपतिरथ तेन प्राभृतैर्ददृशे ॥ ५५ ॥
आयुर्वेदी च तदा नृपतेः श्लेष्मोपशामकं चूर्णम् ।
प्रददे तीव्रत्रिकटुकयुक्तं तल्लेश उत्पतितः ॥ ५६ ॥
तेन घ्राणगतेन क्षुतमायातं बलाच्च वणिजोऽस्य ।
पञ्चपरमेष्ठिमंत्रः प्रोक्तोऽनेन प्रभावनिधिः ॥ ५७ ॥
राजसुता तं श्रुत्वा मूर्च्छां प्राप्ता पुरातनं जन्म ।
सस्मार जनकपृष्टा प्राच्यं निजगाद निजवृत्तम् ॥ ५८ ॥
अत्याग्रहेण पितरं तत्तीर्थोत्कण्ठिता तदापृच्छत् ।
अप्रेषयति गुरौ सा प्रतिशुश्रावानशनमेव ॥ ५९ ॥
अतिवल्लभापि दुहिता प्रहिता जिनदासार्थवाहेन ।
आलिभिरष्टादशभिः पदातिभिः षोडशसहस्रैः ॥ ६० ॥
अष्टादशभिर्यानैः मणिकाञ्चनरजतमौक्तिकापूर्णैः ।
अष्टाभिः कञ्चुकिभिस्तथांगरक्षैश्च तत्संख्यैः ॥ ६१ ॥
सहसा सह साचालीदशेषपरिवारपरिवृताथ ततः ।
सा प्राप राजपुत्री मासेनोपोषिता तीर्थम् ॥६२॥त्रिभिर्विशेषकम्
श्रीमुनिसुव्रतनाथं प्रणम्य तत्रोत्सवं च विदधेऽसौ ।
तौ भानुभूषणमुनी प्रणनाम च सुकृतिमुकुटमणिः ॥ ६३ ॥
धनमानीतं सर्वं ताभ्यां ढौकितवती कृतज्ञतया ।
निस्संगत्वादाभ्यां निषेधिता भवविरक्तत्वात्[1] ॥ ६४ ॥
उद्दध्रे सा चैत्यं जीर्णं तीर्थस्य कनकरत्नदलैः ।
श्रीशकुनिकाविहारः प्रसिद्धमिति नाम तस्याभूत् ॥ ६५ ॥
द्वादशवर्षाणि ततस्तप्त्वा दुस्तपतपोभरं प्रान्ते ।
विहितानशना मृत्वा दर्शनाख्या सुरी समभूत् ॥ ६२ ॥
देवीलक्षपरिवृता विद्यादेवीसखीत्वमापन्ना ।
सा पूर्वभवं स्मृत्वा सुरकुसुमैरर्चति स्म जिनम् ॥ ६७ ॥
अष्टादशवरसख्यस्तस्या दुर्गत्वमापुरत्र[2] पुरे ।
जम्बूद्वीपसमानावासा भुवनेषु निवसन्त्यः ॥ ६८ ॥

---

१ J H भवति ( वि ) रक्ताभूत्. २ P र्गत्व

अथ सा विदेहनन्दीश्वरादितीर्थेषु वन्दते प्रतिमाः ।
तीर्थकृतां श्रीसुव्रतपदकमलध्यानलयलीना ॥ ६९ ॥
श्रीवीरस्य पुरः साऽन्येद्युर्नाट्यमुत्तमं विदधे ।
तत्र सुधर्माधीशः पप्रच्छ जिनं किमेतदिति ॥ ७० ॥
तत्पूर्वभवं सर्वं सर्वज्ञः प्रथयति स्म तत्पुरतः ।
अस्माच्च तृतीयजन्मन्येषा निर्वाणमेष्यति च ॥ ७१ ॥
एतत्सामर्थ्यवशाद्भृगुपुरमेतन्न भंगमाप्नोति ।
अतिसुरभिपुष्पफलरम्यमेतदिह विजितपरनगरम् ॥ ७२ ॥
सकलकुसुमावचायं विचिन्वती प्रतिदिनं जिनाचार्यैः ।
परसुरपूजनविघ्नं विदधे संतापदं लोके ॥ ७३ ॥
श्रीसंघप्रार्थनया श्रीमत्कलहंससूरयस्तां च ।
आर्य्यसुहस्तिविनेया संस्तभ्य निवारयामासुः ॥ ७४ ॥
सम्प्रति राजा च पुनर्जीर्णोद्धारं चकार तीर्थेऽस्मिन् ।
मिथ्यादृष्टिव्यन्तरवृन्दः तत्रोपससृजे च ॥ ७५ ॥
श्रीगुणसुन्दरशिष्यैर्निवारितास्ते च कालिकाचार्य्यैः ।
पञ्चाधिकविंशतियोजनान्तरा स्वभावेन ॥ ७६ ॥
श्रीसिद्धसेनसूरेर्दिवाकराद्बोधमाप्य तीर्थेऽस्मिन् ।
उद्धारं ननु विदधे राजा श्रीविक्रमादित्यः ॥ ७७ ॥
कालिकसूरिः प्रतिमां सुदर्शनाय व्यधापयद्यां प्राक् ॥
साकाशे गच्छन्ती निषेधिता सिद्धसेनेन ॥ ७८ ॥
श्रीवीरमुक्तितः शतचतुष्टये चतुरशीतिसंयुक्ते ।
वर्षाणां समजायत श्रीमानाचार्यखपटगुरुः ॥ ७९ ॥
मिथ्यादृष्टिसुरेभ्यो येन तदा सुव्रतप्रभोस्तीर्थम् ।
मोचितमिह ताथागतमतस्थितेभ्यश्च वादिभ्यः ॥ ८० ॥
श्रीवर्धमानसंवत्सरतो वत्सरशताष्टकेतिगते ।
पञ्चाधिकचत्वारिंशताधिके समजनि वलभ्याः ॥ ८१ ॥
भंगस्तुरुष्कविहितस्तस्मात्ते भृगुपुरं विनाशयितुम् ।
आगच्छन्तो देव्या निवारिताः श्रीसुदर्शनया ॥ ८२ ॥
श्रीवीरवत्सरादथ शताष्टके चतुरशीतिसंयुक्ते ।
जिग्ये स मल्लवादी बौद्धांस्तद्व्यन्तरांश्चापि ॥ ८३ ॥
श्रीसातवाहनाख्यो भूप इदं तीर्थमुद्धार पुनः ।
श्रीपादलिप्तसूरिस्तत्प्रतिष्ठां व्यधात्तत्र ॥ ८४ ॥
प्रत्यक्षीभूय तयोः पुरतो नागं सुदर्शना निदधे ।
विंशतितमतीर्थेश्वरनिर्वाणविधिमहानानूनागा ॥ ८५ ॥
श्रीआर्यखपटवंशे सूरिः श्रीविजयसिंह इत्यासीत् ।
शमदमनियमतपस्याकमलाकमलोपमाकलितः ॥ ८६ ॥

अन्येद्युः शत्रुञ्जयरैवतकप्रभृतितीर्थमुख्येषु ।
तीर्थाधिपान् प्रणन्तुं व्यहरत्कृतसंयमोद्धारः ॥ ८७ ॥
समगंस्त सुराष्ट्रायां शनैस्ततः प्राप रैवतकशैले ।
तं चारुरोह तीर्थस्वामिध्यानैकलीनमनाः ॥ ८८॥
श्रीमन्नेमिनाथतीर्थे शासनरक्षाविचक्षणा देवी ।
श्रीमत्पद्माभिधया प्रस्तावात्कथ्यते तदाख्यानम् ॥ ८९ ॥
तचेदं-काश्यपरोपितनगरे कासह्रदाख्ये समस्तभूदेवः ।
श्रीसर्वदेवनामा वेदचतुष्कस्य पारगतः ॥ ९० ॥
तस्यास्ति सत्यदेवीत्याख्या वरवल्लभा सतीरत्नम् ।
पुत्री च तयोरम्बादेवीनाम्नी सुकृतिमौलिः ॥ ९१ ॥
यौवनसंप्राप्तां तामावृणोदतिथिश्च कोटिनगरीयः ।
कुलशीलरूपचारुः स सोमभट्टाख्यया विदितः ॥ ९२ ॥
उद्वाह्य च स्वनगरे जगाम राजा जनाभिरामां ताम् ।
उत्सवतो निजगेहं प्राविक्षत्परिहृतक्लेशः ॥ ९३ ॥
एवं गच्छति काले पुत्रद्वयमजनि वृजिनमुक्तायाः ।
पूर्वो विभाकराख्यः शुभंकरो नामतोऽन्यश्च ॥ ९४ ॥
तत्र श्रीनेमिजिनान्तेवासी सुधर्मसूरीणाम् ।
मुनियुगलं तद्वेश्मनि भिक्षार्थे विशदवृत्तमगात् ॥ ९५ ॥
अम्बादेव्यपि निर्मलमनसा शुद्धं समस्तमप्यन्नम् ।
दानविधिविहितहर्षा व्यजीहरद्वासनैकविधिः ॥ ९६ ॥
प्रहितौ प्रणम्य साधू तावत् प्रायाच्च सोमभट्टश्च ।
कृतवैश्वदेवकृत्यं विना कथं रसवती स्पृष्टा ॥ ९७ ॥
इत्यपराधोद्भावनपूर्वं दुर्वचनसंहतिमवादीत् ।
तामसुखविकारां च प्रजहार खरं चपेटाभिः ॥ ९८ ॥
गृहमानुषैश्च सामोचितानुकम्पावशात्ततो वनिता ।
अपमानान्निरगच्छत्पुत्रावादाय सा गेहात् ॥ ९९ ॥
आरोहयदथ कट्यां लघुं तथा चांगुलिं प्रसह्य गुरुम् ।
व्यमृशज्जिनमुनिदाने वरयित्वाहं पराभूता ॥ १०० ॥
तस्मात्स एव मार्गः शरणं भवतु जैनविधिविशदः ।
श्रीरैवतगिरिमभि सा मानारूढा ययौ त्वरितम् ॥ १०१ ॥
क्षुधिता तृषिता श्रान्ता पुनरुच्छ्रितमारुरोह गिरिराजम् ।
ध्यात्वेति सुकृतकामा प्रणनामारिष्टनेमिजिनम् ॥ १०२ ॥
चैत्यान्निर्गत्य ततो विश्रान्तां चूततरुतले तनुजः ।

---

१ श्री नेमि २ P-मवृणो ३ J H-न्तेवासिनी. ४ J H मसुखविकारं च जहार सुख.

परिपक्किमफललुंबीं क्षुधातुरः प्रार्थयामास ॥ १०३ ॥
तामस्य चार्पयित्वा श्रीनेमिस्मरणमथ विधायैषा ।
झम्पापातं चक्रे तस्माच्छिखरात्सपुत्रापि ॥ १०४ ॥
श्रीनेमितीर्थनाथस्मृतिवशतो दैवतर्द्धिमाप तदा ।
विस्मृतकोपाटोपो विप्रोपि प्रापदनुतापम् ॥ १०५ ॥
अकथितवार्तो निलये सोप्यस्या आनुपदिकतां प्राप्य ।
आरूढो रैवतके सहकारं रैवतं चाप ॥ १०६ ॥
तन्नितयमृर्तिं मत्वा हत्यादोषी कथं नु जीवामि ।
आकूणितगन्धर्व प्रदर्शयमानोऽङ्गुलीभिरहम् ॥ १०७ ॥
तस्मान्ममापि मृत्युः श्लाघ्योत्रैवार्हतापवित्रेऽद्रौ ।
योऽमीषां सा मे स्याद्गतिरपरैः प्रलपितैः किंनु ॥ १०८ ॥
एवं विचिन्त्य पेते तत्रैवानेन भैरवे भयदे ।
लेभे तद्वाहनता सिंहतया व्यन्तरीभूय ॥ १०९ ॥
साम्बादेवी नेमिनाथतीर्थेऽत्र भक्तियुक्तानाम् ।
साहाय्यं कुर्वाणा तत्र गिरौ विद्यतेऽद्यापि ॥ ११० ॥
अथ विजयसिंहसूरिस्तत्राष्टाङ्गप्रणाममाधाय ।
विहिततीर्थोपवासस्तीर्थेशं तुष्टुवे सुष्टु ॥ १११ ॥
निरुपमचारित्रनिधिं तत्र प्रेक्ष्यामुमंबिका देवी ।
क्षणदायां प्रत्यक्षीभूत्वा प्रणनाम तत्पादौ ॥ ११२ ॥
अम्बा त्वं द्विजपत्नी पतिपरिभूता जिनाङ्घ्रिसरसिरुहम् ।
स्मृत्वा सुरत्वमाप्ता त्वामनु पतिरपि च तादृगभूत् ॥ ११३ ॥
तस्येति वचः श्रुत्वा हृष्टावादीत्समादिशत किंचित् ।
ते प्राहुरनीहानां कार्यं किमपि नास्ति शुभे ॥ ११४ ॥
सा निःस्पृहत्वतुष्टा विशेषतस्तानुवाच बहुमानात् ।
गुटिकां गृह्णीत विभो चिन्तितकार्यस्य सिद्धिकरीम् ॥ ११५ ॥
चक्षुरदृश्यो गगनेचरश्च रूपान्तराणि कर्ता च ।
कवितालब्धिप्रकटो विपद्बद्धस्य मोक्षकरः ॥ ११६ ॥
भवति जनो गुरुलघुतां प्रपद्यते स्वेच्छया तथावद्यम् ।
अनया मुखे निहितया विकृष्टया तदनु सहजतनुः ॥ ११७ ॥
सुगुरोरनिच्छतोपि हि हस्ते मुक्त्वा तिरोदधे च सुरी ।
वदने तां न्यस्य प्राक् श्रीनेमिस्तवममुं चक्रे ॥ ११८ ॥
'नेमिः समाहितधियामित्यादिभिरमर्त्यवाक्यसंकाशैः ।
काव्यैरस्तौच्छ्रीमन्नेमिस्तुतिरस्ति साऽद्यापि ॥ ११९ ॥

---

१ J II तामुपा०. २ J II श्रीनेमि.. ३ J II मन्नेमिनाथमस्तौषी.

सूरिरथ तीर्थयात्रां विधाय चायात्तदा भृगुक्षेत्रे ।
संघप्रवेशमुख्यैर्महोत्सवैस्तं समर्चयत ॥ १२० ॥
अन्येद्युरंकुलेश्वरनगरात् प्रबलेन पवनवेगेन ।
जाज्वल्यमान उच्चैर्वंशः प्रकटः प्राप तन्नगरे ॥ १२१ ॥
अर्चिर्वलयपरिप्लुतः सदनापणहर्म्यचैत्यकोटीषु ।
अनलः प्रससार तदा सागर इव मुक्तमर्यादः ॥ १२२ ॥
प्रथमकवले तृणावृतगृहाणि कावेल्लुकावृतानि तथा ।
मध्याहारे किल कुट्टिमानि तृप्त्यर्थमस्यासन् ॥ १२३ ॥
दंदह्यमानमानुषपशुखचराक्रन्दभैरवारावम् ।
शारदगर्जितरवोऽसौ बधिरितविंयदनिल उत्पेदे ॥ १२४ ॥
भस्मीकृतं समस्तनगरं तेनेह दहनरूपेण ।
समवर्तिना सगोपुरदुर्गाररियंत्रपरिकरितम् ॥ १२५ ॥
उपशान्ते नियतिवशादनुपर्क्रमसाध्य ईदृगुपसर्गे ।
श्रीमुनिसुव्रतचैत्यं काष्ठमयं भस्मसात्तदभूत् ॥ १२६ ॥
पाषाणपित्तलामयदेवप्रतिमा विशीर्णसर्वाङ्गाः ।
अभवन् सुव्रतबिंबं तस्थावेकं तु सदवयवम् ॥ १२७ ॥
विश्वप्रकाशरूपा दाहेग्नेरस्य ननु नवा मृत्स्ना ।
समराङ्गण इव मर्दितवीरे स्थैर्यस्थिते पुंसि ॥ १२८ ॥
अथ विजयसिंहसूरिर्गुटिकां वदने निधाय सत्पात्रम् ।
हस्ते कृत्वा तीर्थोद्धाराय स गोचरं व्यचरत् ॥ १२९ ॥
एत्य ब्राह्मणवेश्मसु पूर्वमगाद्धमलाभवक्ताऽसौ ।
श्रीमुनिसुव्रतचैत्योद्धारे भिक्षां प्रयाचे च ॥ १३० ॥
पञ्चाशत्कोपि शतं द्विशतीं वा कोपि जातरूपस्य ।
प्रददौ तस्य महर्षेः पञ्चसहस्रास्तदाभूवन् ॥ १३१ ॥
अष्टमहासिद्धिभृतस्तस्यासाध्यो धनागमो नैव ।
चारित्रधनं रक्षन्नादत्तादत्तमिह भगवान् ॥ १३२ ॥
पुनरुददीधरदाशु प्रधानदारुव्रजेन सूत्रभृता ।
वर्द्धकिरत्नेन तदा चक्रीवाह्लाय जिनसद्म ॥ १३३ ॥
तत्करवासप्रभवप्रभावतस्तत्र समदहद्वह्निः ।
अमृतनिधौ तन्मन्त्रे न प्रभवति किन्तु विध्यति ॥ १३४ ॥

---

१ J H मुखैः. २ J H वंशकटं नाम ३ P °परिप्लुतसदना. ४ J H क्ये° ५ P गर्जितरवा° ६ P दनल उत्पेते. ७ P समस्तं नगरं तेनेह नगररूपेण । ८ J H दनुकम्प्यस्पर्ध्य° ९ P °मयदेवा विविदीर्ण° १० J H दाहमेरस्य न तु भविमृत्स्नाः. ११ J H °रत्नेन° १२ P विध्याते ।

एकादशसु समानां लक्षेषु विंशजिनसिद्धेः ।
पञ्चाशीतिसहस्रीषट्शतषडशीतिसहितेषु ॥ १३५ ॥
जीर्णमुपजिह्विकाभिर्जर्जरकाष्ठं चिरेण तज्ज्ञे ।
पुनरुद्दध्रे ग्रावभिरंबड इव राणकः श्रीमान् ॥ १३६ ॥
श्रीविजयसिंहसूरिर्जिनसमयद्रोणिकर्णधारकल्पः ।
आयुःप्रान्तेऽनशनं पुनर्गृह्य दैवीं भुवं प्राप ॥ १३७ ॥
अद्यापि तस्य वंशे प्रभावकाः सूरयः समुद्यन्ते ।
यत्तेजःप्रसरेण प्रसर्पता शासनं जयति ॥ १३८ ॥

इत्थं प्रभोर्विजयसिंहमुनीश्वरस्य
वृत्तं पवित्रमतिदुष्करमल्पसत्त्वैः ।
अश्वाववोधवरतीर्थचरित्ररम्यं
वृत्तेन चातिशयचारु सुदर्शनायाः ॥ १३९ ॥
अम्बासुरीवरचरित्रपवित्रमत्र
संघस्य पुष्टिकरमद्भुतमुन्नतायाः ।
अभ्यस्यमानमतुलं प्रकटप्रभावं
भूयात्समस्तजिनशासनवैभवाय ॥ १४० ॥

श्रीचन्द्रप्रभसूरिपट्टसरसीहंसप्रभः श्रीप्रभा-
चन्द्रः सूरिरनेन चेतसि कृते श्रीरामलक्ष्मीभुवा ।
श्रीपूर्वर्षिचरित्ररोहणगिरौ प्रद्युम्नसूरीक्षितः
शृङ्गोऽजायत पष्ठ एष गुटिकासिद्धस्य वृत्तं प्रभोः ॥ १४१ ॥

इति श्रीविजयसिंहसूरिप्रबन्धः ॥ ग्रंथाग्रं १७९ ॥ अ०
७ ॥ उभयं १२८७ । अक्षर ॥ १८ ॥

---

श्रीजीवसूरिप्रबन्धः

अर्हद्ब्रह्मस्वगोः प्राणोल्लासेन चरणोदयम् ।
विदधे स ददातु श्रीजीवदेवप्रभुः श्रियः ॥ १ ॥
निजप्राणैः परप्राणान् पूर्वेऽपि स्माऽऽददा प्रभुः ।
अक्षतो मृतजीवातुर्नापरो जीवदेववत् ॥ २ ॥
अद्य प्राचीनकालीयो माहात्म्यस्य वर्णने ।
परं मां मुखरं कर्तुं तच्चक्रेनापरः प्रभुः ॥ ३ ॥

---

१ J–श्रीविजयसिंहसूरिप्रबन्धे [illegible] P H–[illegible] सूरिचरितं नाम ॥ २ J H–अर्हद्[illegible] । [illegible] दयम् । ३ P जीवजीवातु. ४ J H–[illegible]

लवित्रं जाड्यकक्षस्य वहित्रं पापवारिधेः ।
धवित्रं दुःखधर्मस्य चरित्रं तस्य कीर्त्यते ॥ ४ ॥
जगत्प्राणः पुरा देवो जगत्प्राणप्रदायकः ।
स्वयं सदानवस्थानः स्थानमिच्छन् जगत्यसौ ॥ ५ ॥
वायटाख्यं महास्थानं गूर्जरावनिमण्डनम् ।
ददौ श्रीभूमिदेवेभ्यो ब्रह्मभ्य इव मूर्तिभिः ॥ ६ ॥ युग्मम् ।
शालातालाकसंबन्धनिवेशेन तदा मरुत् ।
निदधे ब्रह्मशालायां चैत्ये च परमेष्ठिनम् ॥ ७ ॥
मलयाद्रौ यथा सर्वे चन्दनन्ति महीरुहः ।
ब्राह्मणा वणिजश्चात्र तथासन् वायटाख्यया ॥ ८ ॥
अभूज्जातिः स्फुरज्जातिपुष्पसौरभनिर्भरा ।
सरसालिभिराराध्या तन्नाम्ना सर्वसूर्ध्वगा ॥ ९ ॥
धर्मदेवः श्रियां धर्मश्रेष्ठी तत्रास्ति विश्रुतः ।
साक्षाद्धर्म इव न्यायार्जितद्रव्यप्रदानतः ॥ १० ॥
शीलभूस्तस्य कान्तास्ति नाम्ना शीलवती यया ।
आनन्दिवचसा नित्यं जीयन्ते चन्द्रचन्दनाः ॥ ११ ॥
तयोः पुत्रावुभावास्तां श्रेयःकर्मसु कर्मठौ ।
महीधरमहीपालाभिधाभ्यां विश्रुताविति ॥ १२ ॥
महीपालोप्यभूत्कर्मदोषाद्देशान्तरभ्रमी ।
महीधरश्च सौभ्रात्रस्नेहाद्वैराग्यवानभूत् ॥ १३ ॥
तत्रास्ति जंगमं तीर्थं जिनदत्तः प्रभुः पुरा ।
संसारवारिधेः सेतुः केतुः कामादिवरिव्रजे ॥ १४ ॥
संप्राप्य सूत्रधारं यं सत्काष्ठात्कर्षसंघटम् ।
संपूर्णसिद्धिसौधस्य मध्यसाध्या समाश्रिताः ॥ १५ ॥
अन्यदा तं प्रभुं नत्वा भवोद्विग्नो महीधरः ।
बंधोर्विरहवैराग्यात् प्रार्थयज्जैनसंगमम् ॥ १६ ॥
योग्यं विज्ञाय तं तस्य पितरौ परिपृच्छ्य च ।
प्रव्रज्यां प्रददौ सूरिरभाग्यालभ्यसेवनः ॥ १७ ॥
गुरुशिक्षां द्विधादायानेकविद्याब्धिपारगः ।
अतिप्रज्ञावलः सोऽभूदभूमिः परवादिनाम् ॥ १८ ॥
भववारिधिनिस्तारपोताभं भविनां भुवि ।
तं शिष्यं स्वपदे न्यस्य गुरुः प्रेत्य श्रियोऽभजत् ॥ १९ ॥

---

१ J H—सदासव० २ J H—जयत्यसौ. ३ J H—वायडा० ४ J H—मण्डलम्. ५ J H—०नाम् । ६ J H—वायडा. ७ J H omit केतुः. ८ J H—सत्काष्ठान्०. ९ P मध्यासनाश्रिताः.

शाखानुगतनाम्नासौ श्रीरासिं (शि) लगुरुस्ततः ।
विद्याविनोदतः कालं गच्छन्तमपि वेद न ॥ २० ॥
महीपालस्तथा तस्य बन्धू राजगृहे पुरे ।
प्रापद्दिगम्बराचार्यं श्रुतकीर्तिमिति श्रुतम् ॥ २१ ॥
प्रतिबोध्य व्रतं तस्य ददौ नाम च स प्रभुः ।
सुवर्णकीर्तिरिति तं निजाज्ञाशिक्षयत्क्रियाम् ॥ २२ ॥
श्रुतकीर्तिगुरुस्तस्यान्यदा निजपदं ददौ ।
श्रीमदप्रतिचक्राया विद्यां च धरणार्चिताम् ॥ २३ ॥
परकायप्रवेशस्य कलां चासुलभां कलौ ।
भाग्यसिद्धां प्रभुः प्रादात्ताद्दग्योगो हि तादृशः ॥ २४ ॥
तत्पुरागतवाणिज्यकृद्भ्यो ज्ञात्वा जनन्यथ ।
जगाम मिलनायास्य भर्तरि त्रिदिवं गते ॥ २५ ॥
मिलितास्तस्य तद्गृहैर्मानिता मान्यतानिधिः ।
जननीदृग्गुरो रत्नखानिवत्कस्य नार्हिता ॥ २६ ॥
तीर्थकृद्धर्मतत्त्वानामविवादेपि काञ्चन ।
समाचारभिदां दृष्ट्वा निज एव सुतद्वये ॥ २७ ॥
अवदत् शंकिता वत्स जैने धर्मेपि वोऽन्तरम् ।
श्वेताम्बरोतिनिष्ठाभूद्दृष्टोयं निःपरिग्रहः ॥ २८ ॥
किञ्चिद्भवान् सुखी पूजालोलो बहुपरिग्रहः ।
तन्मे शंस कथं सिद्धिः प्राप्यते व्यापृतैर्जनैः ॥ २९ ॥
ततस्त्वं पूर्वजस्थाने समागच्छ मया सह ।
यथोभौ भ्रातरौ धर्मे संविचार्यार्यसम्मतम् ॥ ३० ॥
शास्त्रैः प्रमाणसिद्धान्तैर्बुध्येयँमितरेतराम् ।
तदेकमतिकौ भूत्वा धर्मे स्थापयतं हि माम् ॥ ३१ ॥
स मातुरुपरोधेन विजह्रे वायटे पुरे ।
नाशिक्यावित्र तौ तत्राभिन्नरूपौ च संगतौ ॥ ३२ ॥
आचार्यौ किल सोदर्यौ श्वेताम्बरदिगम्बरौ ।
स्वसाचारं तथा तत्त्वविचारं प्रोचतुः स्फुटम् ॥ ३३ ॥
दिग्वासा निर्म्ममामासः सद्भतः श्वेतवाससा ।
अपि प्रौढवचः शक्तिर्बोधितः शोधितांहसा ॥ ३४ ॥
तावन्यदा सविज्या च भिक्षावृत्त्यै निमन्त्रितौ ।
महाभक्त्या तदाचारदर्शनार्थं च किञ्चन ॥ ३५ ॥

---

१ P ल०. २ P-०ग्योग्या हि. ३ P-जनस्य घ. ४ J H-सुतद्वयोः ५ J H omit-दन् ६ P-तौ० ७ P बुध्येथा० ८ J H ०टे. ९ P नाशक्या०. 'नासत्याविव' इति स्यात्.

एकः शुश्रूषितस्थालीवृन्दे भोज्यविधिः कृतः ।
सामान्यो मध्यमस्थानेष्वपरः प्रचरः पुनः ॥ ३६ ॥
दिग्वासाः पूर्वमायातो द्वेधाप्यस्याथ दर्शितः ।
अमत्रनिकरो रम्यभाण्डस्थस्तेन चाहतः ॥ ३७ ॥
यावद्दृष्टः कदर्योऽसौ शीतो दग्धो विसंस्कृतिः ।
सविकारं मुखं बिभ्रदपश्यन् मातरं तदा ॥ ३८ ॥
तथा द्वितीयपुत्रस्य साधुयुग्मं समागमत् ।
प्रदर्श्य भोज्ययुग्मं च जननी प्राह हर्षतः ॥ ३९ ॥
अनयो रुचितं यद्वस्तद्गृहीतेति जल्पिते ।
विमृश्य प्राहतुः साधू ग्राह्यं नः शुद्धमेव तत् ॥ ४० ॥
आधाकर्मिकदोषे च संदिग्धे कल्पते न तत् ।
अपि द्वयमनादायागातां तौ मुनिसत्तमौ ॥ ४१ ॥
अथ प्राह सवित्री च सवित्री धर्मकर्मणः ।
सुतं दिगम्बराचार्ये दृष्टं भ्रातृव्रतं त्वया ॥ ४२ ॥
बही रम्ये शुभाभ्यासे रक्तानामल्पकं फलम् ।
आहार इव धर्मेपि ध्यात्वेति सरुचिं कुरु ॥ ४३ ॥
प्रतिबुद्धो जनन्या स वाग्भिर्बन्धोश्च सन्मतिः ।
भास्वान् प्रपद्यतेस्मैव महसे निर्मलाम्बरम् ॥ ४४ ॥
श्रीरासीलप्रभोः पार्श्वे दीक्षाशिक्षाक्रमोदयः ।
जैनागमरहस्यानि जानन् गीतार्थतां ययौ ॥ ४५ ॥
अन्यदा सद्गुरुर्योग्यं बन्धुपट्टे न्यवीविशत् ।
श्रीजीवदेव इत्याख्याविख्यातः सद्गुरुर्बभौ ॥ ४६ ॥
यतिपञ्चशतीरूपपरिवारविराजितः ।
आन्तरद्वेपिनिःपेपनिस्त्रिंशः सदयोपि सन् ॥ ४७ ॥
व्याख्यां कुर्वन्नुदग्रश्रीः श्रीवीरभवनेऽन्यदा ।
योगिना भोगिना दृष्टिविषेणेवेक्षितो गुरुः ॥ ४८ ॥ युग्मम् ।
दध्यौ स च महातेजाः सकलो धवलाम्बरः ।
सार्वभौम इवाभाति जनेऽस्मिन् विस्मयं दधत् ॥ ४९ ॥
आकृतोपद्रवे शक्तिर्या सा कामेऽस्य चेदिह ।
विदधे किमपि क्षूणमक्षूणं तदहं पुमान् ॥ ५० ॥
विमृश्येति सभामध्यमध्यासीनः स्वलीलया ।
लीलयावध्यपर्यंकमुपाविशदिलातले ॥ ५१ ॥

---

१ P omits प्रचरः २ J H–श्वेधो० ३ J H–सीतोदग्धो. ४ P प्रदर्श. ५ J H read प दद्दा for जननी. ६ J H यद्वत्त० ७ P आह तुः (!) ८ P ०यागतो० ९ J H–धर्मो० १० P–राशिल०

वाचकस्य रसज्ञां चास्तम्भयन् मौनवान् स च ।
अभूत्तवं(दिं)गितैर्ज्ञातं गुरुणा योगिकर्म तत् ॥ ५२ ॥
स्वशात्तथा वाचने शक्तं स्वं विनेयं विधाय च ।
अमुंचत्समये व्याख्यामव्याकुलमनाः प्रभुः ॥ ५३ ॥
तस्य पर्यस्तिकामूमावासनं वज्रलेपवत् ।
तस्थौ यथा तथा तस्य प्रस्तरेणेव निर्मितम् ॥ ५४ ॥
ततोऽवदद्सौ कृत्वा करसंपुटयोजनम् ।
अलीकप्रणिपातेन महाशक्ते विमुञ्च माम् ॥ ५५ ॥
अपि श्रद्धालुभिः कैश्चिद्विज्ञप्तः कृपया प्रभुः ।
मुक्तोऽगात्तेन कः शक्तः कुञ्जरेणेक्षुभक्षणे ॥ ५६ ॥
प्रभुर्न्यषेधयत्तत्र साधुसाध्वीकदम्बकम् ।
उदीच्यां दिशि गच्छन्तं स्वीकृतायां कुयोगिना ॥ ५७ ॥
धर्मकर्मनियोगेन साध्वीयुगमगात्ततः ।
तत्र कासारसेतौ च तिष्ठन् योगी ददर्श तत् ॥ ५८ ॥
अथ सन्मुखमागत्य लाघवाल्लाघवाश्रयः ।
एकस्या मूर्ध्नि चूर्णञ्च किञ्चिच्चिक्षेप निष्कृपः ॥ ५९ ॥
तस्य सा पृष्ठतो गत्वा पार्श्वे निविविशे च(त)तः ।
वृद्धयोक्ता न चायाति धिक्कष्टं पूज्यलंघनम् ॥ ६० ॥
साश्रुरागत्य सूरीणां तैद्वृत्तं व्यजिज्ञपत् ।
मा विषादं भजिष्यामः कार्येत्रेति प्रभुर्जगौ ॥ ६१ ॥
ततः कुशमयं तत्र पुत्रकं ते समार्पयन् ।
चतुर्णां श्रावकाणां च शिक्षित्वा तेऽथथो ययुः ॥ ६२ ॥
निर्गत्य च बहिश्चैत्याच्छित्वा तस्य कनिष्ठिकाम् ।
तत्पार्श्वगाः करं तस्य ददृशुस्ते निरङ्गुलिम् ॥ ६३ ॥
पृष्टे कस्मादिदं जातमकस्मादिति सोऽवदत् ।
ऊचे तैर्मुच्यतां साध्वी बहुप्रत्यूहकारिणी ॥ ६४ ॥
अमानयति तां वाचं तत्र ते पुत्रकाङ्गुलिम् ।
द्वितीयां पश्यतस्तस्याश्छिन्दन् साप्यत्रुटद्द्रुतम् ॥ ६५ ॥
अथाभ्यधुर्दण्डसाध्या नीचास्तत्कृपयाङ्गुली ।
तव छिन्ना शिरश्चैवं छिन्द्मश्चेत्त्वकं कुतः ॥ ६६ ॥
मुञ्च साध्वीं न चेत्पापं छेत्स्यामस्तव मस्तकम् ।
न जानासि परे स्वे वा शक्त्यंतरमचेतन ॥ ६७ ॥

---

१ J H अनीकप्रतिपातेन. २ J H ०गमिन. ३ P निषे० ४ J H. साश्रुरागत्य सा तद्वृत्त व्यजिज्ञपत् । ५ J H श्रावि० ६ P पृष्टे.

सम्यक् भीतस्ततः सोपि प्राह नीरेण सिच्यताम् ।
अस्याः शिरस्ततो यातु निजं स्थानमनाकुला ॥ ६८ ॥
तथा कृते च तैः साध्वी तत्र साभूत्सचेतना ।
आगत्य च निजं स्थानं सा बाला लोचनां लली ॥ ६९ ॥
भीतभीतः पलाय्यासौ योगी देशान्तरं ययौ ।
तादृशां किं वराकाणां गम्या गुरव ईदृशाः ॥ ७० ॥
इतः श्रीविक्रमादित्यः शास्त्यवन्तीं नराधिपः ।
अनृणां पृथिवीं कुर्वन् प्रवर्तयति वत्सरम् ॥ ७१ ॥
वापटे[1] प्रेषितोऽमात्यो लिम्बाख्यस्तेन भूभुजा[2] ।
जनानृण्याय जीर्णं चापश्यच्छ्रीवीरधाम तत् ॥ ७२ ॥
उद्धार स्ववंशेन निजेन सह मन्दिरम्[3] ।
अर्हतस्तत्र सौवर्णकुम्भ[4]दण्डध्वजालिभृत् ॥ ७३ ॥
संवत्सरे प्रवृत्ते स षट्सु वर्षेषु पूर्वतः ।
गतेषु सप्तमस्यान्तः प्रतिष्ठां ध्वजकुम्भयोः ॥ ७४ ॥
श्रीजीवदेवसूरिभ्यस्तेभ्यस्तत्र व्यधापयन् ।
अद्याप्यभङ्गं तत्तीर्थममूदृग्भिः प्रतिष्ठितम् ॥ ७५ ॥
इतश्चास्ति महास्थाने प्रधानो नैगमव्रजे ।
दारिद्र्यारिजये मल्ल‧श्रेष्ठी[5] लल्लः कलानिधिः ॥ ७६ ॥
महामाहेश्वरः कोटिसंख्यद्रव्येण भास्वरः ।
महादानं[6] मुदा सोऽदात् सूर्यग्रहणपर्वणि ॥ ७७ ॥
तथा होमं[7] समारब्धवतानेन द्विजोत्तमाः ।
ऋत्विजो यायजूकाश्चाहूता अध्वरदीक्षिताः ॥ ७८ ॥
तानभ्यर्च्य महाभक्त्या वेदविद्याविशारदान् ।
प्रावर्त्यत ततो होमः प्रौढमंत्रस्वरोर्जितः ॥ ७९ ॥
तत्र कुण्डोपकण्ठेहिस्तदूर्ध्वस्थाम्लिकाद्रुमात् ।
धूमाकुलाक्षियुग्मोसौ फटत्फटिति चापतत् ॥ ८० ॥
आदातुमेष भोगीन्द्रः स्वयमागत आहुतीः ।
वाचालेषु द्विजेष्वेवं कोपि वह्नौ तमक्षिपत् ॥ ८१ ॥
जाज्वल्यमानमुद्वीक्ष्य यजमानः सुधीश्च तान् ।
कृपया कम्पमानाङ्गः प्राह किं दुष्कृतं कृतम् ॥ ८२ ॥
जीवन् पञ्चेन्द्रियो जीवः स्फुटं दृश्यः सचेतनः ।
सहसैव ज्वलद्वह्नौ क्षिप्यते धर्म एष कः ॥ ८३ ॥

१ H.—डे. २ P.—तो लिंबालिबाख्य० ३ P.—सवंशे... समन्दिरम्. ४ P—कुम्भ. ५ J H.—मल्लः जयेमल्ल ६ P.—महादासोदान्सूर्य० ७ J H—मोहसमा० ८ P H.—न्त.

अध्वर्युराह च श्रेष्ठिन् नहि दोषोस्ति कश्चन ।
सुमंत्रसंस्कृते वह्नौ पतितः पुण्यवानहिः ॥ ८४ ॥
यतोऽत्र ज्वलने मृत्वा हिंस्रजीवा महांहसः ।
प्राप्नुयुर्देवभूयं ते समानुष्यमथ ध्रुवम् ॥ ८५ ॥
तत्प्रत्युतोपकारोयं विदधे वटुनामुना ।
अतोऽल्पमपि नैव त्वं संतापं कर्तुमर्हसि ॥ ८६ ॥
कृपालुरास्तिकश्चेत्त्वं प्रायश्चित्तं ततः कुरु ।
सौवर्णं द्विगुणं तस्मादहिं देहि द्विजव्रजे ॥ ८७ ॥
तदादेशादसौ सर्पं क्षिप्रं हैममचीकरत् ।
मंत्रैस्तं संस्कृतं दृष्ट्वा छेदकाले तमब्रवीत् ॥ ८८ ॥
पूर्वस्य फणिनो हिंसापापेऽसौ कारितो मया ।
एतद्वधेऽपरः कार्योऽनवस्थापद्यतात्र तत् ॥ ८९ ॥
ततोऽहं नावगच्छामि धर्ममेनं कथं मृषा ।
विप्लावयत मां तस्माद्विसृष्टं सकलं मया ॥ ९० ॥
वह्निर्विध्यापितः कुण्डमुद्दृत्तं प्रेषिता द्विजाः ।
शान्ते मैरेयमाहात्म्ये न कोऽप्यसदृशं चरेत् ॥ ९१ ॥
ततःप्रभृत्यसौ धर्मदर्शनानि समीक्षते ।
भिक्षार्थं तद्गृहे प्राप्तं श्वेताम्बरमुनिद्वयम् ॥ ९२ ॥
अन्नं संस्कृत्य चारित्रपात्राणां यच्छत ध्रुवम् ।
अमीषां ते ततः प्रोचुर्नास्माकं कल्पते हि तत् ॥ ९३ ॥
पृथिव्यापस्तथा वह्निर्वायुः सर्वो वनस्पतिः ।
त्रसाश्च यत्र हन्यन्ते कार्ये नस्तन्न गृह्यते ॥ ९४ ॥
अथ चिन्तयति श्रेष्ठी वितृष्णत्वादहो अमी ।
निर्ममा निरहङ्काराः सदा शीतलचेतसः ॥ ९५ ॥
ततोऽवददसौ धर्मं निवेदयत मे स्फुटम् ।
ऊचतुस्तौ प्रभुश्चैत्ये स्थितस्तं कथयिष्यति ॥ ९६ ॥
इत्युक्त्वा गतयोः स्थानं स्वं तयोरपरेऽहनि ।
ययौ लल्लः प्रभोः पार्श्वे चक्रे धर्मानुयोजनम् ॥ ९७ ॥
ते च प्राहुर्दया धर्मः सर्वज्ञो देवता जिनः ।
महाव्रतधरो धीरो गुरुर्ध्वस्तान्तरद्विषन् ॥ ९८ ॥
रागाद्यंकाश्रयो देवो गुरुश्च सपरिग्रहः ।
धर्मश्च पशुहिंसाभिरेष मिथ्याभ्रमो महान् ॥ ९९ ॥
तस्मात्परीक्षया धर्मं प्रतिपद्यस्व धार्मिक ।
परीक्षापूर्वकं टंकाद्यपि युष्माभिरिष्यते ॥ १०० ॥

---

१ J H. तत्रादे० २ J H० स्पष्ट

श्रुत्वेति स प्रपेदेऽथ स सम्यक्त्वं व्रतावलीम्।
धर्मं चतुर्विधं ज्ञात्वा समाचरदहर्निशम् ॥ १०१ ॥
आह चैष प्रभो किंचिदवधारयताधुना।
द्रव्यलक्षस्य संकल्पो विहितः सूर्यपर्वणि ॥ १०२ ॥
तदर्धं व्ययितं धर्माभासे वेदस्मृतीक्षिते।
कथमर्द्धं मया शेषं व्यपनीयं तदादिश ॥ १०३ ॥
मम चेतसि पूज्यानां दत्तं बहुफलं भवेत्।
तद्गृह्णीत प्रभो यूयं यथेच्छं दत्त वादरात् ॥ १०४ ॥
अथाहुर्गुरवो निष्किञ्चनानां नो धनादिके।
स्पर्शोऽपि नोचितो यस्माद्वक्तव्यं किंतु संग्रहे ॥ १०५ ॥
चिन्तां भवांस्तु माकार्षीत् श्वः संध्यासमये तव।
प्रक्षालितैकपादस्य प्राभृतं यत्प्रढौकते ॥ १०६ ॥
समीपे नस्तदा नेयं कथयिष्यामहे तव।
श्रुत्वेति सदनं सोऽगाद्विमृशन् स्वगुरोर्वचः ॥ १०७ ॥
परेह्नि चोक्तवेलायां कश्चिद्वर्द्धकिरानयत्[1]।
तां शय्यापालिकां नो या भूपस्यापि परिग्रहे ॥ १०८ ॥
स्मरन् गुरुवचः श्रेष्ठी तेन सार्द्धमुपाश्रये।
गत्वा व्यजिज्ञपत्पूज्यं पुरतो विस्मयोन्मुखः ॥ १०९ ॥
प्रभवः पुनरागत्य वासान्निक्षिप्य धूर्वहौ।
तदाधिवासयामासुरादिशंश्चेति तं स्फुटम् ॥ ११० ॥
धुरंधराविमौ यत्र प्रयान्तौ तिष्ठतः स्वयम्।
तत्र जैनालयं रम्यं द्रव्येणानेन कारय ॥ १११ ॥
ओमिति प्रतिपद्याथ धौरेयौ मुंचतिस्म सः।
मुत्कलौ जग्मतुर्ग्रामे पिप्पलानकनामनि[2] ॥ ११२ ॥
तत्रावकरदेशेऽथ स्थितौ न चलतस्ततः।
ग्रामाधिपतिरेतस्य गौरवाद्भूमिमार्पयत् ॥ ११३ ॥
तत्र कर्मान्तरे सूत्रधारे द्राग् विहिते सति।
शिखरं मण्डपं प्रासादस्य संपूर्णतामगात् ॥ ११४ ॥
अवधूतः पुमान् कश्चिदपरेद्युः समाययौ।
दृष्ट्वा प्रसादमाधत्त प्रशंसां घ्राणकूणकः ॥ ११५ ॥
जनैस्तद्दूषणं पृष्टे जगाद प्रकटं[3] स च।
स्त्रियोऽस्थिशल्यमत्रास्ति[4] विश्वदूषणशेखरः[5] ॥ ११६ ॥
विज्ञापिते च पूज्यानां मानयित्वा च तेऽदिशन्।
उत्कील्य शल्यमाधाय चैत्यमारभ्यतां पुनः ॥ ११७ ॥

१ P- रानयन्. २ P.- पिप्पल०. ३ JH- कपटं. ४ P- स्तिशल्य०
५ JH. शेखर.

द्रव्याभावोद्भवा चिन्ता कार्य्या लल्ल नहि त्वया ।
द्रव्यं ते तदधिष्ठात्र्यः पूरयिष्यन्ति पुष्कलम् ॥ ११८ ॥
उत्कीलने समारब्धे निशि शुश्रुविरे स्वराः ।
नोत्कील्यमित्यविज्ञाते निपतन्त्यत्र लोष्टकाः ॥ ११९ ॥
पुनराख्यापिते वंद्यपादाध्यानमपूरयत् ।
देवाह्वाने कृते तत्र देवी साक्षादथाह तान् ॥ १२० ॥
कन्यकुब्जमहीभर्तुर्महिता दुहिता ह्यहम् ।
स्वीये सुखादिकादेशे तिष्ठन्ती गूर्जराभिधे ॥ १२१ ॥
म्लेच्छभंगभयादत्र कूपेऽहं न्यपतं तदा ।
अभूवं भूम्यधिष्ठात्री मृत्वा स्वं चास्ति मे बहु ॥ १२२ ॥
ततः स्वांगास्थिशल्यानि नानुमन्ये विकर्षितुम् ।
ममाननुमतौ कोपि किंचित्कर्तुं नहि प्रभुः ॥ १२३ ॥
धर्म्मस्थानेषु पूज्यत्वं वारये प्रभवस्ततः ।
एनामन्वनयन् शांता ततोऽमीषां वचोऽमृतैः ॥ १२४ ॥
अवोचद्यदि मामत्राधिष्ठात्रीं कुरुताधुना ।
तद्द्रव्यसहितामूमिर्धर्मस्थानाय गृह्यताम् ॥ १२५ ॥
गुरुभिः प्रतिपन्ने च चैत्ये निर्वर्त्तिते वरे ।
तदेव कुलिकां तस्या योग्यां पृथगचीकरन् ॥ १२६ ॥
आख्या भवनदेवीति कृता तस्यास्तदत्र च ।
अचिंत्यशक्तिरद्यापि पूजामाप्नोति धार्मिकैः ॥ १२७ ॥
अथ लल्लं द्विजा दृष्ट्वा जिनधर्म्मैकसादरम् ।
स्वभावं स्वमजानाना दधुर्जैनेषु मत्सरम् ॥ १२८ ॥
ततः संचरतां मार्गे साधूनां गोचरादिके ।
[१]उद्वेगं ते प्रकुर्वन्ति गिरीणां वारणा इव ॥ १२९ ॥
इत्थमालोचिते तैश्च गुरुः प्राह क्षमावशात् ।
उपसर्गा विलीयन्ते रहस्यमिदमेव नः ॥ १३० ॥
अन्यदा बटवः पापपटवः कटवो गिरा ।
आलोच्य सुरभिं कांचिदंचन्मृत्युदशास्थिताम् ॥ १३१ ॥
उत्पोद्योत्पाद्य चरणान्निशायां तां भृशं कृशाम् ।
श्रीमहावीरचैत्यांतस्तदा प्रावेशयन् हठात् ॥१३२॥ युग्मम् ।
गतप्राणां च तां मत्वा बहिः स्थित्वातिहर्षतः ।
ते प्राहुरत्र विज्ञेयं जैनानां वैभवं महत् ॥ १३३ ॥
वीक्ष्यः प्रातर्विनोदोऽयं श्वेतांबरविडंबकः ।
इत्थं च कौतुकाविष्टास्तस्थुर्देवकुलादिके ॥ १३४ ॥

---

१ P ०न्. J H omit पापपा (ट) वः. २ P उन्पाद्यचरणान्निशा०.

ब्राह्मे मुहूर्त उत्थाय यतयो यावदङ्गणे ।
पश्यंति तां मृतां चेतस्यकस्माद्विस्मयावहाम् ॥ १३५ ॥
निवेदिते गुरूणां च चित्रेऽस्मिन्नरतिप्रदे ।
अचिन्त्यशक्तयस्ते च नाक्षुभ्यन् सिंहसन्निभाः ॥ १३६ ॥
मुनीन् मुक्त्वांगरक्षार्थं मठांतःपट्टसन्निधौ ।
अमानुषप्रचारेऽत्र ध्यानं भेजुः स्वयं शुभम् ॥ १३७ ॥
अन्तर्मुहूर्तमात्रेण सा धेनुः स्वयमुत्थिता ।
चेतना केतना चित्रहेतुश्चैत्याद्बहिर्ययौ ॥ १३८ ॥
पश्यंतस्तां च गच्छन्तीं प्रवीणब्राह्मणास्तदा ।
दध्युरध्युषिता रात्रौ मृता चैत्यात्कथं निरैत् ॥ १३९ ॥
नाणुकारणमत्रास्ति व्यसनं दृश्यते महत् ।
अबद्धा विप्रजातिर्यद् दुर्ग्रहा बटुमंडली ॥ १४० ॥
एवं विमृशतां तेषां गौर्ब्रह्मभवनोन्मुखी ।
प्रेंखत्पदोदया पित्र्यस्नेहेनेव हृता ययौ ॥ १४१ ॥
यावत्तत्पूजकः प्रातर्द्वारमुद्धाटयत्यसौ ।
उत्सुका सुरभिर्ब्रह्मभवने तावदाविशत् ॥ १४२ ॥
खेटयन्तं बहिः शृङ्गयुगेनामुं प्रपात्य च ।
गर्भागारे प्रविश्यासौ ब्रह्ममूर्तेः पुरोऽपतत् ॥ १४३ ॥
तद्ध्यानं पारयामास जीवदेवप्रभुस्ततः ।
पूजको झल्लरीनादान्महास्थानममेलयत् ॥ १४४ ॥
विस्मिता ब्राह्मणाः सर्वे मतिमूढास्ततोऽवदन् ।
तदा दध्युरयं स्वप्नः सर्वेषां च मतिभ्रमः ॥ १४५ ॥
समकालमभूत्तत्किं गौर्मृता चलितापि च ।
तदप्यस्तु कथं ब्रह्मशालामाजग्मुषी स्वयम् ॥ १४६ ॥
दैवदुर्घटितस्यास्य शक्या नहि विचारणा ।
ज्योतिर्विदामपि ज्ञानादतीतं कार्यमागतम् ॥ १४७ ॥
अन्ये प्रोचुर्विचारः को बटूनां दुर्नयांबुधेः ।
भृशमुल्लंघ्य मर्यादां स्थानमुत्पाटयिष्यति ॥ १४८ ॥
अन्यत्र स्थानमाधत्थ स्थानवासिद्विजव्रजाः ।
वायुनैव गता वायोः कीर्त्तिः स्थानादतो ध्रुवम् ॥ १४९ ॥
अपरे प्राहुरेको न उपायो व्यसने गुरौ ।
मृगेंद्रविक्रमं श्वेतांबरं चैत्यान्तरस्थितम् ॥ १५० ॥

---

१ J H द्रुतं. २ P °श्रृङ्गे. ३ P तथा. ४ J H बहूनां. ५ P पात.
६ J H. अन्यवस्था०... । वायुनेव गता वायोः कान्तिः स्थानादतो ध्रुवम् H.

प्रणिपत्य प्रपद्यंतां तं तथ्यं पुरुषं रयात् ।
अपारोऽयं हि चिंताब्धिस्तेन पोतेन तीर्यते ॥ १५१ ॥ युग्मम् ।
अन्ये प्राहुः स्फुरद्दंभैर्युष्माडिंभैर्विरोषितः[1] ।
अहर्निशं प्रसंन्ति[2] स भवतां भजतां कथम् ॥ १५२ ॥
कृतानुपद्रवानित्थं प्राकृतोऽपि न मृष्यति ।
किममानुपसामर्थ्यो जैनार्षिर्मूर्तिमान् विधिः ॥ १५३ ॥
एकेऽवोचन् तथाप्यस्योपरोधः क्रियतेऽधुना ।
उत्तमप्रकृतिर्यस्मात्प्रणामाद्वैरमुज्झति ॥ १५४ ॥
एवमेकमतीभूय द्वेधा श्रीवीरमन्दिरे ।
भूमिदेवा ययुः पूज्यास्थानं धार्मिकमंडितम् ॥ १५५ ॥
योजयित्वाथ ते प्रोचुर्ललाटे करसंपुटम् ।
अवधारय वाचं नो मग्नानामार्तिपंजरे ॥ १५६ ॥
वायुर्नाम सुरः पूर्वं स्थानमेतन्न्यवीविशत् ।
तत्तुल्यजीवदेवाख्यावशतः सारतस्तव ॥ १५७ ॥
ततोऽस्य व्यसने प्राप्ते बटुकूटापराधतः ।
प्रतिकर्तुं तवैवास्य बलो नान्यस्य भूतले ॥ १५८ ॥
ततस्तदवतारस्त्वं पालयापालय प्रभो ।
स्थानं स्वयशसः स्थानं जीवदानं ददस्व नः ॥ १५९ ॥
स्वस्य नामान्तरस्थस्य प्रतिभूत्वं यदीच्छसि ।
तद्रक्ष्य तेऽन्यथाभावि स्थिरमस्थैर्यदुर्यशः ॥ १६० ॥
सूरो[3] श्रुत्वेति तूष्णीके लल्लः फुल्लयशा जगौ ।
मद्विज्ञप्तिं द्विजा यूयमेकां शृणुत सूनृताम् ॥ १६१ ॥
विरक्तोऽहं भवद्धर्माद्दृष्ट्वा जीववधं ततः ।
अस्मिन् धर्मे दयामूले लग्नो ज्ञातात्स्वकांचनु[4] ॥ १६२ ॥
जैनेष्वसूयया यूयमुपद्रवपरंपराम् ।
विधत्त प्रतिमल्लः कस्तत्र वः स्वल्पशात्रवः ॥ १६३ ॥
मर्यादामिह कांचिच्चेत् यूयं दर्शयत स्थिराम् ।
तदहं पूज्यपादेभ्यः किंचित्प्रतिविधापये ॥ १६४ ॥
अथ प्रोचुः प्रधानास्ते त्वं युक्तं प्रोक्तवानसि ।
समः कः क्षमयामीषां दुर्वारेऽस्मदुपद्रवे ॥ १६५ ॥
स्वरुच्या सांप्रतं जैनधर्मे सततमुत्सवान् ।
कुर्वतां धार्मिकाणां न कोपि विघ्नान् करिष्यति ॥ १६६ ॥
अस्तु च प्रथमो वृंढः[5] श्रीवीरव्रतिनां तथा ।
सदान्तरं न कर्त्तव्यं भूमिदेवैरतः परम् ॥ १६७ ॥

१ विराधितः. २ P प्रसर्ति. ३ J H सूरे. ४ J H ज्ञाता स्वकान्नु
५ J H प्रस्तुव प्रथमौ वंद्यः.

प्रतिष्ठितो न वाचार्य्यः सौवणमुपवीतकम् ।
परिधाप्याभिषेक्तव्यो ब्राह्मणैर्ब्रह्ममन्दिरे ॥ १६८ ॥
इत्यभ्युपगते तैश्च लल्लः सद्गुरुपादयोः ।
निवेश्य मौलिमाचख्यौ महास्थानं समुद्धर ॥ १६९ ॥
श्रीजीवदेवसूरिश्च प्राहोपशमवर्म्मितः ।
कालत्रयेपि नास्माकं रोषतोषौ जनद्विषौ ॥ १७० ॥
प्रत्यूहव्यूहघातिभ्यः परं शासनदेवताः ।
इदानीमपि ता एव भलिष्यन्ति मम स्मृतेः ॥ १७१ ॥
इत्युक्त्वातमेठं ध्यानासने संस्थाय सूरयः ।
निगृह्य रेचकं कुंभकेन नासाग्रदृष्टयः ॥ १७२ ॥
तस्थुर्मुहूर्त्तमात्रेण तावद्गौर्ब्रह्मवेश्मतः ।
उत्थाय चरणप्राणं कुर्वती निर्जगाम सा ॥ १७३ ॥
कौतुकाद्दृश्यमानासौ हर्षोत्तालद्विजव्रजैः ।
पुरो बाह्मप्रदेशोर्व्यां निरालंबा अपद्रुतम् ॥ १७४ ॥
आस्थानं पुनराजग्मुर्गुरवो गुरवो गुणैः ।
वेदोदिताभिराशीर्भिर्विप्रैश्चक्रे जयध्वनिः ॥ १७५ ॥
ततःप्रभृति सौदर्यसंबंधादिव वायटे ।
स्थापितस्तैरिह स्नेहो जैनैरद्यापि वर्त्तते ॥ १७६ ॥
विजह्रुरन्यतः पूज्या ज्ञात्वा कालं तु ते पुनः ।
स्वस्थानमागमन् योग्यं शिष्यं पट्टे न्यवीविशन् ॥ १७७ ॥
स्वयं सर्वपरित्यागं कृत्वा धृत्वार्जवे मनः ।
ददुः शिक्षां गणस्याथ नवसूरेश्च सूरयः ॥ १७८ ॥
गच्छप्रवर्त्तकस्याथादेशं राहस्यिकं ददुः ।
योगी प्रतिहतोऽस्माभिर्यः पुरा सिद्ध एव सः ॥ १७९ ॥
अनेकसिद्धिसंयुक्त एकखंडकपालवान् ।
अस्माकं निधनं ज्ञात्वा स चागन्तात्र निश्चितम् ॥ १८० ॥
अप्यस्माकं कपालं चेत् सैप प्राप्स्यत्यधर्मधीः ।
शासनस्योपसर्गांस्तद्विधास्यति तथाविधान् ॥ १८१ ॥
ततः स्नेहं परित्यज्य निर्जीवेऽस्मत्कलेवरे ।
कपालं चूर्णयध्वं चेत्तत्र स्यान्निरुपद्रवम् ॥ १८२ ॥
इहार्थे मामकीनाज्ञापालनं ते कुलीनता ।
एतत्कार्यं ध्रुवं कार्यं जिनशासनरक्षणे ॥ १८३ ॥
इति शिक्षां प्रदायास्मै प्रत्याख्यानविधिं व्यधुः ।

१ J H. न्व. २ P. संघे गतः ३ J पवंतक. ४ H P राहस्मिक.
५ J H. विवित्ताय.

विधायाराधनां दध्युः परमेष्ठिनमस्कृताः ॥ १८४ ॥
निरुध्य पवनं मूर्ध्नो मुक्त्वा प्राणान् गुणाम्बुधयः ।
वैमानिकसुरावासं तेऽतिश्रियमशिश्रियन् ॥ १८५ ॥
लब्धलक्षस्ततो दंडमुद्दंडं परिगृह्य सः ।
कपालं चूर्णयामास यथाकारोपि नेक्ष्यते ॥ १८६ ॥
लोकशोकोत्सवोन्मुद्रशब्दाद्वैते भवत्यथ ।
शिबिकास्थं गुरुवपुर्गीतार्था अवहंत तत् ॥ १८७ ॥
योगी डमरुकध्वानभैरवस्तत्र चाययौ ।
क एष पुरुषोऽतीत इत्यप्रच्छच्च तं जनम् ॥ १८८ ॥
प्रधानब्राह्मणश्चैकः पुरस्तस्येत्यथावदत् ।
क्लिन्नश्मश्रूणि सोश्रूणि विमुंचन् गद्गदस्वरम् ॥ १८९ ॥
वायोरिवापरामूर्त्तिर्जीवदेवो मुनीश्वरः ।
महास्थानधरोद्धारवराहो दिवमीयिवान् ॥ १९० ॥
श्रुत्वा स कपटात् शोकं बिभ्रद्दक्षो विघातयन् ।
विधायोर्जितपूत्कारं रोदनं भृशमब्रवीत् ॥ १९१ ॥
एकदा भो मदीशस्य वक्त्रं दर्शयताधुना ।
अन्यथा स्वशिरोघातं कृत्वा त्यक्ष्याम्यसून् ध्रुवम् ॥ १९२ ॥
तत्र प्रवर्तकोऽवोचन्मुच्यतां शिबिका भुवि ।
प्रभोर्मित्रमसौ योगी दृष्टास्यं जीवताद्घनम् ॥ १९३ ॥
विमुक्ते याप्ययाने च प्रकाशे तन्मुखे कृते ।
चूर्णितं तच्च दृष्ट्वासौ हस्तौ घृष्ट्वाब्रवीदिति ॥ १९४ ॥
एकखंडं कपालं श्रीविक्रमादित्यभूपतेः ।
ममाचार्यस्य चास्य स्यात्पुण्यपूरुषलक्षणम् ॥ १९५ ॥
करे मेऽस्य कपालं चेदारोक्ष्यन्मे मनोरथाः ।
अपूरिष्यंत किं कुर्मो नाभाग्यैः प्राप्यमीदृशम् ॥ १९६ ॥
जीवता च मृतेनापि सख्याहं घृष्ट एव यत् ।
मर्त्येषु स पुमानेको येनाहं स्वमतेर्जितः ॥ १९७ ॥
परं तथापि लोकोऽस्य संस्कारे मां दिशत्वसौ ।
ममाप्यद्य विरागोऽस्तु पुण्यस्यागण्यसौहृदात् ॥ १९८ ॥
एवं कृते च स व्योम्नात्रानयन्मलयाचलात् ।
श्रीखंडागुरुकाष्ठानि विदधेऽगं च भस्मसात् ॥ १९९ ॥
अद्यापि तत्प्रभावेण तस्य वंशे कलानिधिः ।
भवेत्प्रभावकः सूरिरमराभः स्वतेजसा ॥ २०० ॥
इत्थं चरित्रमधिगम्य महाप्रभावं
श्रीजीवदेवसुगुरोर्दुरितापहारि ।

इत्यूचिवांसमेनं तेन्वगृह्णन् जैनदीक्षया ।
त्वरैव श्रेयसि श्रेष्ठा विलम्बो विघ्नकृद्भवम् ॥१२॥ त्रिभिर्विशेषकम्

अपरेद्युर्विहारेण लाटमंडलमंडनम् ।
प्रापुः श्रीभृगुकच्छं ते रेवासेवापवित्रितम् ॥ १३ ॥
श्रुतपाठमहाघोषैरंबरं प्रतिशब्दयन् ।
मुकुंदर्षिः समुद्रोर्म्मिध्वानसापत्न्यदुःखदः ॥ १४ ॥
भृशं स्वाध्यायमभ्यस्यन्नयं निद्राप्रमादिनः ।
विनिद्रयति वृद्धत्वादाग्रहीसन्नहर्निशम् ॥ १५ ॥ युग्मम्
यतिरेको युवा तस्मै शिक्षामक्षामधीर्ददौ ।
मुने विनिद्रता हिंस्रा जीवभूतद्रुहो यतः ॥ १६ ॥
तस्माद्ध्यानमयं साधु विधेयाभ्यंतरं तपः ।
अर्हः संकोचितुं साधो वाग्योगो निर्ध्वनिक्षणे ॥ १७ ॥
इति श्रुत्वापि जीर्णत्वोदितजाड्यचयान्वितः ।
नावधारयते शिक्षां तथैवाघोषति स्फुटम् ॥ १८ ॥ त्रिभिर्विशेषकम्

तारुण्योचितया सूक्त्या करुणासूयया ततः ।
अनगारैः खरां वाचमादधे नादरार्दितः ॥ १९ ॥
अजानन्वैयसोंतं यद्गुरुपाठादरार्दितः ।
फुल्लयिष्यसि तन्मल्लीवल्लीवन् मुशलं कथम् ॥ २० ॥
इति श्रुत्वा विषेदेऽसौ जरच्चारित्रकुंजरः ।
दध्यौ च मे धिगुत्पत्तिं ज्ञानावरणदूषिताम् ॥ २१ ॥
तत आराधयिष्यामि भारतीदेवतामहम् ।
अथोग्रतपसा सत्यं यथासूयावचो भवेत् ॥ २२ ॥
इति ध्यात्वा नालिकेरवसत्याख्यजिनालये ।
सकलां भारतीं देवीमाराद्धुमुपचक्रमे ॥ २३ ॥

चतुर्धाहारमाधारं शरीरस्य दृढव्रतः ।
प्रत्याख्याय स्फुरद्ध्यानवह्निनिहुतजाड्यभीः ॥ २४ ॥
गलद्विकल्पकालुष्यशुद्धधीः समताश्रयः ।
निष्प्रकंपतनुर्न्यस्तदृष्टिर्मूर्तिपदाम्बुजे ॥ २५ ॥
मुहूर्तमिव तत्रास्थाद्दिनानामेकविंशतिम् ।
सत्त्वतुष्टा ततः साक्षाद्भूत्वा देवी तमब्रवीत् ॥२६॥ त्रिभिर्विशेषकम्

समुत्तिष्ठ प्रसन्नास्मि पूर्यन्तां ते मनोरथाः ।
स्खलना न तवेच्छास्तु तद्विधेहि निजेहितम् ॥ २७ ॥

---

१ P धेया०. २ P. वाचमाददर्शोर्दतः. ३ J H सांत. ४ P. पाठदरा.
५ J H–श्रुत्वा.

इत्याकर्ण्य समुत्तस्थौ देवताया गिरं गिरः ।
ददर्श मुशलं प्राप्तः कस्यापि गृहिणो गृहे ॥ २८ ॥
पूर्वोक्तयतिसोत्प्रासवाक्यश्रुत्यपमानतः ।
प्राह श्लोकं श्रुतलोकप्रतिज्ञापरिपूर्तये ॥ २९ ॥
स चायं-अस्मादृशा अपि यदा भारति त्वत्प्रसादतः ।
भवेयुर्वादिनः प्राज्ञा मुशलं पुष्प्यतां ततः ॥ ३० ॥
इत्युक्त्वा प्रासुकैर्नीरैः सिषेच मुशलं मुनिः ।
सद्यः पल्लवितं पुष्पैर्युक्तं तारैर्यथा नभः ॥ ३१ ॥
तथा—मुंड्योः शृंगं शक्रयष्टिप्रमाणं
शीतो वह्निर्मारुतो निष्प्रकंपः ।
यद्वा यस्मै रोचते तन्न किंचित्
वृद्धो वादी भाषते कः किमाहः ॥ ३२ ॥
इति प्रतिज्ञयैवास्य तदा कालीयवादिनः ।
हताः पराहतप्रज्ञाः कांदिशीका इवाभवन् ॥ ३३ ॥
ततः सूरिपदे चक्रे गुरुभिर्गुरुवत्सलैः ।
वर्द्धिष्णवो गुणा अर्था इव पात्रे नियोजिताः ॥ ३४ ॥
प्रययावादमुद्राभृद्यतः ख्यातो जगत्यपि ।
सान्वर्थो वृद्धवादीति प्रसिद्धिं प्राप स प्रभुः ॥ ३५ ॥
श्रीजिनशासनांभोजवनभासनभास्करः ।
[illegible] श्रीस्कंदिलाचार्यः प्राप प्रायोपवेशनात् ॥ ३६ ॥
वृद्धवादिप्रभुर्गच्छ[illegible]दिकल्पः ।
विजहार विशालायां शालायां गुणसंततेः ॥ ३७ ॥
तदा श्रीविक्रमादित्यभूपालः पालितावनिः ।
दारिद्र्यांधतमोभारसंभारेऽभवदंशुमान् ॥ ३८ ॥
श्रीकात्यायनगोत्रीयो देवर्षिब्राह्मणांगजः ।
देवश्रीकुक्षिभूर्विद्वान् सिद्धसेन इति श्रुतः ॥ ३९ ॥
[illegible]र्थपारंगममतिस्थितिः ।
[illegible] श्रीमद्वृद्धवादिप्रभोः स च ॥ ४० ॥
[illegible] वृद्धवादीह विद्यते मुनिनाथवा ।
इति पृष्टः स [illegible] सोऽहमेवास्मि [illegible] ॥ ४१ ॥
[illegible] [illegible] ।
[illegible] संपूर्यते यथा ॥ ४२ ॥
[illegible] ।
[illegible] ॥ ४३ ॥

इत्युक्तेपि यदात्रैव स नौज्झद्विग्रहाग्रहम् ।
ओमित्युक्त्वा तदा सूरिर्गोपान् सभ्यान् व्यधात्तदा ॥४४॥
सिद्धसेनः प्रागवादीत् सर्वज्ञो नास्ति निश्चयः ।
यः प्रत्यक्षानुमानाद्यैः प्रमाणैर्नोपलभ्यते ॥ ४५ ॥
नभःकुसुमदृष्टांतादित्युक्त्वा व्यरमच्च सः ।
उवाच वृद्धवादी च गोपान् सांत्वनपूर्वकम् ॥ ४६ ॥
भवद्भिरेतदुक्तं भो किमप्यधिगतं भवा ।
ते प्राहुः पारसीकासमव्यक्तं बुध्यते कथम् ॥ ४७ ॥
वृद्धवाद्याह भो गोपा ज्ञातमेतद्वचो मया ।
जिनो नास्तीत्यसौ जल्पे तत्सत्यं वदतात्र भोः ॥ ४८ ॥
भवद्ग्रामे वीतरागः सर्वज्ञोस्ति न वा ततः ।
आहुस्तेऽस्य वचो मिथ्या जैनचैत्ये जिने सति ॥ ४९ ॥
नचानवगतेष्वत्रादरो द्विजवचस्सु नः ।
सूरिराह पुनर्विप्र तथ्यां शृणु गिरं मम ॥ ५० ॥
मनीषातिशयस्तारतम्यं विश्राम्यति क्वचित् ।
अस्ति चातिशयेयत्तापरिमाणेष्विव स्फुटम् ॥ ५१ ॥
लघौ गुरुतरे वापि परमाणौ वियत्यपि ।
प्रज्ञाया अवधिर्ज्ञानं केवलं सिद्धमेव तत् ॥ ५२ ॥
ज्ञानं गुणस्तदाधारो द्रव्यं किंचिद्विचिंत्यताम् ।
योऽसौ स एव सर्वज्ञ एवाभूत्सिद्धिरस्य च ॥ ५३ ॥
ईदृग्वाचां प्रपंचेन जिग्येऽसौ वृद्धवादिना ।
ब्राह्मणः पण्डितंमन्यस्तस्य कास्था ह्यमूदृशाम् ॥ ५४ ॥
हर्षाश्रुप्लुतनेत्रश्च सिद्धसेनोप्यभाषत ।
प्रभो त्वमेव सर्वज्ञः पूर्वैः सत्यो जिनस्त्वया ॥ ५५ ॥
शिष्यत्वेनानुमन्यस्व मां प्रतिज्ञातपूर्विणम् ।
समर्थो नोत्तरं दातुं यस्य तस्यास्मि शैक्षकः ॥ ५६ ॥
अदीक्षयत जैनेन विधिना तमुपस्थितम् ।
नाम्ना कुमुदचन्द्रश्च स चक्रे वृद्धवादिना ॥ ५७ ॥
आशु चाशुगवत्तीक्ष्णप्रवरप्रतिभाभरात् ।
पारदृश्वा तदा कालसिद्धान्तस्य स चाभवत् ॥ ५८ ॥
तृतीयपरमेष्ठित्वे गुरुभिर्विदधे मुदा ।
पुरा ख्याताभिधैवास्य तथाच प्रकटीकृता ॥ ५९ ॥
तन्निधाय गणाधारे विजह्रे स्वयमन्यतः ।
शिष्यप्रभावो दूरस्थैर्गुरुभिर्वीक्ष्यते यतः ॥ ६० ॥

---

१ P. निश्चितम्. २ J H. सर्वः ३ J H. जित्तत ४ P-कुमुदचन्द्र०.
५ P तदा. ६ J-H. निक्षिप्तभारो.

श्रीसिद्धसेनसूरिश्चान्यदावाह्यभुवि व्रजन् ।
दृष्टः श्रीविक्रमार्केण राज्ञा राजाध्वगेन सः ॥ ६१ ॥
अलक्ष्यं भूप्रणामं स भूपस्तस्मै च चक्रिवान् ।
तं धर्मलाभयामास गुरुरुच्चतरस्वरः ॥ ६२ ॥
तस्य दक्षतया तुष्टः प्रीतिदाने ददौ नृपः ।
कोटिं हाटकटंकानां लेखकं पत्रकेऽलिखत् ॥ ६३ ॥
तद्यथा—धर्मलाभ इति प्रोक्ते दूरादुद्धृतपाणये ।
सूरये सिद्धसेनाय ददौ कोटिं नराधिपः ॥ ६४ ॥
नृपेण सिद्धमाकार्य गृहीष्यामि धनं त्वया ।
उवाच सिद्धो नोऽस्माकं यथारुचि तथा कुरु ॥ ६५ ॥
तेन द्रव्येण चक्रेऽसौ साधारणसमुद्रकम् ।
दुःस्थसाधर्मिकस्तोमचैत्योद्धारादिहेतवे ॥ ६६ ॥
अन्यदा चित्रकूटाद्रौ विजहार मुनीश्वरः ।
गिरेर्नितंब एकत्र स्तंभमेकं ददर्श च ॥ ६७ ॥
नैव काष्ठमयो ग्रावमयो न नच मृण्मयः ।
विमृशन्नौषधक्षोदमयं निरचनोच्च तम् ॥ ६८ ॥
तद्रसस्पर्शगंधादिनिरीक्षाभिर्मतेर्बलात् ।
औषधानि परिज्ञाय तत्प्रत्यर्थीन्यमीमिलन् ॥ ६९ ॥
पुनः पुनर्निघृष्याथ स स्तंभे छिद्रमातनोत् ।
पुस्तकानां सहस्राणि तन्मध्ये च समैक्षत ॥ ७० ॥
एकं पुस्तकमादाय पत्रमेकं ततः प्रभुः ।
विवृत्य वाचयामास तदीयामोलिमेककाम् ॥ ७१ ॥
सुवर्णसिद्धियोगं स तत्र प्रैक्षत विस्मितः ।
सर्षपैः सुभटानां च निष्पत्तिश्लोक एकके ॥ ७२ ॥
सावधानः पुरो यावद्वाचयत्येष हर्षभूः ।
तत्पत्रं पुस्तकं चाथ जह्रे श्रीशासनामरी ॥ ७३ ॥
तादृक्पूर्वगतग्रन्थवाचने नास्ति योग्यता ।
सत्वहानिर्यतः कालदौस्थ्यादेतादृशामपि ॥ ७४ ॥
स पूर्वदेशपर्यन्ते व्यहार्षीच्च परेद्यवि ।
कर्मारनगरं प्राप विद्यायुगयुतः सुधीः ॥ ७५ ॥
देवपालनरेन्द्रोऽस्ति तत्र विख्यातविक्रमः ।
श्रीसिद्धसेनसूरिं स नंतुमभ्याययौ रयात् ॥ ७६ ॥
आक्षेपण्यादिधर्माख्याचतुष्टयवशात्प्रभुः ।
तं प्रत्यबोधयत्सख्ये चास्थापयदिलापतिम् ॥ ७७ ॥

---

१ J H omit this stanza. २ J H तत्र. ३ J H तत्प्रीत्यर्थीत्समीमिलन् ४ P विवृत्ति.

श्रीकामरूपभूपालः संरुरोध तमन्यदा ।
नाम्ना विजयवर्मेति धर्मेतरमतिस्थितिः ॥ ७८ ॥
स आटविकनासीरैरसंख्यैर्विद्रुतोऽधिकम् ।
देवपालो महीपालः प्रभुं विज्ञपयत्ततः ॥ ७९ ॥
अमुष्य शलभश्रेणिसन्निभैरद्भुतैर्बलैः ।
विद्रावयिष्यते सैन्यमल्पकोशबलस्य मे ॥ ८० ॥
अत्र त्वं शरणं स्वामिन्निदमाकर्ण्य स प्रभुः ।
प्रायः प्रतिविधास्यामि माभैषीरत्र संकटे ॥ ८१ ॥
सुवर्णसिद्धियोगेनासंख्यद्रव्यं विधाय सः ।
तथा सर्षपयोगेन सुभटानकरोद्बहून् ॥ ८२ ॥
यद्वा पराजितः शत्रुर्देवपालेन भूभृता ।
प्रभोः प्रसादतः किं हि न स्यात्तादृगुपासनात् ॥ ८३ ॥
राजाह शत्रुभीत्यंधतमसोऽहं निपेतिवान् ।
उद्धृते भास्वता नाथ भवता भवतारक ॥ ८४ ॥
ततो दिवाकर इति ख्याताख्या भवतु प्रभोः ।
ततःप्रभृति गीतः श्रीसिद्धसेनदिवाकरः ॥ ८५ ॥
तस्य राज्ञो दृढं मान्यः सुखासनगजादिषु ।
बलादारोपितो भक्त्या गच्छति क्षितिपालयम् ॥ ८६ ॥
इति ज्ञात्वा गुरुर्वृद्धवादी सूरिर्जनश्रुतेः ।
शिष्यस्य राजसत्कारदर्पभ्रान्तमतिस्थितेः ॥ ८७ ॥
शिक्षणेन क्षणेनैवापासितुं दुर्ग्रहाग्रहम् ।
समाजगाम कर्मारपुरे रूपापलापतः ॥ ८८ ॥ युग्मम्
ततः सुखासनासीनमपश्यत्तं प्रभुस्तदा ।
राजानमिव राजाध्वान्तरे बहुजनावृतम् ॥ ८९ ॥
प्राह च प्राप्तरूपत्वं संदेहं मे निवर्तय ।
आयातस्य तव ख्यातिश्रुतेर्दूरदिगन्तरात् ॥ ९० ॥
पृच्छेति सिद्धसेनेन सूरिणोक्ते जगाद सः ।
तारस्वरं समीपस्थविदुषां विस्मयावहम् ॥ ९१ ॥
तद्यथा—अणहुल्लीफुल्ल मतोडहु मन आरामा ममोडहु ।
मणकुसुमेहिं अच्चि निरञ्जणु हिण्डहकाइं वणेण वणु ॥९२॥
अज्ञातेऽत्र विमृश्यापि कदुत्तरमसौ ददौ ।
अन्यत्पृच्छेति स प्राह तदेव हि विचारय ॥ ९३ ॥
अनादरादसम्बद्धं यत्किंचित्तेन चाकथि ।
अमानितेऽत्र तर्हि त्वं कथयेति जगाद सः ॥ ९४ ॥

---

१ J H नाज्ञारे. २ P अहुल्ली. ३ P आरानान्नो

वृद्धवादिप्रभुः प्राहाकर्णयावहितो भव ।
अस्य तत्त्वं यथामार्गभ्रष्टोऽपि लभसे पुनः ॥ ९५ ॥

तथाहि—

अणु अल्पमायूरूपं पुष्पं यस्याः साऽणुपुष्पिका मानुषतनुस्तस्याः पुष्पाण्यायुःखण्डानि तानि मा त्रोटयत राजपूजागर्वाद्यंकुटीभिः । आरामानात्मसत्कान् यमनियमादीन्सन्तापापहारकान् मा मोटयत भंजयत । मनःकुसुमैः क्षमामार्दवार्जवसन्तोषादिभिरर्चय निरञ्जनम् । अञ्जनान्यहंकारस्थानानि जातिलाभादीनि निर्गतानि यस्य स निरञ्जनः सिद्धिपदप्राप्तस्तं ध्यायन्तु हिंडत भ्रमत कथं वनेन वनं मोहादितरुगहनेनारण्यमिव संसाररूपं गहनमित्येकोऽर्थः ॥ १ ॥

अथवा—अणुर्नामाल्पधान्यं तस्य पुष्पाण्यल्पविषयत्वान्मानवतनोः साल्पपुष्पी तस्याः पुष्पाणि महाव्रतानि शीलाङ्गानि तानि मा मोटयत मा विनाशयत । मन आरामं मोटयत । चित्तविकल्पजालं संहरत । तथा निरञ्जनं देवं मुक्तिपदप्राप्तं मन इत्यनेन द्वौनिषेधशब्दौ मा च नञ्च ततो मा कुसुमैरर्चय निरञ्जनं वीतरागम् । गार्हस्थ्योचितदेवपूजादौ षड्जीवनिकायविराधके मोघमं कुरु सावद्यत्वाद् । वनेन शब्देन कीर्त्या हेतुभूतया वनं चेतनाशून्यत्वादरण्यमिव भ्रमहेतुतया मिथ्यात्वशास्त्रजातं कथं भ्रमसि अवगाहसे लक्षणया तस्मान्मिथ्यावादं परिहृत्य सत्ये तीर्थकृद्दादिष्टे आदरमाधेहि इति द्वितीयोर्थः ॥

अथवा—

अणरणेति धातोरणशब्दः स एव पुष्पमभिगम्यत्वाद्यस्याः साणुपुष्पा कीर्त्तिस्तस्याः पुष्पाणि स्याद्वादवचांसि तानि मा त्रोटयत मा संहरत । तथा मनस आरा वेधकरूपत्वात् अध्यात्मोपदेशरूपास्तान्मा त्रोटयत । कुव्याख्याभिर्मा विनाशयत । मनो निरञ्जनं रागादिलेपरहितं कुसुमैरिव कुसुमैः सुरभिशीतलैः सद्गुरूपदेशैरर्चय पूजितं श्लाघ्यं कुरु । तथा वनस्योपचारात्संसारारण्यस्य तस्येनः स्वामी परमसुखित्वात्तीर्थकृत् तस्य वनं शब्दसिद्धान्तसूत्रं कथं हिंडत भ्रान्तिमादधत । यतस्तदेव सत्यं । तत्रैव भावना रतिः कार्येति तृतीयोऽर्थः ।

इत्यादयो ह्यनेकार्था व्याख्याता वृद्धवादिना ।
मतिप्रतिविधानं तु वयं विद्मस्तु किंजडाः ॥ ९६ ॥

---

१ P अड्डली. २ P आरामासो. ३ J H– भ्रष्टोसि. ४ P सद्बोधवचांसि. ५ P सिद्धान्तः.

इति तज्जल्पपर्जन्यगर्जिवर्षणडम्बरैः ।
बोधेनाङ्कुरिता सिद्धसेनमानसमेदिनी ॥ ९७ ॥
ईदृक् शक्तिर्हि नान्यस्य मद्धर्माचार्यमन्तरा ।
स ध्यात्वेति समुत्चीर्य तस्यांह्री प्राणमद्गुरोः ॥ ९८ ॥
प्राह चान्तरविद्वेषिजितेन मयका भृशम् ।
आशासिताः प्रभोः पादाः क्षम्यतां तन्महाशयैः ॥ ९९ ॥
श्रुत्वेति गुरुराह स क्षणं वत्स न ते क्षणम् ।
प्राणिनां दुःखमाकालः शत्रुः सद्गतिनाशनः ॥ १०० ॥
कणेहत्य मया जैनसिद्धान्तात्तर्पितो भवान् ।
तवापि यन्न जीर्येत मन्दाग्नेः स्निग्धभोज्यवत् ॥ १०१ ॥
अन्येषां जडताधौतपीनसाश्लेष्मचद्गृहम् ।
का कथात्यल्पसत्त्वाग्निभृतां विद्यान्नजीरणे ॥ १०२ ॥
संतोषौषधसंवृद्धसद्ध्यानान्तरवह्निना ।
श्रुतं स्वयं हि जीर्येस्व मद्दत्तमशनायितः ॥ १०३ ॥
स्तम्भाप्तपुस्तके पत्रं जह्रे शासनदेवता ।
सांप्रतं सांप्रतीनाः किं तादृक्शक्तिव्रतोचिताः ॥ १०४ ॥
इत्याकर्ण्य गुरोर्वाचं वाचंयमशिरोमणिः ।
प्राह चेद्दुष्कृतं नैव कुर्युः शिष्या प्रमोदयात् ॥ १०५ ॥
तत्प्रायश्चित्तशास्त्राणि चरितार्थानि नाथ किम् ।
भवेयुरविनीतं मां प्रायश्चित्तैः प्रशोध्यत ॥ १०६ ॥
वृद्धवादी विमृश्याद्दादस्य चालोचनातपः ।
स्वस्थाने न्यस्य च प्रायं स्वयं लात्वा दिवं ययौ ॥ १०७ ॥
मुनीन्द्रः सिद्धसेनोऽपि शासनस्य प्रभावनाम् ।
विदधद्वसुधाधीशस्तुतो व्यहरतावनौ ॥ १०८ ॥
अन्यदा लोकवाक्येन जातिप्रत्ययतस्तथा ।
आबाल्यात्संस्कृताभ्यासी कर्मदोषात्प्रबोधितः ॥ १०९ ॥
सिद्धान्तं संस्कृतं कर्तुमिच्छन्संघं व्यजिज्ञपत् ।
प्राकृते केवलज्ञानिभाषितेऽपि निरादरः ॥ ११० ॥
तत्प्रभावं गरीयस्त्वानभिज्ञस्तत्र सोऽधिकः ।
संघप्रधानैरूचे च चेतःकालुष्यकर्कशः ॥ १११ ॥
युगप्रधानसूरीणामलंकरणधारिणाम् ।
अद्य स्त्री(श्री)नयनिनातदिग्[illegible]भानुनाम ॥ ११२ ॥

---

१ J नथि मूर्ता. २ J [illegible], P आर[illegible] । ३ P [illegible] ह[illegible] स जारणे. ४ J H न्यस्तो दिर॰ ५ J H. [illegible]. ६ J H. [illegible] ७ J H. [illegible].

पूज्यानामपि चेच्चित्तवृत्तावज्ञानशात्रवः।
अवस्कन्दं ददात्यद्य का कथास्मादृशां ततः॥ ११३॥
यदि विश्रुतमस्माभिः पूर्वेषां सम्प्रदायतः।
चतुर्दशापि पूर्वाणि संस्कृतानि पुराऽभवत्(न्)॥ ११४॥
प्रज्ञातिशयसाध्यानि तान्युच्छिन्नानि कालतः।
अधुनैकादशाग्यस्ति सुधर्मस्वामिभाषितो॥ ११५॥
बालस्त्रीमूढमूर्खादिजनानुग्रहणाय सः।
प्राकृतां तामिहाकार्षीदनास्थात्र कथं हि वः॥ ११६॥
पूज्यैर्वचनदोषेण भूरि कल्मषमर्जितम्।
श्रुतेन स्थविरा अद्य प्रायश्चित्तं प्रजानते॥ ११७॥
तैरूचे द्वादशाब्दानि गच्छत्यागं विधाय यः।
निगूढजैनलिङ्गः सन् तप्यते दुस्तपं तपः॥ ११८॥
इति पारांचिकाभिख्यात्प्रायश्चित्तान्महांहसः।
अस्य शुद्धिर्जिनाज्ञाया अन्यथा स्यात्तिरस्कृतिः॥ ११९॥
जैनप्रभावनां कांचिदद्भुतां विदधाति चेत्।
तदुक्तावधिमध्येऽपि लभते स्वं पदं भवान्॥ १२०॥
ततः श्रीसंघमापृच्छ्य स सात्त्विकशिरोमणिः।
स्वव्रतं बिभ्रदव्यक्तं सिद्धसेनो गणं व्यहात्॥ १२१॥
इत्थं च भ्राम्यतस्तस्य बभूवुः सप्त वत्सराः।
अन्येद्युर्विहरन्नुज्जय(यि)न्यां पुरि समागमत्॥ १२२॥
स भूपमन्दिरद्वारि गत्वा क्षत्तारमभ्यधात्।
स्वं विज्ञापय राजानं मद्वाचा विश्वविश्रुतम्॥ १२३॥

तथाहि—

दिदृक्षुर्भिक्षुरायातो द्वारि तिष्ठति वारितः।
हस्तन्यस्तचतुःश्लोकः किमागच्छतु गच्छतु॥ १२४॥
ततो राज्ञा समाहूतो गुणवत्पक्षपाततः।
स्वामिनोनुमते पीठे विनिविश्याब्रवीदिति॥ १२५॥

तद्यथा—

अपूर्वेयं धनुर्विद्या भवता शिक्षिता कुतः।
मार्गणौघः समभ्येति गुणो याति दिगन्तरम्॥ १२६॥

---

१ P० सादृशा. २ P० भाषिताः. ३ J H. प्राकृतानामि. ४ J H. च. ५ P adds दीयतां दशलक्षाणां शासनानि चतुःश्लोकं यद्वा गच्छतु before ततो.

अमी पानकुरंकामाः सेप्तापि जलराशयः ।
यद्यशोराजहंसस्य पञ्जरं भुवनत्रयम् ॥ १२७ ॥
सर्वदा सर्वदोऽसीति मिथ्या संस्तूयसे बुधैः ।
नारयो लेभिरे पृष्ठं न वक्षः परयोषितः ॥ १२८ ॥
भयमेकमनेकेभ्यः शत्रुभ्यो विधिवत्सदा ।
ददासि तच्च ते नास्ति राजन् चित्रमिदं महत् ॥ १२९ ॥
इति श्लोकैर्गुरुश्लोकः स्तुतो राजा तमस्तवीत् ।
यत्र त्वं सा सभा धन्यावसेयं तन्ममान्तिके ॥ १३० ॥
इति राज्ञा ससन्मानमुक्तोऽभ्यर्णे स्थितो यदा ।
तेन साकं ययौ दक्षः स कुंडगेश्वरे कृती ॥ १३१ ॥
व्यावृत्य द्वारतस्तस्य पश्चादागच्छतः सतः ।
प्रश्नः कृतोऽन्यदा राज्ञा देवावज्ञां करोषि किम् ॥ १३२ ॥
नतिं किं न विधत्से च सोऽवादीद्भूपते शृणु ।
महापुण्यस्य पुंसस्ते पुर एवोच्यते मया ॥ १३३ ॥
जल्पितात्प्राकृतैः सार्द्धं कः शोषयति थूत्कृतम् ।
असहिष्णुः(ष्णू) प्रणामं मेऽसकौ कुर्वे ततः कथम्॥१३४॥
ये मत्प्रणामसोढारस्ते देवा अपरे ननु ।
किं भावि प्रणम त्वं द्राक् प्राह राजेति कौतुकी ॥ १३५ ॥
देवान्निजप्रणम्यांश्च दर्शय त्वं वदन्निति ।
भूपतिर्जल्पितस्तेनोत्पाते दोषो न मे नृप ॥ १३६ ॥
राजाह देशांतरिणो भवंत्यद्भुतवादिनः ।
देवाः किं धातुमृद्देहिप्रणामेऽप्यक्षमा कृये ॥ १३७ ॥
श्रुत्वेति पुनरासीनः शिवलिङ्गस्य स प्रभुः ।
उदाजह्रे स्तुतिश्लोकान् तारस्वरकरस्तदा ॥ १३८ ॥
तथाहि–प्रकाशितं त्वयैकेन यथा सम्यग्जगत्रयम् ।
समस्तैरपि नो नाथ परतीर्थाधिपैस्तथा ॥ १३९ ॥
विद्योतयति वा लोकं यथैकोपि निशाकरः ।
समुद्गतः समग्रोपि तथा किं तारकागणः ॥ १४० ॥
त्वद्वाक्यतोऽपि केषांचिदबोध इति मेऽद्भुतम् ।
भानोर्मरीचयः कस्य नाम नालोकहेतवः ॥ १४१ ॥
नो वाद्भुतमुलूकस्य प्रकृत्या क्लिष्टचेतसः ।
स्वच्छा अपि तमस्त्वेन भासन्ते भास्वतः कराः ॥ १४२ ॥

---

१ J H करं० ३ J H. सतापि. ३ J H न सहि. ४ J H भूपति-
जल्पनस्तोनात्पादौ पोनमे. ५ कृपे इति स्यात्. ६ J H मुनि. ७ P म॰कम्व

इत्यादि-न्यायावतारसूत्रं च श्रीवीरस्तुतिमप्यथ ।
द्वात्रिंशच्छ्लोकमानाश्च त्रिंशदन्याः स्तुतीरपि ॥ १४३ ॥
ततश्चतुश्चत्वारिंशद्वृत्तां स्तुतिमसौ जगौ ।
कल्याणमन्दिरेत्यादि विख्यातां जिनशासने ॥ १४४ ॥
अस्य चैकादशं वृत्तं पठतोऽस्य समाययौ ।
धरणेन्द्रो दृढा भक्तिर्न साध्यं तादृशां किमु ॥ १४५ ॥
शिवलिंगात्ततो धूमस्तत्प्रभावेण निर्ययौ ।
यथांधतमसस्तोमैर्मध्याह्नेपि निशाभवत् ॥ १४६ ॥
यथाविह्वलितो लोको नंष्टुमिच्छन् दिशो नहि ।
अज्ञासीदांश्मनस्तंभमिभित्तिष्वास्फालितो भृशम् ॥ १४७ ॥
ततस्तत्कृपयेवास्माद् ज्वालामाली विनिर्ययौ ।
मध्येसमुद्रमावर्त्तवृत्तिसंवर्त्तकोपमा ॥ १४८ ॥
ततश्च कौस्तुभस्येव पुरुषोत्तमहृत्स्थिते ।
प्रभोः श्रीपार्श्वनाथस्य प्रतिमा प्रकटाभवत् ॥ १४९ ॥
ततः परमया भक्त्या स्तुत्वा नाथं प्रणम्य च ।
मुक्तात्मानो ह्यमी देवा मत्प्रणामं सहिष्णवः ॥ १५० ॥
प्रतिबोध्येति तं भूपं शासनस्य प्रभावना ।
व्यधीयंत विशालायां प्रवेशोद्युत्सवात्पुरि ॥ १५१ ॥ युग्मम्
वत्सराणि ततः पंच संघोमुष्य मुमोच च ।
चक्रे च प्रकटं श्रीमत्सिद्धसेनदिवाकरम् ॥ १५२ ॥
शिवलिङ्गादुदैष्योत्र कियत्कालं फणावलिः ।
लोकोऽप्यर्चेच्च तां पश्चान्मिथ्यात्वदृढरङ्गभूः ॥ १५३ ॥
एकदापृच्छ्य राजानं बलादप्रतिबद्धधीः ।
विजहार प्रभुस्तस्मात्संघकासारवारिजम् ॥ १५४ ॥
गीतार्थैर्यतिभिः सार्द्धं दक्षिणस्यां स संचरन् ।
भृगुकच्छपुरोपान्ते प्रादेशभुवमाप सः ॥ १५५ ॥
तत्रासन्नगरग्रामगोव्रजारक्षकास्तदा ।
सूरेः संमिलितास्तत्र धर्मश्रवणसस्पृहाः ॥ १५६ ॥
कुत्राप्यविस्मितानस्मान् यूयं प्रश्रयैंतश्चिरम् ।
मार्गश्रमश्रमायस्ताः किं ब्रूमः कल्मषापहम् ॥ १५७ ॥

---

H omit अस्य…समा. २ P अज्ञार्थाचास्य न. ३ J H omit
४ J H व्यधायत् विशालायां प्रवेशोत्सवात्पुरि. ५ P ततः श्रीपार्श्व-
च सघो मुमोच च insteed. ६ P शवलिंगादुदेवात्र कियत्कालाचिंतं
लोकोऽव्यर्थकृतां. ७ P प्रश्रयनिस्थिरं.

ते प्रोचुराग्रहादत्र तरुच्छायासु विश्रमम् ।
विधाय धर्मव्याख्यानं दास्यामो गोरसानिव ॥ १५८ ॥
सूरयस्तत्तदभ्यस्तगीतं हुंबडकैस्तदा ।
भ्रान्त्वा भ्रान्त्वा ददानाश्च तालमानेन तालिकाः ॥ १५९ ॥
प्राकृतोपनिबन्धेन सद्यः सम्पाद्य रासकम् ।
ऊचुस्तत्प्रतिबोधार्थं तादृशामीदृगौचिती ॥ १६० ॥

तथाहि—

न विमारिअइ न विचोरिअइ
परदारह संगु निवारिअइ ।
थोवाहविथोवंदाअइ
वर्सणिदुगुडुगुजाइयइ ॥ १६१ ॥

तद्वाग्भिः प्रतिबुद्धास्ते तत्र ग्रामं न्यवेशयन् ।
धनधान्यादिसम्पूर्णं तत्तालारासिकाभिधः ॥ १६२ ॥
अस्थापयंश्च तत्र श्रीनाभेयप्रतिमान्वितम् ।
अभ्रंलिहं जिनाधीशमन्दिरं सूरयस्तदा ॥ १६३ ॥
अचलस्थापनं तच्च तत्राद्यापि प्रणम्यते ।
भव्यैस्तादृक् प्रतिष्ठा हि शक्रेणापि न चाल्यते ॥ १६४ ॥
एवं प्रभावनां तत्र कृत्वा भृगुपुरं ययुः ।
तत्र श्रीबलमित्रस्य पुत्रो राजा धनंजयः ॥ १६५ ॥
भक्त्या चाभ्यर्हितास्तेनान्यदासावरिभिर्हतः ।
अवेष्ट्यत पुरं चैभिरमर्यादाम्बुधिप्रभैः ॥ १६६ ॥
भीतः स चाल्पसैन्यत्वात्प्रभुं शरणमाश्रयत् ।
तैलकूपेऽभिमंत्र्यासौ सर्षपप्रस्थमक्षिपत् ॥ १६७ ॥
ते सर्षपा नरीभूयासंख्याः कूपाद् विनिर्ययुः ।
तैः शत्रूणां बलं भग्नं हतास्ते परिपन्थिनः ॥ १६८ ॥
सिद्धसेन इति श्रेष्ठा तस्यासीत्सान्वयाभिधा ।
राजा तु तत्र वैराग्यात्तत्पार्श्वे व्रतमग्रहीत् ॥ १६९ ॥
एवं प्रभावनास्तत्र कुर्वतो दक्षिणापथे ।
प्रतिष्ठानपुरं प्रापुः प्राप्तरेखाः कविव्रजे ॥ १७० ॥
आयुःक्षयं परिज्ञाय तत्र प्रायोपवेशनात् ।
योग्यं शिष्यं पदे न्यस्य सिद्धसेनदिवाकरः ॥ १७१ ॥

१ J H० हावच. २ P विधाय धर्म्म व्याख्यात दायासो गोरसामिव. ३ J H सूक्ष्म for स्तत्स. ४ P अप्पु for सगु. ५ P थोवा थोवूंदाई अइ ६ P तत्तुसमिद्धुगुडुगुजाईइ. ७ P ०र्णं तत्तालारासकच्छिपः । ८ P अवेटि

दिवं जगाम संघस्य ददानोऽनाथतान्यथाम् ।
नादृशां विरहे को न दुःखी यदि सचेतनः ॥ १७२ ॥
वैतालिको विशालायां ययौ कश्चित्ततः पुरात् ।
सिद्धश्रीत्यभिधानाया मिलितोसौ प्रभोः स्वसुः ॥ १७३ ॥
नश्राव स निरानन्दं पदद्वयमनुष्टुभः ।
उत्तरार्धं त्र साचादीत् स्वमतेरनुमानतः ॥ १७४ ॥
यथा — स्फुरन्ति वादिखद्योताः साम्प्रतं दक्षिणापथे ।
नूनमस्तंगतो वादी सिद्धसेनो दिवाकरः ॥ १७५ ॥
सापि सापायतां काये विमृश्यानशनं व्यधात् ।
गीतार्थविहिताराधनयासौ सद्गतिं ययौ ॥ १७६ ॥
प्रभोः श्रीपादलिप्तस्य वृद्धवादिगुरोस्तथा ।
श्रीविद्याधरवंशत्वनियामकमिहोच्यते ॥ १७७ ॥
संवत्सरशते पञ्चाशता श्रीविक्रमार्कतः ।
सार्धेजा कुटिनोद्धारे श्राद्धे न विहिते सति ॥ १७८ ॥
श्रीरैवताद्रिमूर्धन्यश्रीनेमिभवनस्य च ।
वर्णाश्वस्तमठाचत्र प्रशस्तेरिदमुद्धृतम् ॥ १७९ ॥
इत्थं पुराणकविनिर्मितशास्त्रमध्या-
दाकर्ण्य किंचिदुभयोरनयोश्चरित्रम् ।
श्रीवृद्धवादिकविवासवसिद्धसेन-
वादीन्द्रयोरुदितमस्तु धिये मुदे वः ॥ १८० ॥
श्रीचन्द्रप्रभसूरिपट्टसरसीहंसप्रभः श्रीप्रभा-
चन्द्रः सूरिरनेन चेतसि कृते श्रीरामलक्ष्मीभुवा ।
श्रीपूर्वर्षिचरित्ररोहणगिरौ प्रद्युम्नसूरीक्षितः
शृङ्गोऽभूदमलोऽष्टमः सुचरितं श्रीवृद्धसिद्धाश्रितम् ॥ १८१ ॥

इति श्रीवृद्धवादिप्रबन्धः ।
ग्रन्थाः ॥ १९० ॥ उभयम् ॥ १६८९ ॥

---

श्रीमल्लवादिप्रबन्धः ।

सं जयति हरिभद्रसूरिरुद्य-
न्मतिमदतारकभेदबद्धलक्षः ।
शरभ इव शक्तिधिकृतारि-
र्गुरुवजलोदयदंगसंगतश्रीः ॥ १ ॥

---

१ P गे. २ P द्वा. ३ P सत. ४ J विये P मुदेव. ५ J H omit it ६ J H १६८६ ७ P omits स.

कुसुमविशिखमोहशत्रुपाथो-
निधिनिधनाश्रयविश्रुतः श्रमात्मम् ।
स्थिरपरिचयगाढरूढमिथ्या-
ग्रहजलबालकशैलवृद्धिविघ्नः ॥ २ ॥
जिनभटमुनिराजराज-
त्कलशभवो हरिभद्रसूरिसत्त्वैः ।
वरचरितमुदीरयेऽस्य बाल्या-
दविगणयन्मतितानवं स्वकीयम् ॥ ३ ॥ युग्मम्
इह निखिलकुहूर्कतोपकारा-
दहिमरुचिः शशिना निमन्त्रितो नु ।
रुचिरतररुचिप्रकाशिताशः
प्रभवति यत्र निशासु रत्नराशिः ॥ ४ ॥
जगदुपकृतिकारिणोर्वहिष्क-
द्रविशशिनोः शिथिलः समैक्षि मेरुः ।
शिरसि वसतिदस्तु शिश्रिये य-
स्त्रिदिविभिरस्ति स चित्रकूटशैलः ॥ ५ ॥
बहुतरपुरुषोत्तमेशलीला-
भवनमलं गुरुसात्त्विकाश्रयोऽतः ।
त्रिदिवमपि तृणाय मन्यते य-
न्नगरवरं तदिहास्ति चित्रकूटम् ॥ ६ ॥
हरिरपरवपुर्विधाय यं स्वं
क्षितितलरक्षणदक्षमक्षताख्यम् ।
असुरपरिवृढमजं विभिन्ने
स नृपतिरत्र बभौ जितारिनामा ॥ ७ ॥
चतुरधिकदशप्रकारविद्या-
स्थितिपठनोन्नतिरग्निहोत्रशाली ।
अतितरलमतिः पुरोहितोऽभूत्
नृपविदितो हरिभद्रनामचित्तः ॥ ८ ॥
परिभवनमतिर्महावलेपात्
क्षितिसलिलांवरवासिनां बुधानाम् ।
अवदारणजालकाधिरोह-
ण्यपि स दधौ त्रितयं जयाभिलाषी ॥ ९ ॥
स्फुटति जठरमत्र शास्त्रपूरादिति स दधावुदरे सुवर्णपट्टम् ।
मम सममतिरस्ति नैव जंबूक्षितिवलये वहने लतां च जंम्बाः ॥१०॥

---

१ J H. रामराज. २ J H. इत्यादिनो हरिभद्रनामचित्तः.

अथ यदुदितमत्र नावगच्छाम्यहमिह तस्य विनेयतामुपैमि ।
इति कृतकृतिदुस्तरप्रतिज्ञः कलिसकलज्ञतया स मन्यते स्वम् ॥११॥

त्रिभिर्विशेषकम् ।

अथ पथि संचरन्नरसुखासनस्थो बहुतरपाठकवर्णिकीर्णः ।
अलिकुलकलितं कपोलपाल्यां मदजलकर्दमदुर्गमीकृतक्ष्माम् ॥१२॥

विपणिगृहसमूहभंगभीत-
भ्रमदतिशोकविहस्तलोकदृश्यम् ।
कुमरणभयभीतमंक्षुनश्यद्-
द्विपदचतुष्पदहीनमार्गहेतुम् ॥ १३ ॥

विधुरविरुतिरेतिसन्निपातपूरै-
रतिपरिखेदितगेहिवासमर्त्यम् (?)
गजपरिवृढमैक्षतोत्तमांग-
त्वरितविधूननधूतसादिवृन्दम् ॥ १४ ॥ त्रिभिर्विशेषकम्

प्लवग इव यथा तरूच्चशृंगात्
कुसुमगणं प्रविचित्य तिग्मभानुम् ।
प्रतिविसृजति चंचलस्वभावा-
ज्जिनगृहमेष तथा द्विजोऽभ्यरोहत् ॥ १५ ॥

बलजवलयदर्शनोर्ध्वदृष्टिः
कथमपि तीर्थपतिं ददर्श सोऽथ ।
अवददविदितोत्तमार्थतत्त्वो
भुवनगुरावपि सोपहासवाक्यम् ॥ १६ ॥

तथाहि—वपुरेव तवाचष्टे स्पष्टं मिष्टान्नभोजनम् ।
नहि कोटरसंस्थेऽग्नौ तरुर्भवति शाद्वलः ॥ १७ ॥

गजमिह परस्थ्यया प्रबुध्य
व्यवहितमत्र पैटुवजैर्भ्रमद्भिः ।
निजमथ निलयं ययौ पुरोधा-
स्तृणमिव सर्वमपीह मन्यमानः ॥ १८ ॥

परतरदिवसेऽथ राजसौधा-
दवसितमंत्रविधेयकार्यजातः ।
प्रतिनिजनिलयं प्रयान्निशीथे
स्वरमशृणोन्मधुरं स्त्रियो जरत्याः ॥ १९ ॥

---

१ P omits विंशेषकं अथ पथि···क्ष्माम् ॥१२॥ j संचरन्नसु० २ J H. विधुरविरुतिसन्निपातपूरैरतिपरैरेव दितगेहिवासमत्या P० वासमृर्त्यें. ३ J H वासमत्या० ४ P साति. ५ P बहु.

प्रकटतरमतिः स्थिरप्रतिज्ञो
ध्वनिरहितावसरेऽवधारयन्सः[1] ।
व्यमृशदथ नचाधिगच्छति स
श्रुतविषमार्थकदर्थितः स गाथाम् ॥ २० ॥

सा चेयम्—चक्किदुगं हरिपणगं
पणगं चक्की ण केसवो चक्की ।
केसवचक्की केसवदु-
चक्कीकेसीयचक्कीय[2] ॥ २१ ॥

अवददिति यदम्ब चाकचिक्यं
बहुतरमत्र विधापितं भवत्या ।
इह समुचितमुत्तरं ददौ सा
शृणु ननु पुत्रक गोमयार्द्रलिप्तम् ॥ २२ ॥

इति विहितसदुत्तरेण सम्यक्
स च वदति स चमत्कृतिं दधानः ।
निजपठितविचारणं विधेहि[3]
त्वमिह सवित्रि न वेद्म्यहं त्वदर्थम् ॥ २३ ॥

अवददथ च सा यथा गुरोर्नोऽ-
नुमतिरधीतिविधौ जिनागमानाम् ।
न विवृतिकरणे विचारमिच्छु-
र्यदि हि तदा प्रभुसंनिधौ प्रयाहि ॥ २४ ॥

वचनमिति निशम्य सोऽपि दध्यौ
परिहृतदर्पभरः पुरोहितेशः ।
अपि गुरुपुरुषैर्दुरापमध्ये
परिकलना न समस्ति वाङ्मयेऽस्मिन् ॥ २५ ॥

जिनमतगृहिगेहचन्द्रशालां
यदियमुपैति ततो हि जैनसाध्वी ।
जिनपतिमुनयो गुरुत्वमस्या
विदधति तन्मम तेऽपि वन्दनीयाः ॥ २६ ॥

सकलपरिहृतिर्ममागतेयं
दुरतिगमा वचनस्य यत् प्रतिष्ठा[4] ।
व्यमृशदथ स गेहमागतः स्वं
तदनु विनिद्रितया निशां च निन्ये ॥ २७ ॥

---

१ J H. यत्सः. २ J H. केसवदुचक्क केसीयचक्काय. ३ J H. निज०.
४ J H सकलपरिहृति समागतेयं दुरतिगमा च तस्य यत्प्रतिष्ठा.

अथ दिवसमुखे तदेकचित्तोऽगमदिह वेश्मनि तीर्थनायकस्य ।
हृदयवसतिवीतरागबिम्बं बहिरपि वीक्ष्य मुदा स्तुतिं प्रतेने॥२८॥
तथाहि-वपुरेव तवाचष्टे भगवन् वीतरागताम् ।
न हि कोटरसंस्थिताग्नौ तरुर्भवति शाद्वलः ॥ २९ ॥
दिवसगणमनर्थकं स पूर्वं स्वमभिमानकदर्थ्यमानमूर्तिः ।
अमनुत सततश्च मण्डपस्थं जिनभटसूरिमुनीश्वरं ददर्श ॥३०॥
हरिमिव विबुधेशवृन्दवंद्यं शमनिधिसाधुविधीयमानसेवम् ।
तमिह गुरुमुदीक्ष्य तोषपोषात्समजनि जनितकुवासनावसानः ३१
हृतहृदय इव क्षणं स तस्थौ तदनु गुरुर्व्यमृशत्स एव विप्रः ।
य इह नु विदितः स्वशास्त्रमंत्रप्रकटमतिर्नृपपूजितो यशस्वी ॥ ३२॥
मदकलगजरुद्धराजवर्त्मभ्रमवशतो जिनमन्दिरान्तरस्थम् ।
जिनपतिमपि वीक्ष्य सोपहासं वचनमुवाच मदावगीतचित्तः ॥३३॥
युग्मम् ।
इह पुनरधुना यथावकसाज्जिनपतिबिम्बमथादरात्स वीक्ष्य ।
अतिशयितरचित्तरंगसंगी स्तवनमुवाच पुराणमन्यथैव ॥ ३४ ॥
भवतु ननु विलोक्यमेतदग्रे तदनु जगाद मुनीश्वरो द्विजेशम् ।
निरुपमधिषणानिधे शुभं ते कथय किमागमने निमित्तमत्र ॥ ३५॥
न्यगददथ पुरोहितो विनीतं किमनुपमप्रतिमोऽहमस्मि पूज्याः ।
जिनमतजरतीवचो मयैकं श्रुतमपि नो विवरीतुमत्र शक्यम्॥ ३६ ॥
अपरसमयविस्तशास्त्रराशिं व्यमृशमहं तु न चक्रिकेशवानाम् ।
क्रममनुमुदितं तया प्रबुध्ये तदिह निवेदयत प्रसद्य मेऽर्थम् ॥ ३७॥
अथ गुरुरपि जल्पति स्म साधो जिनसमयस्य विचारणव्यवस्थाम् ।
शृणु सुकृतमते प्रगृह्य दीक्षां तदनुगता च विधीयते तपस्या ॥ ३८॥
विहितविनयकर्मणा च लभ्यो मिलदचलातलमौलिनानुयोगः ।
इति तदवगमोऽन्यथा तु न स्यात्यदुचितमाचर मा त्वरां विधास्त्वम्
अथ स किल समस्तसंगहानिं सकलपरिग्रहसाक्षिकं विधाय ।
गुरुपुरत उपाददे चरित्रं परिहृतमन्दिरवेष इष्टलोचः ॥ ४० ॥
गुरुरवददथागमप्रवीणा यमियतिनीजनमौलिशेखरश्रीः ।
मम गुरुभगिनीमहत्तरेयं जयति च विश्रुतजाकिनीति नाम्नी ॥ ४१ ॥
अभणदथ पुरोहितोऽनयाहं भवभवशास्त्रविशारदोपि मूर्खः ।
अतिसुकृतवशेन धर्ममात्रा निजकुलदेवतयेव बोधितोऽस्मि ॥४२॥

---

१ P omits चष्टे......शाद्वलः २ J H. अमनुनमंतश्च. ३ J H अ-तिशयितचित्तरंगसंगास्त०...भव्य. ४ J H० णावलभ्यो मिलदिलात.५ J P हानि. ६ J H यमियनाजन. ७ J H नवनवशास.

अयमवगतसाधुधर्मसारः सकलमहाव्रतधूर्धुरंधरश्रीः ।
गुरुमगदद्थ प्रवर्तमानागमगणसारविचारपारदृश्वा ॥ ४३ ॥
अधिकरणिकशास्त्रसुप्रसक्तानुगतिविलोल इयद्दिनानि जज्ञे ।
त्वदपरिचयमूर्छितो मुनीशःप्रचिकटिषुर्निजमासुतीवलत्वम् ॥४४॥
धृतधृतिरधुना शुभानुभावात् श्रुतभरसागरमध्यलीनचित्तः ।
अनधिगतविमुक्तपद्मवासाप्रियविरहप्रभृतिव्यथस्त्वभूवम् ॥ ४५ ॥
गुरुरिदमवधार्य धर्मशास्त्राध्ययनसुपाठनकर्मलब्धरेखम् ।
सुरचितसुकृतोपदेशलीलं निजपदमंडनमादधौ सुलग्ने ॥ ४६ ॥
अनुचरितपुराणपादलिप्तप्रमुखसमो हरिभद्रसूरिरेषः ।
कलिसमययुगप्रधानरूपो विमलयति क्षितिमंहिसंक्रमेण ॥ ४७ ॥
अपरदिवि निजौ सजामिपुत्रौ पितृकुलकर्कशवाक्यतो विरक्तौ ।
प्रहरणशतयोधिनौ कुमारौ बहिरचनावुदपश्यदात्तचिंतौ ॥ ४८ ॥
अथ चरणयुगं गुरोः प्रणम्य प्रवभणतुर्गृहतो विरागमेतौ ।
तदनु गुरुरुवाच वासना चेन्मम स विधिव्रतभारमुद्वहेथाम् ॥४९॥
तदनु मतिमवाप्य चैष हंसं स परमहंसमदीक्षयत्ततोऽथ ।
व्यरचयत स तौ प्रमाणशास्त्रोपनिषदि कुश्रुतपाठशुद्धबुद्धी ॥५०॥
अथ च सुगततर्कशास्त्रतत्वाधिगममहेच्छतया गुरुक्रमेभ्यः ।
अवनितलमिलल्ललाटपट्टौ सुललितविज्ञपनां वितेनतुस्तौ ॥ ५१ ॥
दुरधिगमतथागतागमानामधिगमनाय सदाहितोद्यमौ तौ ।
प्रविशत नगरं यथा तदीयं प्रतिनिजबुद्धिपरीक्षणाय यावः ॥ ५२ ॥
गुरुरपि हृदये निमित्तशास्त्रादधिगतमुत्तरकालमाकलय्य ।
अवददिति शुभं न तत्र वीक्ष्येऽभ्युपगममेनमतो हि माद्रियेथाः ॥५३॥
ननु पठतमिहैव देशमध्ये गुणियतिनायकसन्निधौ तु वत्सौ ।
मतिरतिशयभासुरापि केषांचिदपि परागमवेदिनी समस्ति ॥ ५४ ॥
गुरुमिह विरहय्य कः कुलीनः पथि निरपायतमेऽपि वंभ्रमीति ।
कथमवगतदुर्निमित्तभावे तदिह ननोऽनुमतिर्दुरंतकार्ये ॥ ५५ ॥
अवददथ विहस्य हंसनामा गुरुजनयुक्तमिदं तु वत्सलत्वम् ।
भवदनुचरणात् प्रभाववंतौ किमु शिशुकौ परिपालितौ न पूज्यैः ५६
अपशकुनगणः करोतु किंवाऽध्वनि परपुर्यपि चेतनायुतानाम् ।
अविरतमभिरक्षति क्षतान्नौ चिरजपितो भवदीयनाममन्त्रः ॥ ५७ ॥
दुरधिगमदविष्ठदेश्यशास्त्राधिगमकृते गमनादथागमाच्च ।
क इव नु विगुणः कृतज्ञतायाः क्षतिकरणस्तदिदं विधेयमेव ॥ ५८ ॥

---

१ P omits मलयति…प्रहरणशतयोधिनौ. २ P परागमावदि. ३ J H दुरितं P कार्य्ये. ४ J H वरपूर्यपि…नं.

अवदद्थ गुरुर्विनेययुग्मं हितकथने हि न औचिती भविष्यत्।
भवति खलु ततो यथेहितं वा विदधतमुत्तममद्य निंदितं वा ॥ ५९ ॥
अथ सुगतपुरं प्रतस्थतुस्तावगणितगुरुगौरवोपदेशौ।
अतिशयपरिगुप्तजैनलिङ्गौ न चलति खलु भवितव्यतानियोगः॥६०॥
कतिपयदिवसैरवापतुस्तां सुगतमतप्रतिबद्धराजधानीम्।
परिकलितकलावधूतवेषावतिपठनार्थितया मठं तमासौ ॥ ६१ ॥
पठनविधिकृते विहारमालाविपुलतरास्ति च तत्र दानशाला।
सुगतमुनियतिश्च तत्र शिष्याननवरतं किल पाठयेद्यथेच्छम् ॥ ६२ ॥
अतिसुखकृतभुक्तितः पठन्तौ सुविषमसौगतशास्त्रजातमत्र।
परबुधजनदुर्गमार्थतत्त्वं कुशलतया सुखतोऽधिजग्मतुस्तौ ॥ ६३ ॥
जिनपतिमतसंस्थितामिसंधिं प्रतिविहितानि च यानि दूषणानि।
निहतमतितया यतोर्निरीक्षातिशयवशेन निजागमप्रमाणैः ॥ ६४ ॥
दृढमिह परिहृत्य तान् हि हेतून् विशदतरान् जिनतर्ककौशलेन।
सुगतगतनिषेधदार्ढ्ययुक्तान् समलिखतामपरेषु पत्रकेषु॥६५॥युग्मम्
इति रहसि च यावदाददाते गुरुर्पैवमानविलोडितं हि तावत्।
अपगतममुतः परैश्च लब्धं गुरुपुरतः समनायि पत्रयुग्मम् ॥ ६६ ॥
अवलोकयतोऽस्य हेतुदार्ढ्यं प्रतिनिजतर्कमुदग्रदूषणेषु।
जिनपतिगतदूषणेषु पक्षेष्वजयमभून्मनसि भ्रमो महीयान् ॥ ६७ ॥
अभणदथ सविस्मयातिरेकात्पिपठिषुरर्हदुपासकोऽस्ति कश्चित्।
अपर इह मदीयदूषितं कः पुनरपि भूषयितुं समर्थबुद्धिः ॥ ६८ ॥
स्फुरति च क उपाय ईदृशस्याधिगमविधाविति चिन्तयन् स तस्थौ।
क्वचिदमलधियामपि स्खलन्ति प्रतिपद ईदृशि कुत्रचिद्विधेये॥६९॥
उदमिषदथ बुद्धिरस्य मिथ्याग्रहमकराकरपूर्णचन्द्ररोचिः।
अवददथ निजान् जिनेशबिम्बं बलजपुरो निदधध्वमध्वनीह ॥७०॥
तदनु शिरसि तस्य भो निधाय क्रमणयुगं हि समागमो विधेयः।
इदमपि न करिष्यति प्रमाणं मम पुरतोऽध्ययनं स मा विधत्ताम् ७१
गुरुवचनमिदं तथैव बौद्धैः कृतमखिलैरपशूंखलैः खलैस्तैः।
अथ मनसि महार्तिसंगतौ तौ विममृशतुः प्रकटं हि संकटं नः॥७२॥
न विदधे च यदिह क्रमौ सशूकौ प्रतिकृतिमूर्धनि लक्षितौ तदानीम्
नहि पुनरपि जीविते किलाशा विकरुणमानसपाठकादमुष्मात् ७३

---

१ J H अथ. २ P सच्य. ३ J H ददाने गुरुवचसा न०. ४ P यि पुत्रः ५ J H पतिमवभूषणेषु पक्षेथ. ६ J H निदद्ध्वनाह. ७ J H खरैस्तैः. ८ P धिचयदिह.

वंलिमिह पदयोः क्रियावहे सद्गुरुहरिभद्रमुनीश्वरस्य तस्य ।
अतिदुरितमनागतं विचार्य व्रजनविधिं प्रतिषेधति स यः प्राक् ॥
अविनयफलमावयोस्तदुग्रं समुदितमत्र विनिश्चितं तथैतत् ।
न चलति नियमे न दैवदृष्टं निजजनने सकलङ्कता मृतिर्वा ॥ ७५॥
नरकफलमिदं न कुर्वहे श्रीजिनपतिमूर्द्धनि पादयोर्निवेशः ।
परिशटिततरौ वरं विभिन्नौ निजचरणौ नतु जैनदेहलग्नौ ॥ ७६ ॥
निधनमुपगतं यथा तथा वा तदिह च साहसमेव संप्रधार्यम् ।
इति दृढतर आवयोर्निबन्धः प्रतिकृतमत्र कृते विधेयमेव ॥ ७७ ॥
तदनु च खटिनीकृतोपवीतौ जिनपतिबिम्बहृदि प्रकाशसेत्वौ ।
शिरसि च चरणौ निधाय यातौ प्रयततमैरुपलक्षितौ च बौद्धैः॥७८॥
प्रतिघवशकडारकेकपार्श्वैरतिकुशलैरवलोकितौ च तैस्तौ ।
गुरुरवददहो पुनः परीक्षामपरतरां सुगतद्विषोर्विधास्ये ॥ ७९ ॥
स्थिरतरमनसस्तदाध्वमद्य प्रतिविषये हि न चादरो विधेयः ।
सुरशिरसि च पादपातमुख्यं न हि समधीनिधयोपि सन्निदध्युः ८०
अथ च कृतमिहोपवीतमेतत् प्रतिकृतमत्र कृते दृढत्वचिह्नम् ।
दृढमतिरपरोपि कश्चिदीदृग्नहि विदधाति यथाविकर्मभीतः ॥ ८१ ॥
परनगरसमागताश्च विद्यार्थिन इह नैव मया कदर्थनीयाः ।
भवति च कुयशोभरस्तदत्र प्रतिकरणं कुपरीक्षितं न कार्यम् ॥८२॥
इति वचनममुष्य ते निशम्य स्थितिमभजन् गुरुणा जना निरुद्धाः ।
शयनभुवि गृहोपरि स्थितानां प्रतिदिशि यामिक एक एव चक्रे८३
जिनगुरुशरणं विधाय रात्राविह शयितौ परमेष्ठिनः स्मरन्तौ ।
समगतच(मच्च)तयोरनिच्छतोरप्यसुखभरेऽसुलभा तदा प्रमीला८४
प्रतनुतमघटावली तदोर्ध्वावनितलतः सविमोचयांबभूव ।
खडखडखडिति स्वरेण शय्यां विजहुरमी विरसं तदा रटन्तः॥८५॥
निजनिजकुलदेवताभिधास्तेऽभिदधुरिहाद्भुतसम्भ्रमेण तौ च ।
जगृहतुरथ जैननाम तेषां नरयुगलं मतमित्यभूच्च शब्दः ॥ ८६ ॥
अथ निधनभयेन साहसिक्याद्दूरतरमौपयिकं तु लब्धवन्तौ ।
अनवरतमहातपत्रवृन्दात्तत उदबध्यत तद्युगं स्वदेहे ॥ ८७ ॥
तनुरुहयुगपत्ततः पृथिव्यां मुमुचतुरंगमथोर्द्धभूमितस्तौ ।
मृदुशयनतलादिवोत्थितौ चाप्रहततनू कुशलादुदग्रबुद्ध्या ॥ ८८ ॥

---

१ J H वल मिहपदयोः. २ J H प्रकाशकृतौ. ३ J H ह्यतदि समधी॰ सिद्ध॰. ४ J H तु परीक्षतः न कार्य. ५ P परमेष्ठिनस्मरन्तौ. ६ J H समगमवतयोरनिथतोरप्य.

लघुतरचरणप्रचारवृत्त्या द्रुतमपचक्रमतुः पुरात्तदीयात् ।
मतिविभववशाद्वुद्धयानौ वलयति कं न मतिर्हि सुप्रयुक्ता ॥८९॥

त्रिभिर्विशेषकम् ।

हतहत परिभाषिणस्तयोस्तेऽनुपदमिमे प्रययुर्भटास्तदीयाः ।
अतिसविधमुपागतेषु हंसोवददिति तत्र कनिष्ठमात्मबन्धुम् ॥ ९०॥
व्रज झगिति गुरोः प्रणामपूर्वं प्रकथय मामकदुष्कृतं हि मिथ्या ।
अभणितकरणान्ममापराधः कुविनयतो विहितः समर्षणीयः ॥९१॥
इह निवसति सूरपालनामा शरणसमागतवत्सलः क्षितीशः ।
नगरमिदमिहास्य चक्षुरीक्ष्यं निकटतरं व्रज सन्निधौ ततोऽस्य॥९२॥
इति सपदि विसर्जितोऽपि तस्थौ क्षणमेकं स तु तैः सहस्रयोधी ।
गततनुममतस्त्वा(स्तु)युद्ध्यते तैः हवहतधन्वशरावलिभिर्हंसः ९३
अतिविपुलतया शिलीमुखानां तितउरिवाजनि तस्य विग्रहश्च ।
अपतदथसवंधरक्त उर्व्यामहितनरैरभवत्ततः परासुः ॥ ९४ ॥
अवरज इहमोहि(दि)तो ह्यमुञ्चन्सविधममुष्यकृपार्द्रमर्त्यवाक्या(न्?)
त्वरिततरपदप्रचारवृत्त्यागमदवनीपतिसूरपालपार्श्वम् ॥ ९५ ॥
शरणमिह ययौ च तस्य धीमान् तदनुपदं रिपवः पराः सहस्राः ।
अवनिपतिमवाप्य चैनमूचुः प्रवितर नः प्रतिपंथिनं समेतम् ॥ ९६॥
अवददथ स को बलेन नेता ममभुजपञ्जरवर्तिनं किलैनम् ।
अनयिनमपि नार्पयाम्यमुं तत्किमुत कलाकलितं नयैकनिष्ठम् ॥९७॥
सुगतमतभटास्तथाभ्यधुस्तं परतरदेशनरस्य हेतवे स्वम् ।
धनकनकसमृद्धराज्यराष्ट्रं गमयसि हास्मदधीशकोपनात्किम्॥९८॥
अवददिह स चोत्तरं गरीयः पुरुषगणैर्मम यद्गतं व्यधायि ।
मरणमथ च जीवितं हि भूयात् नहि शरणागतरक्षणं त्यजामि ॥९९॥
इतरमिह दधामि चैकमेष प्रकटमतिर्विदितप्रमाणशास्त्रः ।
तत इममभिभूय वादरीत्योचितमिह धत्त पराजये जये वा ॥१००॥
अथ वचनविचक्षणः स तेषामधिपतिराह वचस्त्विदं प्रियं नः ।
परमिह वदनं न दृश्यमस्य क्रमयुगलं सुगतस्य मूर्ध्नि योदात् ॥१०१॥
तदनु च यदि शक्तिरस्ति तस्यां त्वरिततरः प्रतिसारयाशु हेतून् ।
यदि जयति स यातु कौशलान्नियतमसौ विजितस्तु वध्य एव॥१०२॥
अथ घटमुखवादिनी रहःस्था वदति तथागतशासनाधिदेवी ।
स्वयमिह हरिभद्रसूरिशिष्यः पुनरनयो न बभूव दृष्टिमेलः ॥१०३॥

---

१ HP लीभिर्हंसः । २ P विदितः प्रमाणशास्त्रः ।

व्यमृशदथ सवत्सलैकनिष्ठा सुगतमते प्रभवन्ति सूरयोऽपि।
अवितथमिह नो घटेत चैतत्त्रुटति वचो न ममापि यत्पुरस्तात्॥१०४॥
अथ बहुदिनवादतो विषण्णः स परमहंसकृती विषादमाधात्।
विंमयति गुरुसंकटे विचिंत्या निजगणशासनदेवता किलास्वा १०५
स्मृतिवशात इयं तदा समाया जिनमतरक्षणनित्यलब्धलक्षाः।
वदति च शृणु वत्स मुक्तिमस्माद्दुरितनंराद् गुरुसत्वमूलभूमेः १०६
सुगतमतसुरी समस्ति तारा वदति निरन्तरमन्त्रुटद्वचः सा।
मनुज इह सुरैः समं विवादी क इव भवन्तमृते समृद्धसत्वम् १०७
प्रतिवद च तमद्य दंभवादीन्नुवमसमानकृतप्रतिश्रंवत्वम्।
अनुवंदनपुरःसरं प्रजल्प्यं भवति कथं तद्दते हि वादमुद्रा॥ १०८॥
बलमिदमधुनैव तद्विनाश्यंत् प्रकटतरं वदतो जयस्तवैव।
अवददथ समेत्र कोन्य एव जननि विना भवतीं करोति सारां १०९
इति समुचितमुत्तरं विधायापरदिवसे विंदधौ सुरी निदेशं।
प्रतिवदितरि संश्रिते च मौनं स जवनिकांचलमूर्भिमाततान॥११०॥
कलशमथ चकार पादपातैर्विशकलमाश्रितवैपरीत्यमेषः।
अवददथ सदम्भवादमुद्रान्नुवमिह कृष्टिजनाधमा भवन्तः॥ १११॥
वधकृतमतयोऽस्य ते ह्यमित्राः समभिहिता ननु तेन भूमिपेन।
नयविजयमयः पराद्ध्यंवृत्तः किमु वधमर्हति साधुलब्धवर्णः॥११२॥
अथ कुनयमपीममातनुध्वं यदि न सहेहमिदं निशम्यतां तत्।
रणभुवि परिभूय मां गृहीता खलु य इमं स तु लात्वपातुकश्रीः११३
तदनु नयनसंज्ञयाथ विद्वान्ननु समकेति पलायनाय तेन।
लघु लघु स पलायनं च चक्रे क इव न नश्यति मृत्युभीविहस्तः११४
द्रुतचरणगतैर्बहिः प्रगच्छन् स च निर्णेजकमेकमालुलोके।
तुरगिषु सविधागतेष्ववादीत् तमिहव्रजन्त्वमिहाययौ प्रंपातः ११५
स्वमतिविभवतः प्रणाशितेस्मिन् वसनविशोधनमादधत्तथासौ।
तरलतुरगिणा च जल्पितो यन्मनुजोऽनेन पथा जगाम नैकः॥११६॥
रजक इह स तेन दर्शितोऽस्य त्वरिततरः स च शीघ्रमेव तेन।
निजभटनिवहे समार्पि धृत्वा प्रतिवचंलेच बलं तदीयवाक्यात्११७
निजमतिबलतस्ततः प्रकाशं विभयमनाश्वलितोभिचित्रकूटम्।
अभिसमगमद्दिनैः कियद्भिर्गुरुचरणाम्बुरुंहां समागमः कः॥११८॥

१ JH सच्च वलिकनिष्ठा. २ JHविभवति. ३ P भरा. ४ JH प्रविवदवत् मद्य दंभवादि न्नुवमसमकृतप्रतिश्रुतत्त्वम् ५ JH अथ सुवदन. ६ JH स्यां. तद्वतेहि वाच. ७JH स्याः तद जयत. ८ JH विविध सुरातिवेशम् P निदेशा ९ कथमिहकृष्टी ......वत. १० JH भ्रमिहायवौ. ११ JH वृत्ताप्रति चलेच्च वत० १२ P ऊह०.

इतर इति निजेशकार्य्यसिद्ध्या नृपतिममुं किल सांत्वयांबभूवुः।
अणुतरविषये दृढं सहायं परिहरते हि क उग्रपौरुषोऽपि॥ ११९॥
अथ निजगुरुसंगमामृतेन स्रुतकरणः शिरसा प्रणम्य पादौ।
दृढतरपरिरब्ध एष तैश्च प्रविगलदश्रुजलो जगाद सद्यः॥ १२०॥
गुरुजनवचसां स्मरामि तेषां परतरदेशगतौ हि यैर्निषिद्धौ।
निशमयत विभो प्रबन्धमेनं कुविनयशिष्यजनास्यतः प्रवृत्तम् १२१
इति चरितमसौ जगाद यावन्निजगुरुबन्धुपरासुतावसानम्।
अथ निगदत एव हृद्विभेदं समजनि जीवहरो बली हि मोहः॥१२२॥
विमृशति हरिभद्रसूरिरीदृक् किमु मम संकटमद्भुतं प्रवृत्तम्।
निरुपमचरितवीतरागभक्तेरुदितमिदं निरपत्यतामनस्यम्॥ १२३॥
विमलतरकुलोद्भवौ विनीतौ यमनियमोद्यमसंगतौ प्रवीणौ।
परमतविजयप्रकाशपंङ्कापरिमलशोभितविद्वदर्चितांह्री॥ १२४॥
अपि परतरदेशसंस्थशास्त्राधिगमरसेन गतौ च विप्रकृष्टम्।
मदसुकृतवशेन जीवितांतं ययतुरुभावपि कर्म धिक् दुरन्तम् १२५
विनयमथ शमं स्मरामि किंवा गुरुपदसेवनमद्भुतं किमत्र।
नहि मम सदृशैस्तु मन्दभाग्यैः परिचरणं ननु तादृशां विलोक्यम्॥
मुखकृतकवलैर्विवृद्धदेहौ चटकशिशू इव यावजातपक्षौ।
अवसर इह तौ सपक्षताया भृशमतिगम्य दृशोः पथं व्यतीतौ १२७
कलुषकुलनिवास एष देहः सुचरितकक्षदवानलार्चिरुग्रः।
इह हि किमधुना प्रधार्यतेऽसौ विरहभरेऽपि सुशिष्ययोरवाप्ते १२८
विनिहततमनिर्वृतिप्रकारा कमिव विशेषमवाप्नुमत्रधार्य्याः।
सुललितवचनौ विनेयवर्यावसव इमौ हि विना कदर्यधुर्योः॥१२९॥
इति विमृशत एव सौगतानामुपरि महः समुदैन्निजान्वयस्थम्।
सुविहितपरिकर्मणाऽपि साम्यं न सहजमाभिजनं महत्तमेऽपि १३०
अवददथ स सौगताः कृतास्ते परिभवपूर्णहृदो गृहस्थितेन।
इति विनयविनेयसिंहसेनाद्भुतहतचित्तनिवृत्तिसापराधाः॥१३१॥
श्रुतविहितनयेऽपि युक्तमुक्तं सकलबलेन निवारणं रिपूणाम्।
परभवगतिरस्य निर्मला नो य इह सशल्यमना लभेत मृत्युम्१३२
इति जिनपतिशासनेपि सूक्तं गुरुतरदोषमनुद्धृतं हि शल्यम्।
सुगतमतभृतो निवर्हणीयाः स्वसुतनिर्मथनोत्थरोपपोषात् १३३

---

१ JH नामनस्यन्ति. २ JH विनिहततमनिवृत्तिप्रकारां कमिवं विशेप P omits मवाप्नु. ३ JH अजिहिंसानेनाप्नुत. ४ JH लालोप—शशल्य... सुक्त्यं ५ JH सत्वभगः I... परमहंसहति.. असिद्धः.

इति मतिमति चेतसि प्रकामं गुरुमभिपृच्छय ययौ विना सहायम् ।
हृदि विगलितसंयमानुकंपो नगरमवाप च भूमिपस्य तस्य ॥ १३४॥
द्रुततरमभिगम्य पार्श्वमस्य प्रकटतरीकृतजैनलिङ्गरूपः ।
वदति च हरिभद्रसूरिरेवं जिनसमयप्रवराशिषाभिनंद्य ॥ १३५ ॥
शरणसमितवज्रपंजर त्वं शृणु मम वाक्यमशक्यसत्वभंग ।
इह हि मम विनेय उज्जिजीवे स परमहंस इति त्वया प्रसिद्ध १३६
किमिव न तव साहसं प्रशस्यं क्षितिपशरण्यकृते हि लक्ष्यसंख्यम् ।
बलमवगणितं तदेतदभ्युन्नतिकरमूर्जितमस्ति नापरस्य ॥ १३७ ॥
निरगममिह सांयुगीनवृत्तिः कृतिजनरीतित उन्नतप्रमाणः ।
अतिशयनिभनिष्टवाक्प्रबन्धान् सुगतमते स्थितकोविदान् जिगीषुः।
अवददथ स सूरपालभूपो समतवचापि विजेयतापदे ते ।
बलविवदननिष्ठिता अजेया शलभगणा इव ते ह्यमी बहुत्वात् १३९
परमिह कमपि प्रपञ्चमर्घ्यं ननु विदधामि यथा भवद्विपक्षः ।
स्वयमपि विलयं प्रयाति येन प्रतिकूलं वचनं तु मे न गण्यम् १४०
अवहितिपरवाचमेककां मे शृणु तवकाचिदजेयशक्तिरस्ति ।
अवददथ च को हि मां विजेता वहति सुरी यदुदन्तमम्बिकाख्या १४१
वचनमिति निशम्य तस्य भूपः सुगतपुरे प्रजिघाय दूतमेषः ।
अपि स लघु जगाम तत्र दूतो वचनविचक्षण आहतप्रपञ्चः ॥१४२॥
सुगतगुरुमथ प्रणम्य तत्रावददिति भूमिपतिः स सूरपालः ।
स्फुरिततनुमिवेह भारतीं त्वामिति किल विज्ञपयत्यनल्पभक्तिः१४३
इह मम पुरमाजगाम चैको बुध इह बुद्धमताभियातिरूपः ।
भवति च भुवनत्रयप्रसिद्धे प्रतपति किंतु स एष वादिशब्दः १४४
इदमिह महते त्रपाभराय प्रभवति तत् क्रियते तथा यथा सः ।
निधनमविजयः स्वयं स यायात्कुरुतेऽन्योपि यथा न कश्चिदित्थम्॥
दशबलमतनायकः समानप्रतिघवशो वदति स्म तं प्रमोदात् ।
इह जगति समस्तदेशनानाविबुधगणस्तमहं तिरश्चकार ॥ १४६ ॥
जिनसमयविशारदोऽपि कश्चिन्नवपठितो भविताव वावदूकः ।
वचनमदमहं ततो विनेष्ये गहनविकल्पसमूहकल्पनाभिः ॥ १४७ ॥
स्वयमिह निधने कृतप्रतिज्ञः स किमु भविष्यति तद्वद त्वमेव ।
पटुवच इति जल्पति स दूतः प्रभुपुरतो मम गीः प्रवर्त्तते किम् १४८
तव पदकमलप्रसादतो वा किमिव न मे शुभमद्भुतं भविष्यत् ।
मतिरिति तु मम प्रकाशतोऽसौ परमिह तु प्रभुणा विचार्यकार्यम्॥

---

१ JH सत्वभंगः I...परमहंसहति प्रसिद्ध. I २ JH मम वचापि विजेयतापदेन. ३ P किमिति. ४ P मिहमते.

लिखत वच इदं पणे जितो यः स विशतु तप्तवरिष्ठतैलकुण्डे ।
इति भवतु सवीप्सया प्रशंसामिह विदधेऽस्य गुरुर्विचारदृष्टः१५०
विपुलमतिरथप्रगल्भदूतः पुनरपि वाचमुवाच दार्ढ्यहेतोः ।
प्रभुचरणयुगं तथापि धाष्ट्र्यात्पुनरपि विज्ञपयामि किञ्चिदत्र१५१॥
शृणुत वसुमती हिरण्यगर्भा भवति कदाचन कोऽपि तत्र विद्वान् ।
अतिशयितमतिर्यतो जिनानां ननु भवतामवमानना हि माभूत्१५२
असदिह परिकल्पनं ममैतद्गगनतले कुसुमोद्गमेन तुल्यम् ।
जयिषु किल भवत्सु यत्सनाथा वयमिह तत्तु दृढं विचारणीयम्१५३
गुरुरवददसौ भयं किमेतद्भवति तथा भ्रम एव कस्य फल्गुः ।
अपि मयि चिरसेवितेपि यद्वः स्फुरति परेण विजेयताभिशङ्का१५४॥
क इव मम पुरः स कोऽपि विद्वाननधिगतस्वरप्रमाणभूमिः ।
मदगदमवमोचये न चैतदहमहो न निजं वहामि नाम ॥ १५५ ॥
स्वनृपतिपुरतः प्रशाधि वाचं मम विनियंत्रितवादिपौरुषस्य ।
वयमिह परवादिलाभतुष्टा अनुपदमेव समागमा मते यत् ॥ १५६॥
वचनमिति निशम्य तस्य दूतो मुदितमनाः पुरमाययौ निजं सः ।
इति सुविहितबौद्धविप्रलम्भाभृपतिमवर्द्धयदत्र सूरपालम् ॥ १५७॥
त्रिचतुरदिवसान्तरेण सोऽपि प्रभुरिह बौद्धमतस्य तत्र चायात् ।
अतिपरिवृढसेव्यपादपद्मोऽध्यधित स पूर्वपणेन वादमुद्राम् ॥ १५८॥
विबुधपतिरचिन्तयन्न[1]चासौ कथमहमस्य कृते स्मरामि ताराम् ।
अथ किमनया स्मृतापि यासौ जितमदरिव्रजघातिनी न सद्यः१५९॥
इति स च परिचिन्त्य वादसंसद्य्[2]पहरिभद्रविशारदं समेत्य ।
अवददिदमनित्यमेव सर्वं सदिति वचः परिसंस्कृतं यदेतत् ॥१६०॥
इह भवति च पक्ष एव हेतुर्जलधरवन्ननु संति चात्र भावाः ।
निगदित इति मूलपक्षजाते वदति ततः प्रतिवाद्यनूद्य सम्यक्१६१॥
यदि सकलमिदं विनश्वरं तत् स्मरणविचारणचारिमा कथं स्यात्।
तदिदमिह पुरावलोकितं यत्कथमियमित्यनुसंहतिर्घटेत ॥ १६२ ॥
वदति समतिसन्तति स्म तुल्या भवति सदैव सनातना मते नः ।
बलमिदमनु संहतेश्च तस्या व्यवहरणं च तथैव वर्त्तते नः ॥ १६३॥
अनुवदति मुदा स्म जैनविद्वानिह मतिसन्ततिरप्रणाशिनी चेत् ।
सदिति सुविदितैव तत् ध्रुवं त्वानुमतिरिदं तव चात्मवाग्विरुद्धम्
न विबुधकमनीयमेतदुच्चैः स्वसमयमूढमतिर्भवान्यदिच्छुः ।
ननु सकलविनश्वरत्वसन्धां परिहर तच्चिरकालतो विलग्नाम्॥१६५॥
इति वचननिरुत्तरीकृतोऽसौ
सुगतमतप्रभुराचचार मौनम् ।

---

[1] P. तथासौ. [2] JH. वाद संसक° ।

जित इति विदिते जिनैर्निपेते
  द्रुततरमेष सुतप्ततैलकुण्डे ॥ १६६ ॥
अथ कलकल उद्बभूव तेषां
  दशबलविद्विदरीतिमृत्युभावात् ।
इति भवदपमानमारमुन्ना
  भयतरला अनशन्नमी निरीशाः ॥ १६७ ॥
अथ विशदविशारदस्तदीयो
  वदनमतिः किल तद्वदेक एकः ।
समगतवत्तथैव पञ्चषास्ते-
  निधनमवापुरनेन निर्जिताश्च ॥ १६८ ॥
दशबलमतिशासनाधिदेवी
  खरवचनैरुपलम्भिताथ सा तैः ।
प्रतिघवशविसर्पिदर्पभङ्ग—
  रणकदिनेषु सुरस्मृतिर्हि कालः ॥ १६९ ॥
ननु शृणु कटपूतनेऽत्र यस्त्वा-
  मविरतमर्चयिता मुधा नरेन्द्रः ।
कुमरणविधिना मृतोऽधुना त-
  न्ननु भवती क गतासि हन्त तारे ॥ १७० ॥
मलयजघनसारकुङ्कुमादि—
  प्रकृतिविलेपनधूपसारभोगैः ।
सुरभिकुसुमदामभिश्च सम्यक्
  ननु तव दृषद इव व्यधायि पूजा ॥ १७१ ॥
दृढतरपरिपूजिता भवादृक्
  विधुरतरावसरेऽपि सन्निधानम् ।
यदि न वितनुते ततः सदेहे
  स किमु नहि क्रियते सुवस्तुभोगः ॥ १७२ ॥
सविधतरभुवि स्थिता च तारा
  सुकरुणमानसवासना ह्यमीषु ।
अनुचितमपि जल्पतो निशम्या-
  प्रतिघमना मृदुवागिदं जगाद ॥ १७३ ॥
अतिशयशुचमाप्य यद्वराका
  असदृशमप्यनुवादिनो भवन्तः ।

१ P० विद्वदरी० JH० विद्वदागी० २ P समगतंचतथै० ३ P निमर्ष ४ P अनु ५ JH श्रायस्त्वमा ६ P० ता गुषीन । ७ JH० शमिपुवि० !

कुवचनमपि नो मयात्र गण्यं
मम वच एकमिदं निशाम्यताञ्च ॥ १७४ ॥
अतिपरतरदेशतः समेतौ
परसमयाधिगमाय सङ्गतौ च ।
जिनशिरसि पदप्रदानपापा-
भ्युपगमरूपनिभेऽप्यमुक्तसत्वौ ॥ १७५ ॥
प्रतिकृतमिह तत्कृते दधानौ
झटितिरनेन हतौ पलायमानौ ।
नयपथपथिकौ महामुनी य-
त्तत्प्रकृतिकृतिरस्ति तस्य दुष्कृतस्य ॥ १७६ ॥
तत इति समुपेक्षितो मया य-
द्विलयमवाप निजैनसैव तस्मात् ।
विदधति ननु यस्य पक्षमुच्चै-
र्ननु मम तेपि सदा ह्युपेक्षणीयाः ॥ १७७ ॥
इति शुचमपहाय यूयमेते
निजनिजभूमिषु गच्छताद्य धीराः ।
दुरितभरमहं हि वो हरिष्ये
निजसन्तानसमेषु को हि मन्युः ॥ १७८ ॥
इति वचनमुदीर्य सा तिरोधा-
न्निजनिजदेशगणं ययुश्च तेऽथ ।
अपरतरपरेषु बौद्धवृद्धा
उपशममापुरिति श्रुतप्रवृत्त्या ॥ १७९ ॥
इह किल कथयंति केचिदित्थं
गुरुतरमंत्रजयप्रभावतोऽत्र ।
सुगतमतबुधान् विकृष्य तप्ते
ननु हरिभद्रविभुर्जुहाव तैले ॥ १८० ॥
अथ जिनभटसूरिरत्रकोपा-
द्भुतमिह शिष्यजने निजे निशम्य ।
उपशमनविधौ प्रवृत्तिमाधा-
दिह हरिभद्रमुनीश्वरस्य तस्य ॥ १८१ ॥
मृदुवचनविधिं च शिक्षयित्वा
यतियुगलं प्रजिघाय तत्करे च ।

---

१ P० तेन. २ P तत्प्रकृतिरस्ति तस्य; JH महान्यतीयत्तत्प्रतिकृतिरस्ति दुष्कृतस्य ३ P० ह्युपे०. ४ JH omit this verse. ५ JH मेव तप. ६ P० नोत्र.

क्रुध उपशमनाय तस्य गाथा-
त्रयमिह समरदिनेशवृत्तबीजम् ॥ १८२ ॥
प्रययतुरथ तेऽपि तस्य राज्ञो
नगरमिदं मिलितौ च तस्य सूरेः[1] ।
वच इह कथयांबभूवतुस्तद्
गुरुभिरमुं प्रति यन्निदिष्टमिष्टम् ॥ १८३ ॥
प्रतिघगुरुतरोर्भवान् फलोदा-
हरणमिमा अवधारयस्व गाथाः ।
इति किल वदतोस्तयोः स भक्त्या
गुरुलिखिताः समवाचयत्ततस्ताः ॥ १८४ ॥

तथाहि—गुणसेणअग्गिसम्मा सीहाणंदाय तहपि आपुत्ता ।
सिहिजालिणि माइसुआ[2] धणधणसिरिमो मोयपइभज्जा ॥ १८५ ॥
जय विजयाय सहोअरधरणो लच्छीअ तहप्पई भज्जा ।
[3]सेण विशेणा पित्तिय उत्ताजम्मम्मि सत्तमए ॥ १८६ ॥
[4]गुणचन्दवाणमन्तरसमरा
इव्व गिरिसेण पाणोय ।
एगस्सत उमुरकोऽणन्तो अन्नस्स संसारो ॥ १८७॥

इति चतुरमतिर्व्यमृक्षदेवं
हृदि हरिभद्रविभूस्तदेतदीदृक् ।
अपि वनमुनिपारणस्य भङ्गे
भवनचकेप्यनु वर्ततेस वैरम्[5] ॥ १८८ ॥
पुनरिह मयकानुकोपदावा-
नलवहलार्चिरुदस्तचेतनेन ।
दशबलमतसङ्गिनः प्रपञ्चं
विरचयिता विनिवर्हिताश्च भूम्ना ॥ १८९ ॥
अतिविरतचिरप्ररूढमिथ्या-
ग्रहसमयैरिव विप्रलब्धचेताः ।
अपि जिनमतबोधमाकलय्या-
सुकृतवशेन तमःप्रवेशमाधाम् ॥ १९० ॥

---

१ JH सूरं. २ P पियामायसुआ. ३ JH घरणो वला अत हयइ भज्ञा सेणा पित्तिय उत्ता० ४ JH गुण चदवाणमतरा इघागि ''व्व एगस्सतउ सोरेका ५ J H °सगे भवनकेप्यमुवतंते स्म वैरं.

नरकगमनदोर्हृदं हि जीव-
स्य तु मैमदौहृदमायतौ दुरन्तम् ।
निजमिह परिबोध्य जीवमित्थम्
प्रकटमुवाच तपोधनाग्रतोऽसौ ॥ १९१ ॥

इह जनगुरुवत्सलत्वबुद्धे-
रनृणविधिः किमवाप्यते कथञ्चित् ।
नरकगतिसमीपगामिनं मां
प्रति घटते भृशमुद्दिधीर्षया यः ॥ १९२ ॥

त्रिविंधमथ विरोधमौज्झ्य सूरि-
र्भृशमभिपृच्छ्य च तं नृपं महेच्छः ।
निरगमदविलम्बितप्रयाणैः
समगत शीघ्रमसौ गुरुक्रमाणाम् ॥ १९३ ॥

शिरसि च विनिधाय तान्नतास्योऽ-
गददथ गद्गदगीर्भरः स तत्र ।
गुणविशदविनेयमोहतोऽहम्
प्रभुचरणाम्बुजसेवया वियुक्तः ॥ १९४ ॥

श्रुतविहिततपः प्रदाय वाढं
मम कलुषं परिशोधयध्वमाशु ।
अविनयसदने विनेयपाशे
प्रगुणतरां मतिमातनुध्वमुच्चैः ॥ १९५ ॥

गुरुरिह परिरभ्य गाढमेनं
कृतविजिनार्हतपः प्रदाय चावक् ।
कलुषसुकृतयोर्विधौ समर्था
ननु हरिभद्रसमाः क सन्ति शिष्याः ॥ १९६ ॥

खरतरतपसा विशोषयंतं
तनुमतनुः स विनेययोर्वियोगः ।
परिदहति भृशं मनस्तदीयं
जलनिधिमौर्व इव प्रकाशकीलः ॥ १९७ ॥

अतिशयपरिदूनमेवमम्बा
धृतिविधये सुतरामुवाच वाचम् ।
क इव सविरहस्तवार्दनेऽसौ
गृहधननन्दनसङ्गवर्जितस्य ॥ १९८ ॥

---

१ P जीवत्यजनतुदोहद०. २ J H मित्र० ३ J H. षं यायां. ४ J H विविध.

जिनसमयविचित्रशास्त्रसेवा-
निपुणविशुद्धमते स्वकर्मपाकः ।
फलवितरणकृन्निजः परो वा
तदिति विडम्बकमेव कोविदानाम् ॥ १९९ ॥
गुरुपदवरिवस्ययाभिरामः
सफलय शुद्धतपस्यया स्वजन्म ।
शरदि घन इव प्रलीनमेतत्
भवति विकर्म यथा तनु त्वदीयम् ॥ २०० ॥
अवगथ हरिभद्रसूरिरम्बे
जडमतिमादृशशिष्यकावलम्बे ।
न किमपि मम चेतसो व्यथाकृ-
द्विशदविधेयविनेयमृत्युमुख्यम् ॥ २०१ ॥
इढमिह निरपत्यता हि दुःखम्
गुरुकुलमप्यमलं मयि क्षतं किम् ।
इति गदति जगाद तत्र देवी
शृणु वचनं मम सूनृतं त्वमेकम् ॥ २०२ ॥
नहि तव कुलवृद्धिपुण्यमास्ते
ननु तव शास्त्रसमूहसन्ततिस्त्वम् ।
इति गदितवती तिरोदधे सा
श्रमणपतिः स च शोकमुत्ससर्ज ॥ २०३ ॥
मनसि गुरुविरोधवर्द्धिगाथा-
त्रितयमिदं गुरुभिर्गुरुप्रसादात् ।
प्रहितमभिसमीक्ष्य सैष पूर्वं
स च समरार्कचरित्रमाततान ॥ २०४ ॥
पुनरिह च शतोनसुग्रधीमान्
प्रकरणसार्द्धसहस्रमेष चक्रे ।
जिनसमयवरोपदेशरम्यं
ध्रुवमिति सन्ततिमेषताञ्च मेने ॥ २०५ ॥
अतिशयहृदयाभिरामशिष्य-
द्वयविरहोर्मिभरेण तप्तदेहः ।
निजकृतिमिह संव्यधात्समस्तां
विरहपदेन युतां सतां स मुख्यः ॥ २०६ ॥

१ JH विदु च कामचको० २ JH चरितस्य यामि०

प्रकरणनिकरस्य विस्तरार्थं
हृदयविबाधकचिन्तयाभिधान्तः ।
अणुतरजिनवासिनं सकार्पा-
सिक इति नामकमैक्षताथ भव्यम् ॥ २०७ ॥
शुभशकुनवशात् स्वकीयशास्त्र-
प्रसरणकारणमेप तं व्यमृक्षत् ।
तत इह विरलं च भारतादि-
श्रवणसतृसमुवाच हृद्यविद्यः ॥ २०८ ॥
तथाहि—एयंलोइय कव्वं गद्दहलिंडं च वाहिरे सिद्धं
जं अन्तो फोडिज्जंतं तुसवुसभुसमीसियं सव्वम् ॥ २०९ ॥
अवददथ वणिक् विवेचयस्व
प्रकटमिदं स ततो जगाद सूरिः ।
अनृतभरभृतेष्वहो जनाना-
मितिहासेपु यथा तथा प्रतीतिः ॥ २१० ॥
इति विशकलनाय मूढतायाः ।
कितवकथानकपञ्चकं तदुक्तम् ।
विपधर इति मंत्रवत्तुमिथ्या-
ग्रहविपविस्तरसंहृतिप्रवीणम् ॥ २११ ॥
श्रवणत इह तस्य जैनधर्मे
प्रकटमतिर्बुबुधे ततो जगाद ।
वितरणमुख एप जैनधर्मो
द्रविणमृते स विधीयते कथं नु ॥ २१२ ॥
गुरुरथ समुवाच धर्मकृत्या-
द्रविणभरो भविता तव प्रभूतः ।
अवददथ स चेदिदन्तदाहं
सपरिजनः प्रभुगीर्विधायकः स्याम् ॥ २१३ ॥
वदति गुरुरथ त्वमेकचित्तः
शृणु बहिरद्य दिनात्तृतीयघस्रे ।
परविषयवणिज्यकारकोऽथ
स्फुटमिह वस्तुनिधानमेष्यतीति ॥ २१४ ॥
तदुप तव गतस्य वस्तुजातं
तदथ समोद्धृतितः समर्घमाप्यं ।

---

१ J H वान्त. २ P वासनं. ३ J H चिरमवं. ४ J H अनृततरस तेप्य० ५ J H प्रवृत्ति. ६ J H विषधरवति. ७ J H समाद्धृति.

गुरुतरमुतो धनञ्ज[1] भावि
व्यवहरणात्सुकृतोदयेन भूम्ना ॥ २१५ ॥
विहितमिह मया हि शास्त्रवृन्दं
ननु भवतां भुवि पुस्तकेषु लेख्यम् ।
तदनु यतिजनस्य ढौकनीयं
प्र[2]सरति सर्वजने यथा तदुच्चैः ॥ २१६ ॥
सु[3]कृतिजनशिरोमणिस्ततोऽसा-
विति वचनं विदधे गुरोरलङ्घ्यम् ।
तदनु च तदिदं भवार्णवस्य
प्रतरणहेतुतरीसमं प्रवृत्तम् ॥ २१७ ॥
अथ च चतुरशीतिमेकपीठे
जिनसदनानि महालयानि तत्र ।
अपरजनमपि प्रबोध्य सूरिः
सुमतिरचीकरदुच्चतोरणानि ॥ २१८ ॥
चिरलिखितविशीर्ण[4]वर्णभग्न-
प्रविवरपत्रसमूहपुस्तकस्थम् ।
कुशलमतिरिहोद्धारजैनो-
पनिषदिकं स महानिशीथशास्त्रम् ॥ २१९ ॥
श्रुतिपरिचयतो निजायुरन्तः
सुपरिकलय्य गुरुक्रमागतोऽसौ ।
गणविषयनिराशतोच्छचेतः
कदनविरागविशेषसंस्तुताङ्गः ॥ २२० ॥
अनशनमनघं विधाय निर्या-
मकवरविस्मृतहार्दभूरिबाधः ।
त्रिदशवन इव स्थितः समाधौ
त्रिदिवमसौ समवापदायुरन्ते ॥ २२१ ॥
इत्थं श्रीहरिभद्रसूरिसुगुरोश्चित्रं चरित्राद्भुतम् ।
स्मृत्वा विस्मयकारणं पटुतरप्रज्ञालपूज्यं बुधाः ॥ २२२ ॥
मादृक् प्रा[5]थमकल्पिकावलिधियां जीवातुपाथेयवत् ।[6]
शृण्वन्तु प्रकटं पठन्तु जयताच्चाचन्द्रसूर्यस्थिति ॥ २२३ ॥
श्रीचन्द्रप्रभसूरिपट्टसरसीहंसप्रभः श्रीप्रभा-
चन्द्रः सूरिरनेन चेतसि कृते श्रीरामलक्ष्मीभुवा ।

---

१ P H धनं. २ P omits प्रस...ने. ३ P सु- कृत. ४ P वर्शीर्ण भग्न प्रविवर. ५ JH प्रायम- ६ J H omit this and give ग्रंथ ३५ अक्षर ३ ३ अग्र २०४३ ॥ अक्षर ३ ॥ ९० ॥

श्रीपूर्वर्षिचरित्ररोहणगिरौ श्रीहारिभद्रीकथा
श्रीप्रद्युम्नमुनीन्दुना विशदितः शृङ्गोऽयमष्टाधिकः ॥२२४॥
पुरुषोत्तम परमेष्ठिन् गिरीश गणनाथ विबुधवृन्दपते ।
प्रद्युम्नब्रह्मरते सुमनोमय किमसि नहि तपनः ॥ २२५ ॥

इति हरिभद्रसूरिप्रबन्धः । ग्रन्थ ३५४ अ० ३ उभयं २०४३ अ०३॥

---

श्रीमल्लवादिप्रबन्धः ।

संसारवार्द्धिविस्तारान्निस्तारयतु दुस्तरात् ।
श्रीमल्लवादिसूरिर्वो यानपात्रप्रभः प्रभुः ॥ १ ॥
गौसत्तारघना यस्य पक्षाक्षीणलसद्भुवि (?) ।
अवक्रा लक्षभेत्री च जीवामुक्ता सुपर्वभृत् ॥ २ ॥
जडानां निर्विडाध्माय प्रवृत्तं वृत्तमद्भुतम् ।
प्रमाणाभ्यासतः ख्याते दृष्टान्तं किंचिदुच्यते ॥ ३ ॥
रेणुप्राकारतुङ्गत्वाद्रथेनागच्छतो रवेः ।
रथाङ्गमिव संलग्नं शकुनीतीर्थनाभिभृत् ॥ ४ ॥
हर्म्यौघनिकरैर्युक्तं वप्रनेमिविराजितम् ।
पुरं श्रीभृगुकच्छाख्यमस्ति स्वस्तिनिकेतनम् ॥ ५ ॥
चारुचारित्रपाथोधिशमकल्लोलकेलितः ।
सदानन्दो जिनानन्दः सूरिस्तत्राच्युतः श्रिया ॥ ६ ॥
अन्यदा धनदानाप्तिमत्तश्चित्ते छलं वहन् ।
चतुरङ्गसभावज्ञामज्ञातमदविभ्रमः ॥ ७ ॥
चैत्ययात्रासमायातं जिनानन्दमुनीश्वरम् ।
जिग्ये वितंडया बुद्ध्या नन्दाख्यः सौगतो मुनिः ॥८॥ युग्मम् ।
पराभवात्पुरं त्यक्त्वा जगाम वलभीं प्रभुः ।
प्राकृतोऽपि जितोऽन्येन कस्तिष्ठेत्तत्पुरांतरा ॥ ९ ॥
तत्र दुर्लभदेवीति गुरोरस्ति सहोदरी ।
तस्याः पुत्रास्त्रयः सन्ति ज्येष्ठो जिनयशोऽभिधः ॥ १० ॥
द्वितीयो यक्षनामाभून्मल्लनामा तृतीयकः ।
संसारासारता चैषां मातुलैः प्रतिपादिता ॥ ११ ॥
जनन्या सह ते सर्वे बुद्धा दीक्षामथाददुः ।
संप्राप्ते हि तरंडे कः पाथोधिं न विलंघयेत् ॥ १२ ॥
लक्षणादिमहाशास्त्राभ्यासात्ते कोविदाधिपाः ।
अभूवन् भूपरिख्याताः प्रज्ञायाः किं हि दुष्करम् ॥ १३ ॥

---

१ J H गौ· सत्तारथ·· गलप्रुवि । अवक्राक्षते मीव···वै० J ०र्वभृत् ॥
२ P निविधा. J निवडा· ३ P प्रवृत्तैर्वृत्त० ४ P न्त· ५ P जित.

पूर्वर्षिभिस्तथा ज्ञानप्रवादाभिधपञ्चमात् ।
नयचक्रमहाग्रन्थपूर्वोच्चक्रे तमोहरः ॥ १४ ॥
विश्रामरूपास्तिष्ठन्ति तत्रापि द्वादशारकाः ।
तेषामारंभपर्यन्ते क्रियते चैत्यपूजनम् ॥ १५ ॥
किंचित्पूर्वगतत्वाच्च नयचक्रं विनापरम् ।
पाठिता गुरुभिः सर्वं कल्याणीमतयोऽभवत्(न्) ॥ १६ ॥
त्रिभिर्विशेषकम्

एष मल्लो महाप्राज्ञस्तेजसा हीरकोपमः ।
उन्मोच्य पुस्तकं बाल्यात्स स्वयं वाचयिष्यति ॥ १७ ॥
तत्तस्योपद्रवेऽस्माकमनुतापोऽतिदुस्तरः ।
प्रत्यक्षं तज्जनन्यास्तज्जगदे गुरुणा च सः ॥ १८ ॥
वत्सेदं पुस्तकं पूर्वं निषिद्धं मा विमोचयः ।
निषिद्धेति विजहुस्ते तीर्थयात्राचिकीर्षवः ॥ १९ ॥
मातुरप्यसमक्षं स पुस्तकं वारितद्विषन् ।
उन्माज्यं प्रथमे पत्रे आर्यामेनामवाचयत् ॥ २० ॥
तथाहि–निधिनियमभङ्गवृत्तिव्यतिरिक्तत्वादनर्थकमवोचत् ।
जैनादन्यच्छासनमनृतं भवतीति वैधर्म्यम् ॥ २१ ॥
अर्थं चिन्तयतोऽस्याश्च पुस्तकं श्रुतदेवता ।
पत्रं चाच्छेदयामास दुरंता गुरुगीःक्षतिः ॥ २२ ॥
इतिकर्तव्यतामूढो मल्लश्चिह्लत्वमासजत् ।
अरोदीत् शैशवस्थित्या किं बलं दैवतैः सह ॥ २३ ॥
पृष्टः किमिति मात्राह मद्वृत्तात्पुस्तकं ययौ ।
संघो विषादमापेदे ज्ञात्वा तत्तेन निर्मितम् ॥ २४ ॥
आत्मनः स्खलितं साधु समाचरयते स्वयम् ।
विचार्येति सुधीर्मल्ल आराध्नोत् श्रुतदेवताम् ॥ २५ ॥
गिरिपण्डलनामास्ति पर्वतस्तद्गुहान्तरे ।
रूक्षनिष्पावभोक्ता स षष्ठः पारणकेऽभवत् ॥ २६ ॥
एवमप्यर्दितसंघो वात्सल्याज्जननीयुतः ।
ईदृक् श्रुतस्य पात्रं हि दुःप्रायं भावि शीर्यताम् ॥ २७ ॥
विकृतिं ग्राहितस्तेन चतुर्मासिकपारणे ।
साधवस्तत्र गत्वास्य प्रायच्छन् भोजनं मुनेः ॥ २८ ॥

१ JH पूर्वं० २ J उन्माध्य. JH० यमेपत्रेसार्यं० ३ JH अत्मना० ४ ञत्र प्रविचं( ५ JH रूक्षनिष्पाव. षष्टपारणको० ६ JH मर्ष्यादितं.
अक्षर ३ ३ अयं

श्रुतदेवतया संघसमाराधितया ततः ।
ऊचे तदा परीक्षार्थं को(के)मिष्टा इति भारतीम् ॥ २९ ॥
वल्ला इत्युत्तरं प्रादान्मल्लः फुल्लतपोनिधिः ।
षण्मासान्ते पुनः प्राह वाचं केनेति तत्पुरः ॥ ३० ॥
उक्ते गुडघृतेनेति धारणातस्तुतोष सा ।
वरं वृणिवति च प्राह तेनोक्तं यच्छ पुस्तकम् ॥ ३१ ॥
श्रुताधिष्ठायिनि प्रोचेऽवहितो मद्वचः शृणु ।
ग्रन्थेऽत्र प्रकटे कुर्युर्द्वेषिदेवा उपद्रवम् ॥ ३२ ॥
श्लोकेनैकेन शास्त्रस्य सर्वमर्थं ग्रहीष्यसि ।
इत्युक्त्वा सा तिरोधत्त गच्छं मल्लश्च सङ्गतः ॥ ३३ ॥
नयचक्रं नवं तेन श्लोकायुतमितं कृतम् ।
प्राग्ग्रन्थार्थप्रकाशेन सर्वोपादेयतां ययौ ॥ ३४ ॥
शास्त्रस्यास्य प्रवेशं हे संघश्चक्रे महोत्सवात् ।
हस्तिस्कन्धाधिरूढस्य प्रौढस्यैं च महीशितुः ॥ ३५ ॥
अन्यदा श्रीजिनानन्दप्रभुस्तत्रागमच्चिरात् ।
सूरित्वे स्थापितो मल्लः श्राद्धैरभ्यर्थ्य सद्गुरुम् ॥ ३६ ॥
तथा जिनयशोनामा प्रमाणग्रन्थमादधे ।
मल्लभूपसुसेवादि(?) श्रीनन्दकगुरोर्गिरा ॥ ३७ ॥
शब्दशास्त्रे च विश्रान्तविद्याधरवराभिधे ।
न्यासं चक्रेऽल्पधीवृन्दबोधनाय स्फुटार्थकम् ॥ ३८ ॥
यक्षेण संहिता चक्रे निमित्ताष्टाङ्गबोधनी ।
सर्वान् प्रकाशयत्यर्थान् या दीपकलिका यथा ॥ ३९ ॥
मल्लः समुल्लसन्मुल्लीफुल्लवेल्लद्यशोनिधिः ।
शुश्राव स्थविराख्यानात् न्यक्कारं बौद्धतो गुरोः ॥ ४० ॥
अप्रमाणैः प्रयाणैः स भृगुकच्छं समागमत् ।
संघः प्रभावनां चक्रे प्रवेशादिमहोत्सवैः ॥ ४१ ॥
बुद्धानन्दस्ततो बौद्धानन्दमद्भुतमाचरत् ।
श्वेताम्बरो मया वादे जिग्ये दर्पं वहन्नमुम् ॥ ४२ ॥
यस्योन्नमत्यपि भ्रूर्नावलेपभरभारिता ।
जगद्भ्रष्टं कृपापात्रं मन्यते स धरातलम् ॥ ४३ ॥
जैनर्षीनागतान् श्रुत्वा विशेषादुपसर्गकृत् ।
संघस्याथ महाकोशो विशां वृन्दैरवीवदत् ॥ ४४ ॥

---

१ Pऽन्यदा. २ P च. ३ J H स्यैव ४ P जित०. ५ J H आस
६ P गुरौ. ७ J H मथ०. ८ P काशो.

पूर्वजःश्वेतभिक्षूणां वादमुद्राजपोद्धुरः ।
स्याद्वादमुद्रया सम्यगजेयः परवादिभिः ॥ ४५ ॥
परं सोऽपि मयात्मीयसिद्धान्तैः प्रकटीकृतैः ।
कलितश्चुलुके कुम्भोद्भवेनेव पयोनिधिः ॥ ४६ ॥ युग्मम् ।
किं करिष्यति बालोसावनालोकितकोविदः ।
गेहे नदीसारमेय इवासारपराक्रमः ॥ ४७ ॥
काचित्तस्यापि चेच्छक्तिस्ततो भूपसभापुरः ।
स्वं दर्शयतु येनैणं वृकवद्ग्रासमानये ॥ ४८ ॥
मल्लाचार्य इति श्रुत्वा लीलया सिंहवत् स्थिरः ।
गम्भीरगीर्भरं प्राह ध्वस्तगर्वो द्विपन्नृणाम् ॥ ४९ ॥
जैनो मुनिः शमीकश्चिद्विवादावदातधीः ।
जिनो जित इति स्वेच्छा वादोऽयं किंघटापटुः ॥ ५० ॥
अथवास्तु मुधा चित्तावलेपं शल्यवद्दृढम् ।
अलमुद्धर्तुमेतस्य सज्जोऽस्मि विलसज्जयः ॥ ५१ ॥
सज्जनो मे सुहृद्वापि ज्ञास्ये स्थास्यसि चेत्पुरः ।
तिष्ठन् स्वकीयगेहान्तर्जनो भूपेपि कद्वदः ॥ ५२ ॥
प्रत्यक्षं प्राश्निकानां तन्मध्येभूपसभं भृशम् ।
अनूद्यतां यथा प्रज्ञाप्रामाण्यं लभ्यते ध्रुवम् ॥ ५३ ॥
इत्याकर्ण्य वचः स्मित्वा बुद्धानन्दोप्युवाच च ।
वावदूकः शिशुः प्रायः कस्तेन सह संगरः ॥ ५४ ॥
अस्तु वासौ निराकृत्य एव मे द्विषदन्वयी ।
शुणस्तोकमिवासाध्यः कालेनासौ हि दुर्जयः ॥ ५५ ॥
ततः क्रूरे मुहूर्ते च तौ वादिप्रतिवादिनौ ।
संसद्याजग्मतुः सभ्याः पूर्ववादं लघोर्ददुः ॥ ५६ ॥
मल्लाचार्यः स षण्मासीं यावत्प्राज्ञार्यमावदत् ।
नयचक्रमहाग्रन्थाभिप्रायेणात्रुटद्वचः ॥ ५७ ॥
नावधारयितुं शक्तः सौगतोऽसौ गतो गृहम् ।
मल्लेनाप्रतिमल्लेन जितमित्यभवन् गिरः ॥ ५८ ॥
मल्लाचार्ये दधौ पुष्पवृष्टिं श्रीशासनामरी ।
महोत्सवेन भूपालः स्वाश्रये तं न्यवेशयत् ॥ ५९ ॥

---

१ J H मूचा. २ P केलि. ३ J H जैनो ...श्वे .टांपद. ४ J H ०मेसुहृदापि ज्ञास्येस्थास्ये. ५ J H तिष्ठन् गेहातजेता भूयेधिकद्वयः. ६ P शिशुप्रायः. ७ J H ०दन्वयात्सकु० (?) ८ J H omit ऽसौगतो and नाप्रतिमल्ले

बुद्धानन्दपरीवारमपभ्राजनया ततः ।
राजा निर्वासयन्नत्र वारितोऽर्थनपूर्वकम् ॥ ६० ॥
बिरुदं तत्र वादीति ददौ भूपो मुनिप्रभोः ।
मल्लवादी ततो जातः सूरिर्भूरिकलानिधिः ॥ ६१ ॥
बुद्धानन्दो निरानन्दः शुचा निष्प्रतिभो भृशम् ।
रात्रौ प्रदीपमादाय प्रारेभे लिखितुं ततः ॥ ६२ ॥
तत्रापि विस्मृतिं याते पक्षहेतुकदम्बके ।
अनुत्तरो भयाल्लज्जावैशसात् स्फुटिते हृदि ॥ ६३ ॥
मृत्युं प्राप खटीहस्तो राज्ञा प्रातर्व्यलोकयत ।
मल्लेन च ततोशोचि वाद्यसौ हा दिवं गतः ॥ ६४ ॥
कस्य प्राणादसौ प्रज्ञां प्रगल्भां स्वां प्रबुद्धवान् ।
अवज्ञाता शिशुत्वान्नः स्वयमीदृक् च कातरः ॥ ६५ ॥
वलभ्याः श्रीजिनानन्दः प्रभुरानायितस्तदा ।
संघमभ्यर्थ्य पूज्यः स्वः सूरिणा मल्लवादिना ॥ ६६ ॥
माता दुर्लभदेवीति तुष्टा चारित्रधारिणी ।
बन्धुना गुरुणाभाणि त्वं स्थिता पुत्रिणीधुरि ॥ ६७ ॥
गुरुणा गच्छभारश्च योग्ये शिष्ये निवेशितः ।
मल्लवादिप्रभौ को हि स्वौचित्यं प्रविलङ्घयेत् ॥ ६८ ॥
नयचक्रमहाग्रन्थः शिष्याणां पुरतस्तदा ।
व्याख्यातः परवादीभकुम्भभेदनकेसरी ॥ ६९ ॥
श्रीपद्मचरितं नाम रामायणमुदाहरत् ।
चतुर्विंशतिरेतस्य सहस्रा ग्रन्थमानतः ॥ ७० ॥
तीर्थं प्रभाव्य वादीन्द्रान् शिष्यान्निष्पाद्य चामलान् ।
गुरुशिष्यौ गुरुप्रेमनिबन्धेनेयतुर्दिवम् ॥ ७१ ॥
बुद्धानन्दस्तदा मृत्वा विपक्षव्यंतरोजनि ।
जिनशासनविद्वेषि प्रान्तकालमतेरसौ ॥ ७२ ॥
तेन प्राग्वैरतस्तस्य ग्रन्थद्वयमधिष्ठितम् ।
विद्यते पुस्तकस्थं तत् वाचितुं स न यच्छति ॥ ७३ ॥
श्रीमल्लवादी प्रभवृत्तमेतन्मच्चेतनावल्लिनवाम्बुदाभम् ।
व्याख्यांतु शृण्वन्तु कविप्रधानाः प्रसन्नदृष्ट्या च विलोकयन्तु ७४

श्रीचन्द्रप्रभसूरिपट्टसरसीहंसप्रभः श्रीप्रभा-
चन्द्रः सूरिरनेन चेतसि कृते श्रीरामलक्ष्मीभुवा ।

---

१ P मुनिः. २ P षटी ३ J H विलोकिता. ४ J H प्रमाणा. ५ प्र-पाल्य त्वां. ६ J H सहस्र. ७ P विंतरो J H व्यंतदोरो.

श्रीपूर्वर्षिचरित्ररोहणगिरौ श्रीमल्लवाद्यद्भुतं
श्रीप्रद्युम्नमुनीन्दुना विशदितः शृङ्गो नवाग्रोऽभवत् ॥७५॥
इति मल्लवादिप्रबन्धः ॥ ग्रन्थ ७७ उभयम् ॥ २१२० ॥

---

श्रीवप्पभट्टिप्रबन्ध ।

वप्पभट्टिः[1] श्रिये श्रीमान्[2] यद्वृत्तगगनाङ्गणे ।
खेलति स्म गतायातैः[3] राजा सूरः[4] कविर्बुधः ॥ १ ॥
पीत्वा यद्गोरसं तृप्ता अप्यन्तः कवितर्णकाः ।
बिभ्राणाः शृंगितां विश्वगोपालैरपि दुर्दमाः ॥ २ ॥
तस्यैव चरितं किञ्चित्कीर्तयिष्ये यथाश्रुतम् ।
मत्प्रज्ञामुकुरीद्योति साधुशृंगारभूषणम् ॥ ३ ॥
अस्ति स्वस्तिनिधिः श्रीमान् देशो गुर्जरसंज्ञया ।
अनुत्सेकविवेकाढ्यलोकः शोकाचलस्तरुः[4] ॥ ४ ॥
यदेकांशप्रविच्छंदस्वरप्रमुकुरस्थितम् ।
गौरीशमुनिबाहुल्यात्तत्पुरं पाटलाभिधम् ॥ ५ ॥
जितशत्रुर्महीनाथः पाथःपतिगभीरिमा ।
तत्रास्ति नाशिताशेषबाह्यान्तररिपुव्रजः ॥ ६ ॥
चित्रशास्त्ररहस्यालिकन्दकन्दलनाम्बुदः ।
अश्लिष्टपरमब्रह्मामन्दपीयूषसागरः ॥ ७ ॥
मोढाख्याप्रौढगच्छश्रीविवोढामूढमूढतः ।
श्रीसिद्धसेन इत्यासीन्मुनीन्द्रस्तत्र विश्रुतः ॥ ८ ॥ युग्मम् ।
विश्वविद्यावदातश्रीर्मान्यः[5] क्षितिभृतामपि ।
मोढेरे श्रीमहावीरं प्रणंतुं सोऽन्यदाययौ ॥ ९ ॥
प्रणम्य विधिवत्तीर्थे पृथगाश्रयसंश्रितः ।
निशायां योगनिद्राभृद्ददर्शस्वप्नमीदृशम् ॥ १० ॥
उन्मीलल्लीलया नेत्रे यःकेसरिकिशोरकः ।
आरूढश्चैत्यशृङ्गाग्रमुत्फालं सत्वशालितः[6] ॥ ११ ॥
इति दृष्ट्वा जजागारानगारपतिरद्भुतम्[7] ।
प्रीतश्च श्रावयामास प्रातर्मुनिमतल्लिकाः ॥ १२ ॥
कल्याणानामुपादानं हेतुत्वं विनयस्य तैः ।
ख्यापयद्भिर्नतैः पृष्ट आख्यादर्थं च तत्पुरः ॥ १३ ॥

---

१ J H add नमः सर्वज्ञाय २ P श्रये J H. श्रियमान्. ३ J H खलतिस्म गतावैराजा० P भूरः. ४ P ०लस्वरः. ५ P मान्यः. ६ J H शालिनः. ७ P जजगारपतिरद्भुत.

शिष्ये(ष्यो ऽ)न्यवादिकुभीन्द्र कुम्भनिर्भेदनोद्यमः ।
भाग्यैः संघस्य कोऽप्यद्य समेष्यति महामतिः ॥ १४ ॥
भाविप्रभावसंसूचिस्वप्नानन्दाभिनन्दितैः ।
तैः समं सूरिरागच्छज्जैनालयमनालयः ॥ १५ ॥
त्रिः प्रदक्षिणयित्वा च यावन्नाथं विवन्दिषुः ।
तावत्षड्वार्षिको बाल एकस्तत्पुर आगमत् ॥ १६ ॥
कस्कः कौतस्कुतस्त्वं भो असौ पृष्टस्तदावदत् ।
पञ्चालदेश्यबप्याख्यपुत्रोऽहं भट्टिदेहभूः ॥ १७ ॥
सूरपालाख्यया शत्रून्निघ्नन् पित्रा निवारितः ।
अजानतेति वात्सल्यादहेतुर्विक्रमे वयः ॥ १८ ॥
एकोवामप्यनापृच्छ्यानुशयातिशयात्ततः ।
आगमं प्रभुपादान्ते प्रान्ते स्वस्नेहतः स्थितः ॥ १९ ॥
अस्यामानुष्यकं तेजो ध्यात्वेति गुरुभिस्ततः ।
किं त्वं नोंतेवतिष्ठासुरित्यजल्प्यत हर्षतः ॥ २० ॥
मद्भाग्यैः फलितं पूज्या इत्युक्त्वा सोऽप्यवस्थितः ।
अलिः किंनाम नोतिष्ठेद्विकाशिनि सरोरुहे ॥ २१ ॥
एकशः श्रुतमात्रेण विधारयति निश्चलम् ।
अनुष्टुभां सहस्रं तु प्रज्ञायां तस्य का कथा ॥ २२ ॥
जडदुस्तर्कसंक्लिष्टा देवी वागधिदैवतम् ।
दुर्बोधशास्त्रकृद्भेदि सुहृत्त्वं यस्य वाञ्छति ॥ २३ ॥
प्रेक्षाभियोगसंतुष्टाः प्रभवस्तस्य पैतृके ।
गत्वा डुंवातिथीग्रामे पितरौ प्रार्थयंत ते ॥ २४ ॥
स प्राह याचयामोऽहमेतदंचैकपुत्रकः ।
आशाधारोयमावाभ्यां कथं मोक्तुं हि शक्यते ॥ २५ ॥
निर्वन्धो यदि पूज्यानां तदा नावभिधां यदि ।
विश्रुतां बप्पभट्टीति कुरुध्वे तत्सुतोऽस्तु वः ॥ २६ ॥
ओमित्युक्ते जगत्पूज्यैः श्रद्धालुनिवहस्तयोः ।
आजन्मकसिपुं प्रादान्महदास्थाननिःफला ॥ २७ ॥
शताष्टके च वर्षाणां गते विक्रमकालतः ।
समाधिके राधशुक्लतृतीयादिवसे गुरौ ॥ २८ ॥
मोढेरे ते विहस्यामुंदीक्षित्वा नाम चादधुः ।

१ P शिष्योल्लादि ··· निर्भेद २ P निश्चला. ३ P शास्त्रदुद्भे ··· वाञ्छति । ४ P [illegible]. ५ P [illegible] [illegible]. ६ P तत्सुते०. ७ P सिपुन्प्रादा०. ८ P [illegible]

स्वाख्यात्रिकैकादशकाद्भद्रकीर्तिरिति(?) श्रुतम् ॥ २९ ॥
तत्पित्रोः प्रतिपन्नेन पूर्वाख्या तु प्रसिद्धिभूः ।
शिष्यमौलिमणेरस्य कलासंकेतवेश्मनः ॥ ३० ॥
संघश्च तद्गुणग्रामरामणीयकरंजितः ।
विदधेऽभ्यर्थनां तेषामत्रावस्थानहेतवे ॥ ३१ ॥
योग्यतातिशयं चास्य ज्ञात्वा सद्गुरवस्ततः ।
सारस्वतं महामन्त्रं तत्रस्थास्तस्य ते ददुः ॥ ३२ ॥
परावर्त्तयतस्तस्य निशीथे तं सरस्वती ।
स्वर्गङ्गास्रोतसि स्नात्यनावृतासीद्रहोभुवि ॥ ३३ ॥
तन्मन्त्रजापमाहात्म्यात्तद्रूपा सा समाययौ ।
ईषद्दृष्ट्वा च तां वक्त्रं परावर्त्तयति स्म सः ॥ ३४ ॥
स्वं रूपं विस्मरन्ती च प्राह वत्स कथं मुखम् ।
विवर्त्तसे भवन्मंत्रजापात्तुष्टाहमागता ॥ ३५ ॥
वरं वृणिष्वेति तत्प्रोक्तो बप्पभट्टिरुवाच च ।
मातर्विसदृशं रूपं कथं वीक्षे तवेदृशम् ॥ ३६ ॥
स्वां तनुं पश्य निर्वस्त्रामित्युक्ते स्वं ददर्श सा ।
अहो निबिडमेतस्य ब्रह्मव्रतमिति स्फुटम् ॥ ३७ ॥
उच्चैश्च मंत्रमाहात्म्यं येनाहं गतचेतना ।
ध्यायन्ती दृढतोषेण त्वत्पुरः समुपस्थिता ॥ ३८ ॥
वरेपि निस्पृहे त्वत्र दृढं चित्रातिरेकतः ।
गत्यागत्योर्ममा(?) स्वेच्छा त्वदीया निर्वृतो भव ॥ ३९ ॥
अन्यदा तत्र संस्थानां भद्रकीर्त्तिर्बहिर्गतः ।
वृष्टौ देवकुलं श्रुत्वा तस्थौ स स्थैर्यसुस्थितः ॥ ४० ॥
तत्रस्थस्य पुमानेको नाकिपाकविडंबकः ।
समगंस्त प्रशस्तश्रीर्वृष्टिव्याकुलितस्तदा ॥ ४१ ॥
श्यामाश्मोकीर्णवर्णौघासहारहृद्दिवांगना(?)
स्वस्तिप्रशस्तिरत्रास्ति विहस्तितजडस्थितिः ॥ ४२ ॥
काव्यानि वाचयामास महार्थानि सुधीरसौ ।
सख्याद्व्याख्यापयामास प्रत्यगाद्वप्पभट्टितः ॥ ४३ ॥
तदाख्यारंजितस्वान्तः शान्ते वर्षेतिहर्षतः ।
ययौ सहैव वसतौ वसतौ तत्र च स्थितः ॥ ४४ ॥

---

१ P स्वाख्यत्रिकैकादशकाद्भद्र०. २ J H प्रसिद्धम्. ३ J H तद्गु: ४ P परावा० ५ P ०हेलत्र दृढ चित्राति० ६ J H दृष्टौ. ७ P ०त्कार्ण वर्णौघा दूदिवांगना. ८ P प्रत्यग्र०

ततो गुरुभिराशीर्भिरानंद्य समपृच्छयत ।
आमुष्यायणतां स्वस्याचख्यौ व्रीडावशाननः ॥ ४५ ॥
वर्यमौर्यमहागोत्रसंभूतस्य महाद्युतेः ।
श्रीचन्द्रगुप्तभूपालवंशमुक्तामणिश्रियः ॥ ४६ ॥
कान्यकुब्जयशोवर्म्मभूपतेः सुयशोंगभूः ।
पित्रा शिक्षावशात् किंचिदुक्तः कोपादिहागमम् ॥ ४७ ॥
अलेखीदामनामस्वं क्षितौ खटिकया ततः ।
स्वनामाग्रहणेनास्य विवेकात्ते चमत्कृताः ॥ ४८ ॥
व्यमृशन् सूरयस्तत्र नखछोटनपूर्वकम् ।
पूर्वं श्रीरामसैन्येऽसौ दृष्टः षाण्मासिकः किल ॥ ४९ ॥
पीलुवृक्षमहाजाल्यां वस्त्रांदोलकसंस्थितः ।
अचलच्छाययास्माभिर्विज्ञातः पुण्यपूरुषः ॥ ५० ॥
ततस्तज्जननी वन्यफलवर्गं विचिन्वती ।
अस्माभिर्गदिता वत्से का त्वं किंवा भवत्कुलम् ॥ ५१ ॥
कथमीदृगवस्था च सर्वमाख्याहि नः पुरः ।
विश्वस्ता यद्वयं त्यक्तसंगा मुक्तपरिग्रहाः ॥ ५२ ॥
सावादीत्तातपादानां किमकथ्यं ततः प्रभोः ।
श्रीकन्यकुब्जभूपालयशोवर्मकुटुंबिनी ॥ ५३ ॥
अहं सुतेत्र गर्भस्थे सपत्न्या मत्सरोदयात् ।
पुरा लब्धवरं प्रार्थ्य नृपान्निर्वासितास्म्यहम् ॥ ५४ ॥
ततोऽनुशयतो हित्वा पितृश्वशुरमन्दिरे ।
स्थाने व आगमं वन्यवृत्त्या वर्त्ते प्रभोधुना ॥ ५५ ॥
श्रुत्वेति सांत्वितास्माभिश्चैत्यशुश्रूषया स्थिरा ।
तिष्ठ बालं प्रवर्द्धस्व जनकस्येव वेश्मनि ॥ ५६ ॥
तत्सपत्नी च केनापि कालेन व्यनशत्क्षयम् ।
सा च राज्ञा चरैः शोधयित्वा पश्चादनायिता ॥ ५७ ॥
प्राच्यासंख्यगुणेनाथ मानेन बहुमानिता ।
वयं चात्र ततो देशाद्भ्रमावस्यां विजह्मि ॥ ५८ ॥
इति श्रुतः स्ववृत्तान्तस्तद्देश्यपुरुषप्रजात् ।
अनेन सांप्रतं भाव्यं तत्पुत्रेणैव धीमता ॥ ५९ ॥
यदाकृतिः शरीरस्य लक्षणानीदृशानि च ।
नर्त्ते नृपसुतं पूज्या इति ध्यात्वाभ्यधुस्ततः ॥ ६० ॥

---

१ P ममूलनपूर्वकम्. २ P आल्यावस्त्रा०. ३ P कुला. ४ P दनीयत.
५. ध्व ''देश जात.

तत्रास्व वत्स निश्चिन्तो निजेन सुहृदा समम् ।
शीघ्रं गृहाण शास्त्राणि संगृहाणामलाः कलाः ॥ ६१ ॥
ताश्चेमाः–पठितं १ लिखितं २ सं(म्यग्भ)णितं ३ गीत ४ नर्त्तने ५ ।
वाद्यं ६ व्याकरणं ७ छन्दो ८ ज्योतिषं ९ शिक्षया १० सह ॥६२॥
निरुक्तं च ११ तथा कात्यायनं १२ च सनिघंटकम् १३- ।
पत्रच्छेद्यं १४ नखच्छेद्यं १५ सह रत्नपरीक्षया १६- ॥ ६३ ॥
आयुधाभ्यासयोगश्च १७ गजारोहणमेव च १८ ।
तुरगारोहणं १९ शिक्षा २० तयोः २१ प्रत्येकमद्भुता ॥ ६४ ॥
मन्त्रवादो २२ रसवादः २३ खन्यवादस्तथैव च २४- ।
रसायनं च २५ विज्ञानवादो २६ मतिविबोधकः ॥ ६५ ॥
तर्कवाद २७श्च सिद्धान्तो २९ विषनिग्रह २८ गारुडे ३० ।
शाकुने वैद्यकं ३१ चैवाचार्यविद्या ३२ तथागमः ३३ ॥ ६६ ॥
प्रासादलक्षणं चैव ३५ सामुद्रिक ३६ मथ स्मृतिः ३७- ।
पुराण ३८ मितिहासश्च ३९ तथा वेदविधिर्वरः ४०- ॥ ६७ ॥
विद्यानुवाद ४१ दर्शनसंस्कारो ४२ खेचरी कला ४३ ।
अमरीकरणं चे- ४४ न्द्रजालं ४५ पातालसिद्धिभृत् ४६ ॥ ६८ ॥
धूर्तानां शंबलं ४७ गंधयुक्ति ४८ र्वृक्षश्चिकित्सया ४९ ।
कृत्रिममणिकर्माणि ५० सर्ववस्तुकृतिस्तथा ५१ ॥ ६९ ॥
वंशकर्म ५२ पुष्पकर्म ५३ विन्न(चित्र?)कर्म ५४ कलाद्भुतं ।
काष्ठ ५५ पाषाणयोः कर्म ५६ लेपकर्म ५७ तथापि च ५८ ॥७०॥
चर्मकर्म ५९ यंत्रकर्म ६० तथा रसवतीविधिः ६१ ।
काव्या ६२ लंकार ६३ हसित ६४ संस्कृतप्राकृतौ तथा ६५ ॥७१॥
पैशाचिक ६६ मपभ्रंशः ६७ कपटं ६८ देशभाषया ६९ ।
धातुकर्म ७० प्रयोगाणामुपायाः ७१ केवलीविधिः ७२ ॥ ७२ ॥
एवंविधकलानां च द्वासप्ततिमधीतवान् ।
अनन्यसदृशः कोविदानां पर्षदि सोभवत् ॥ ७३ ॥
तथा चाभ्यस्यतस्तस्य प्रज्ञादर्पणबिंबितः ।
ययौ लक्षणतर्कादिशास्त्रव्रातं स्ववश्यताम् ॥ ७४ ॥
सब्रह्मचारितासख्याद्राजपुत्रः प्रपन्नवान् ।
बप्पभट्टे प्रदास्यामि प्राप्तं राज्यं तव ध्रुवम् ॥ ७५ ॥
कालेन केनचित्तस्याभंकिना जनकेन च ।
प्रधानाः प्रेषिताः पट्टाभिषेककृतिहेतवः ॥ ७६ ॥

---

१ P सत्यम्भणितं. २ J H. omit ५२ पुष्प······कर्मा. ३ J H चति. ४ P ताः.

कृच्छ्रादापृच्छ्य तं प्राप्तपुरं राज्येभिषिच्यताम् ।
पित्रा स स्वर्गतेरस्य कृतवानौर्ध्वदेहिकम् ॥ ७७ ॥
लक्षद्वितयमश्वानां चतुर्दशशतानि च ।
रथानां हस्तिनां पत्तिकोटीराद्यमशाश्रयत् ॥ ७८ ॥
स्वकीयसुहृदः प्रैषीदाह्वानाय नरानथ ।
आमनामा नृपः श्रीमानतिमानवविक्रमः ॥ ७९ ॥
तेषां चात्यादरात्संघानुमत्या गुरवस्ततः ।
प्राहिण्वन् बप्पभट्टिं तं गीतार्थैः परिवारितम् ॥ ८० ॥
तीर्थप्रभावनोन्नत्यै शनैः संयमयात्रया ।
जगामाध्यामभिपुरमामहीशितुः (?) ॥ ८१ ॥
तदागमलसद्वर्णाकर्णनादर्णवो यथा ।
द्विजराजसमुद्योतादुद्वेलः स तदाभवत् ॥ ८२ ॥
भूपः समग्रसामग्र्या संमुखीनस्ततोगमत् ।
कुंजरारोहणे विद्वान् कुंजरस्यार्थनां व्यधात् ॥ ८३ ॥
बप्पभट्टिरुवाचाथ भूपं शमवतां पतिः ।
सर्वसंगमुचां नोत्र प्रतिज्ञा हीयतेतमाम् ॥ ८४ ॥
राजोचे वः पुरा पूर्वं यन्मया प्रतिशुश्रुवे ।
राज्यमाप्तं प्रदास्यामि तल्लक्ष्मवरवारणः ॥ ८५ ॥
काममेवामुमाधत्त चेद्यूयं तन्मम प्रभोः ।
उक्तवेशोऽर्चिदानेनासुखं कर्तुं न साम्प्रतम् ॥ ८६ ॥
इत्यारोप्य बलात्पट्टकुञ्जरे धरणीधरः ।
जितक्रोधाद्यभिज्ञानधूतच्छत्रचतुष्टयम् ॥ ८७ ॥
विश्वस्य दर्शयंतं सच्चामरैर्वीजितुं प्रभुम् ।
प्रावेशयत् शमिश्रेणीश्वरमत्युत्सवात्पुरम् ॥ ८८ ॥ युग्मम् ।
राज्यचिह्नमिदं धुर्यमिति सिंहासनासनम् ।
धौतांतरमनुच्चाहं (?) भूपं मुनिरथावदत् ॥ ८९ ॥
जाते सूरिपदेस्माकं कल्यं सिंहासनासनम् ।
इति तस्य वचः श्रुत्वाखिन्नोन्यांसन्य (?) वीविशत् ॥ ९० ॥
दिनानि कतिचित्तत्रावस्थाप्य गुरुसन्निधौ ।
प्राजीहयत्प्रधानाद्यैः समं मुनिपतिं नृपः ॥ ९१ ॥
मोढेरकस्थितिं श्रीमत्सिद्धसेनमुनीश्वरम् ।
प्रणस्य प्रह्वाणीभिरथ्यच्यक्षपयन्नमी ॥ ९२ ॥

---

१ P °ल प्राप्तपुर रज्यैभिषिच्यत. २ P °रितर. ३ P °ध्यामभामभिपु-रमाममहीशितुः ॥ ४ P पोद्व तु. ५ P रक्ष्मवरवारण: । ६ P महार्मदा°. ७ P सिपैान्य सन्य°. ८ P प्रणेम्द.

चकोरवद्चन्द्रेऽभ्रे मराल इव पल्वले ।
वने मृगवदेकाकी स्तोकाम्भसि च मीनवत् ॥ ९३ ॥
मयूर इव घर्मार्त्तो वर्षासु जलधिर्यथा ।
संग्रामे कातरो यद्वद्विद्वान् वैधेयमण्डले ॥ ९४ ॥
चन्द्रवत्कृष्णपक्षान्ते क्षीयते विरहातुरः ।
स्वामिनः प्रत्यहं पूज्या अनेन सुहृदा विना ॥ ९५ ॥

त्रिभिर्विशेषकम् ।

आचार्यत्वे प्रतिष्ठाप्य निष्ठाधिष्ठानदैवतम् ।
अमुं प्रेषयतास्माभिः सह नः स्वामिनो मुदे ॥ ९६ ॥
अस्योपदेशतो जैनमन्दिरप्रतिमादिभिः ।
निर्मितैः सुकृतै राजा भवाब्धिं लंघयेद्यथा ॥ ९७ ॥
श्रुत्वेति तत्पुरोवोचद्वाचंयमपतिस्तदा ।
चारित्राचारधौरेयः सुधामधुरया गिरा ॥ ९८ ॥
रत्नदीपो यथागारे वाह्यान्तरतमोपहः ।
तेजस्वी निश्चलस्थेमा तथा बालर्षिरेष नः ॥ ९९ ॥
भानुनाम्भोरुहं यद्वत् शशिनेव विभावरी ।
शिखंडीव पयोदेन मन्त्री मुद्रां विना यथा ॥ १०० ॥
स्तम्भेनेवोज्झितं गेहं देहं च प्राणधारिणा ।
म्लायत्येव मनोवृत्तिस्तथास्माकममुं विना ॥ १०१ ॥ युग्मम् ।
इत्याकर्ण्य प्रभोर्वाचं प्राहुः कृतधियोथ ते ।
सन्तः परोपकारार्थं नात्मार्तिं गणयन्ति यत् ॥ १०२ ॥
तरवस्तरणेस्तापं सचाभ्रोल्लंघनक्रमम् ।
पाथोधिर्नौश्रमं सोढा वोढा कूर्मः क्षितेर्धुरः ॥ १०३ ॥
वारिदो वर्षपक्लेशं क्षितिर्विश्वभरक्रमम् ।
उपकाराद्दतेमीषां न फलं किंचिदीक्ष्यते ॥ १०४ ॥ युग्मम् ।
ततः प्रसादप्रावीण्यात् प्रेषयध्वं कृतीश्वरम् ।
एवं कृत्वा प्रभुत्वेऽस्मान्स्वामिवाधागिरेः पतिम् ॥ १०५ ॥
तेषां निर्वन्धसंवन्धादित्यभ्युपगते गुरुः ।
श्रीमंतं संघमाहूय तत्प्रतिष्ठार्थमादिशत् ॥ १०६ ॥
अथोत्सवेच्छुभिः स्वस्थैः श्रावकैर्गच्छवत्सलैः ।
सद्यः समग्रसामग्र्यां विहितायां जिनालये ॥ १०७ ॥
लग्नेऽथ सौम्यपड्वर्गाधिष्ठिते परमाक्षरा ।

---

१ J H °रः. २ J H निश्चलास्तेमा. ३ P तच्चमूर्णोम्नापसनाभ्रो°.
४ P पाशोधि J H पयोधि° ५ J H °पेक्षेत्रा ६ P प्रानीधोऽत्रे°
७ P स्मन्...पर्वि.

सप्तग्रहबलोपेते श्रुतोक्तविधिपूर्वकम् ॥ १०८ ॥
शिष्यस्य विश्वशिष्यस्य कर्णे चंदनचर्चिते ।
गर्जत्सु तूर्यसंघातेष्वर्हत्तत्वं न्यवीविशत् ॥ १०९ ॥
त्रिभिर्विशेषकम् ।

बप्पभट्टिस्ततः श्रीमानाचार्यः कोविदार्यमा ।
दुर्वादिसिंहशरभोऽभवद्विश्वस्य विश्रुतः ॥ ११० ॥
अथानुशिष्टो विधिवद्गुरुभिर्ब्रह्मरक्षणे ।
तारुण्यं राजपूजा च वत्सानर्थद्वयं ह्यदः ॥ १११ ॥
आत्मरक्षा तथा कार्या यथा न च्छल्यते भवान् ।
वामकामपिशाचेन यत्नं तत्र पुनःपुनः ॥ ११२ ॥
भक्तं भक्तस्य लोकस्य विकृतीश्चाखिला अपि ।
आजन्मनैव भोक्ष्येहममुं नियममग्रहीत् ॥ ११३ ॥
तंगत्तूर्यध्वनिः श्रद्धां गतां सङ्गीतमङ्गलः ।
गौरवाभ्यर्थिनः संघेनार्थप्रायादुपाश्रये ॥ ११४ ॥
एकादशाधिके तत्र जाते वर्षशताष्टके ।
विक्रमात्सोऽभवत्सूरिः कृष्णचैत्राष्टमीदिने ॥ ११५ ॥
श्रीमदाममहाभूपश्रेष्ठामात्योपरोधतः ।
अनिच्छतोपि संघस्य प्रैषीत्तैः सह तं गुरुः ॥ ११६ ॥
प्रयाणैः प्रवणैः प्राप कन्यकुब्जपुरन्ततः ।
प्रांसुके बहिरुद्देशेऽवतस्थे सवनाश्रिते ॥ ११७ ॥
उद्यानपालविज्ञप्ते परिज्ञाय समागतम् ।
मुनीशमवनीशोभूद्बद्धरोमांचकंचुकः ॥ ११८ ॥
ततः प्रत्यापणं हट्टशोभाशोभितरथ्यकम् ।
प्रतिगेहं प्रतिद्वारं बद्धवन्दनमालिकम् ॥ ११९ ॥
उद्यद्धूपघटीधूमस्तोमैः कृष्णाभ्रविभ्रमम् ।
कुर्वाणमहितोल्लोचैरेकच्छायं महीतलम् ॥ १२० ॥
काश्मीरजद्रवैः सिक्तधरं काश्मीरभूमिवत् ।
नगरं नगभिद्रंगतुल्यं भूपतिरातनोत् ॥ १२१ ॥ त्रिभिर्विशेषकम् ।
प्रैरूढप्रौढसौहार्दवसुधाधीशसंस्तुतः ।
पुरं पौरपुरंध्रीभिराकुलाट्टालकं ततः ॥ १२२ ॥
प्रविवेश विशामीश इव सच्छत्रचामरः ।
अभ्रंलिहद्विपारूढो विवोढोपशमश्रियः ॥ १२३ ॥ युग्मम् ।

१ P omits लोकस्य. २ P भोक्ते० मग्रहात्. ३ P तग० श्राद्धांगना० ४ P ०नागवप्राया० ५ P प्राशु J. प्राशुके. ६ P गमाहितोल्लोवैरेकथ्ययमहीतल. ७ J H प्ररौढ. ८ J H omit विवोल्ये.

सौधे राजा ततः सिंहासने गद्दिकयास्तृते ।
उपावेशयदानंदात् सुहृदं मुनिनायकम् ॥ १२४ ॥
प्रांशुप्रभावनोद्भूतरंगः संघः प्रभोरथ ।
परिचर्यां परां चक्रे वक्रेतरमनाः सदा ॥ १२५ ॥
शश्वद्राजसभावाप्तावपिनिर्धूतकल्मषः ।
बप्पभट्टिप्रभुः श्रीमान् भूपाग्रे सुकृतं जगौ ॥ १२६ ॥
कल्याणपादपारामजलवाहजलप्लवः ।
धर्म एव निराधाराधारं[1] परपदप्रदः ॥ १२७ ॥
तस्यादौ प्रथितं दानं तच्च क्षेत्रेषु सप्तसु ।
तेषु च प्रथमं विद्धि सिद्धिकृज्जिनमंदिरम्[2] ॥ १२८ ॥
अपरं बिंबनिर्माणमथ सिद्धान्तलेखनम् ।
चतुर्वर्णस्य संघस्याभ्यर्चैतानि किल क्रमात् ॥ १२९ ॥
तदन्तरा च सर्वेषामाधारोजैनमन्दिरम् ।
जिनाः श्रुतधरा यत्र स्थिताः संघप्रबोधकाः ॥ १३० ॥
श्रीमतां सति सामर्थ्ये विधेयं विधिवच्च तत् ।
बहवो यत्प्रभावेन भव्याः सद्गतिमाप्नुयुः ॥ १३१ ॥
इतितद्वाक्यमाकर्ण्य प्रकर्णानां शिरोमणिः ।
अवोचदामभूपालः प्रालेयांशुस्फुरद्यशाः ॥ १३२ ॥
पृथ्वीदेशः पुरं हर्म्यं तिथिर्मासक्रतुः समाः ।
धन्यान्येतानि भाष्यन्ते यानि त्वद्देशनांशुभिः ॥ १३३ ॥
ईत्युक्त्वादाद्दादेशं[3] भूमिलक्षणवेदिनाम् ।
कोशकर्मनराध्यक्षपुंसां[4] च श्रीजिनौकसे ॥ १३४ ॥ युग्मम् ।
विश्वकर्मविदस्तत्र विश्वकर्मसुकर्मठाः ।
प्रारेभिरे महाभूत्या प्रासादं सुकृतोत्सवैः ॥ १३५ ॥
दिनैः कतिपयैः सैकशतहस्तोन्नतस्थितिः ।
प्रासादः परिनिष्पेदे सर्वलोकमुदा समम् ॥ १३६ ॥
पूर्णवर्णसुवर्णाष्टादशभारप्रमाणभूः ।
श्रीमतो वर्द्धमानस्य प्रभोरप्रतिमानभूः ॥ १३७ ॥
निरमाप्यत संप्राप्यागण्यपुण्यभरैर्जनैः ।
धार्मिकाणां संचरन्ती प्रतिमा प्रतिमानसम् ॥ १३८ ॥ युग्मम् ।
श्रीबप्पभट्टिरेतस्या निर्ममे निर्ममेश्वरः ।
प्रतिष्ठां सुप्रतिष्ठासुः परमं पदमात्मनः ॥ १३९ ॥

---

१ P धर्म्मपवनिराध्वाराधारं (?) २ P तेषु च प्रथमंविहि सिद्धि श्रु० ३ J H गा. ४ P पुमांवश्री जिनौकसो.

तथा गोपगिरौ लेप्यमयबिम्बयुतं नृपः ।
श्रीवीरमन्दिरं तत्र त्रयोविंशतिहस्तकम् ॥ १४० ॥
सपादलक्षसौवर्णटङ्कनिष्पन्नमण्डपम् ।
व्यधापयन्निजं राज्यमिव सन्मत्तवारणम् ॥ १४१ ॥ युग्मम् ।
एवमभ्यर्हितो राज्ञा गच्छन् सच्छत्रचामरः ।
राजकुञ्जरमारूढो मुख्यसिंहासनासनः ॥ १४२ ॥
मिथ्यात्वश्यामलाभोगान् लोकान्मत्सरपूरितान् ।
बप्पभट्टिप्रभुश्चक्रे वक्रेतरनरस्तुतः ॥ १४३ ॥ युग्मम् ।
राजाप्रद्विजजातीनां संसर्गादनुवर्त्तकः ।
अन्यदान्यमहीपालासनमाधत्त सूरये ॥ १४४ ॥
ततस्तदाशयं ज्ञात्वा विगताकारवैकृतः ।
जगाद प्रतिबोधाय तस्यागाधैकसत्वभृत् ॥ १४५ ॥
कृतप्राकृतसत्वानां मदादीनां जनद्विषाम् ।
दम्भस्तम्भादियुक्तानां कथं लक्ष्या भवादृशाः ॥१४६॥

तत.—यदुक्त—

मर्दय मानमतंगजदर्पं विनयशरीरविनाशनसर्पम् ।
क्षीणो दर्पाद्दशवदनोऽपि यस्य न तुल्यो भुवने कोऽपि॥१४७॥
इत्याकर्ण्य गिरं धीरां बुद्ध्वा सूरिं व्यजिज्ञपत् ।
प्रभो त्वद्वाक्यमन्त्रैर्मेऽवलेपगरलं हृतम् ॥ १४८ ॥
प्रभवः प्रभवः क्षेत्रे मम धान्यं हि सौहृदम् ।
स्वादुतामत्र संपन्नभक्तपाकादिसंस्कृतम् ॥ १४९ ॥
अन्तःपुरेऽन्यदा म्लानवक्त्रभां वल्लभां तदा ।
राजा दृष्ट्वाह गाथार्धं स्वेच्छयेति प्रभोः पुरः ॥ १५० ॥

तद्यथा—

अज्जवि सा परितप्पइ कमलमुहि अत्तणोपमाएण ।
सारसारस्वतोद्धारसिद्धयाथ गुरुर्गिरा ॥ १५१ ॥
गाथोत्तरार्धमाचख्यौ सख्यौ स्नेहं वहन्नृतम् ।
सुतविउद्धेणतरा जीसे पच्छाइयं अंगम् ॥ १५२ ॥
इत्थ्रेदिवचसा तुष्टः प्रशंसन् कविकर्म तत् ।
तस्थौ किञ्चिदिव भ्रान्तः पुनरभ्रान्तलोचनः ॥ १५३ ॥
नृपो निरुपमप्रेमनिधिः शमभृता सह ।
अन्यदा ददृशे देवीं संचरन्तीं पदे पदे ॥ १५४ ॥
व्यथ्यमानामिव क्वापि मुखभंगविकारिणीम् ।
कृपापरिष्कृतस्वांत इव गाथार्धमब्रवीत् ॥ १५५ ॥

---

१ J H स्य गाधैक०

तद्यथा—

वाला चंकमती पंप कीस कुणइं मुहभंगम्।
नतः सत्यवचोवीचिविंधुरं प्रावदत्प्रभुः ॥ १५६ ॥
असूनृतं न जल्पेत कल्पांतेपि हि सिद्धवाक्।
नूनं रमणंपरासे मेहलयाविवइनहपंति ॥ १५७ ॥
श्रुत्वेति भूपतिः किंचित्सभ्रान्तो विकृतं मुखम्।
चक्रे हिमोर्मिसंक्लिष्टसरोरुहमिवाद्युति ॥ १५८ ॥
इत्यालोक्य समुत्थाय प्रतिश्रयगतो मुनीन्।
विहारहेतुं संवाद्य स्नेहमोहापराजितः ॥ १५९ ॥
काव्यमेतद्विलिख्याथ बहिर्द्वारकपाटयोः।
श्रीसंघमप्यनापृच्छ्य निरगान्नगराद्बहिः ॥ १६० ॥ युग्म।

तद्यथा—

यामः स्वस्ति तवास्तु रोहणगिरेर्मत्तः स्थितिः प्रच्युता
वर्तिष्यन्त इमे कथं कथमिति स्वप्नेपि मैवं कृथाः।
श्रीमंस्ते मणयो वयं यदि भवल्लब्धप्रतिष्ठास्तदा
ते शृंगारपरायणाः क्षितिभुजो मौलौ करिष्यंति नः॥१६१॥
दिनैः कतिपयैर्गौडदेशान्तर्विहरन्गुरुः।
श्रीलक्षणावतीपुर्याः प्रापारामावनीतलम् ॥ १६२ ॥
तत्र वाक्पतिराजोस्ति श्रीधर्मक्ष्मापपर्षदि।
विंदुषां मौलिमाणिक्यं प्रवंधकविरुत्तरः ॥ १६३ ॥
प्रभोरागमनं ज्ञात्वा जलदस्येव चंद्रिका।
तदागमनगीर्भिः स भूपालं पर्यतोषयत् ॥ १६४ ॥
वशे वाग्देवता यस्य कविर्मे प्राच्यसंस्तुतः।
स इहागात्प्रभोः पुण्यैर्बप्पभट्टिर्मुनीश्वरः ॥ १६५ ॥
ध्रुवं यत्र समभ्येति कृतपुण्यः सवासरः।
ज्योत्स्नाप्रिय इवैणांकोदयादेष विशांपतिः ॥ १६६ ॥
अजल्पद्दुक्कुपद्रोमा विद्वन्मंडलमंडनम्।
विश्वकोविदकोटीरमेष जैनमुनीश्वरः ॥
ध्रुवं यत्र समभ्येति कृतपुण्यः स वासरः ॥ १६७ ॥ युग्मम्।
परं मेऽस्त्यामराजेन दुर्ग्रहो विग्रहाग्रहः।
तदाह्वानाद्यदा पश्चाद्याति तन्मे तिरस्कृतिः ॥ १६८ ॥
प्रपन्यस्तन्मुनिस्वामी सचेदागत्य मां नृपः।

---

१ P वालाचंकमतीपएपएकीसकुणइमुहु॰ २ P. रमणएसेमे॰ ३ P विदुषो. ४ P. प्रद्योन्ना.

साक्षादापृच्छ्य ते प्रस्थातव्यं तन्नान्यथा त्वया ॥ १६९ ॥
सुधीभिः कथितेऽर्थेऽस्मिन् सूरिणांगीकृते सति ।
तज्ज्ञात्वा धर्मभूपालः परमानंदमाप्तवान् ॥ १७० ॥
आमराजप्रवेशाच्च सहस्रगुणितं ततः ।
प्रवेशोत्सवमाधत्तपुर्यामाचार्यभूपतेः ॥ १७१ ॥
धर्मभूपे तदा साक्षादिव धर्मे पुरःस्थिते ।
चक्रवर्ती सुधीवृंदे प्रोचे वृत्तमिदं तदा ॥ १७२ ॥
रुचिरचरणारक्ताः सक्ताः सदैव हि सद्गतौ
परमकवयः काम्याः सौम्या वयं धवलच्छदः ।
गुणपरिचयोद्धर्षाः सम्यग्गुणातिशयस्पृशः
क्षितिप भवतोऽभ्यर्णं तूर्णं सुमानससंमिताः ॥ १७३ ॥
तत्रापि काव्यवक्तृत्वलीलानंदितपर्षदः ।
अवतस्थे सुखं सूरिर्दोगुंदग ? इवामरः ॥ १७४ ॥
ततश्चामनृपः प्रातरनायाते प्रभौ तदा ।
नगरांतर्बहिर्ग्रामाकरादिष्वगवेषयत् ॥ १७५ ॥
अप्राप्तौ बालमित्रस्य पारवश्यं गतः शुचः ।
वैलक्ष्यमक्षतं भेजे च्यवनोन्मुखनाकिवत् ॥ १७६ ॥
अन्येद्युर्बहिरारामे गच्छन्नेकं ददर्श सः ।
बभ्रुं बभ्रुभुजंगेन हतं चित्रीयितस्ततः ॥ १७७ ॥
अस्य मौलौ मणिं तत्रालुलोके सम्यगीक्षया ।
संस्तभ्य तुंडमाधत्त फणीन्द्रमपभीर्नृपः ॥ १७८ ॥
तमाच्छाद्याथ संवृत्या संगृह्य निलये नृपः ।
आगत्य श्लोकशकलं जजल्प विदुषां पुरः ॥ १७९ ॥
शस्त्रं शास्त्रं कृषिर्विद्या अन्यो यो येन जीवति ।
तैः पूरिता समस्येयमभिप्रायैर्निजैर्निजैः ॥ १८० ॥
बिभेद हृदयं नैव तेषामेकोऽपि भूपतिः ।
सस्मार भारतीपुत्रं बप्पभट्टिं तदाद्दतम् ॥ १८१ ॥
मालतीकुसुमामोदमसौ रोलंबबालवत् ।
खद्योता इव चन्द्रस्य बालेया इव दंतिनः ॥
मम मित्रस्य विद्वांसः कलां नार्हंति षोडशीम् ॥ १८२ ॥
टंकलक्षं ददे हेम्नस्तस्य यः किल पूरयेत् ।
समस्यां मदभिप्रायात्प्रादात्पटहमीदृशम् ॥ १८३ ॥
अथो दुरोदराजीव एकः सर्वस्वनाशतः ।
श्रुत्वेति स धनोपायममुं श्लोकार्धमाददे ॥ १८४ ॥

---

१ P वैलक्षमचत । मतोन्यवन्मो०? २ P हृदम्.

ज्ञात्वा कुतोपि गौडेषु पुर्यंत आगमच्च सः ।
वप्पभट्टिं प्रभुं नत्वा कथयामास तत्पुरः ॥ १८५ ॥
अपराद्धं स चाहस्म क्लेशलेशं विना यतः ।
सरस्वतीप्रसादो हि विश्वक्लेशाब्धिकुंभभूः ॥ १८६ ॥

तच्च—

सुगृहीतं हि कर्तव्यं कृष्णसर्पमुखं यथा ॥ १८७ ॥

नागावलोक इत्याख्यां राज्ञे तत्र प्रभुर्ददौ ॥
ततः प्रभृत्यनेनापि नाम्ना विख्यातिमाप सः ॥ १८८ ॥
स द्यूतकृत्तदादायागमद्रामनृपाग्रतः ।
मुदा निवेदयामास तच्चमत्कारकारणम् ॥ १८९ ॥
केनापूरीति राज्ञा च पृष्टः प्रोवाच स प्रभो ।
श्रीवप्पभट्टिनेत्युक्ते ददौ तस्योचितं नृपः ॥ १९० ॥
विरहस्य विनोदायान्येद्युर्भूपो बहिर्ययौ ॥
मृतं न्यग्रोधवृक्षस्य तले पांथं ददर्श सः ॥ १९१ ॥
शाखायां लंबमानां च तथा करकपत्रिकाम् ।
श्चोत्तंतीं विप्रुषां व्यूहं गाथार्धं लिखितं तथा ॥ १९२ ॥

तच्च—

तइया महनिग्गमणे पियाइ थोरं सुपहिजं रुन्नम् ।
प्राग्वत्तदपि नापूरि भूपालस्य मनोहरम् ।
केनापि विदुषा कोऽर्कं विना विश्वप्रकाशकः ॥ १९३ ॥
अस्यामलक्ष्यलक्ष्यायां समस्यायां स देवनी ।
पुनर्ययौ च श्रीवप्पभट्टिपार्श्वेऽवदच्च ताम् ॥ १९४ ॥
स चानायासतो विद्वन्मौलिप्रस्फुरपूरयत् ।
गृहीत्वा स पुनः प्रायादुत्तरार्धं नृपाग्रतः ॥ १९५ ॥

तच्च—

करवत्तिविंदुनिवडुणं गिहेणं[1] तं अज्ज संभरिअं ॥ १९६ ॥
अन्येन विदुषा केनचिद्ब्यन्येन तत्र तत् ।
सर्वं दृष्ट्वा दोधकार्धमभाण्यत यथामति ॥ १९७ ॥

तथाहि—

करवत्तय जल विंदुआ पंथिय हियइ निरुद्ध पथिकोक्तिः ।
सारो अंतिसभरीनपरिजमुंकीसुहा ॥ १९८ ॥
श्रीवप्पभट्टेरुक्तिः ॥ इति पाठांतरम् ।

१ P omits गिहेण.

राजा श्रुत्वेति दध्यौ च रसपुष्टिममूदृशीम् ।
मम मित्रं मुनिस्वामी कविर्ग्रैश्याति नापरः ॥ १९९ ॥
प्रधानान् भूपतिः प्रैषीदाह्वानाय मुनीशितुः ।
तदुपालंभगर्भाणि दोधकं वृत्तमार्यया ॥ २०० ॥
तैश्चोपान्तं प्रभोराप्याप्राप्यं विंगतचेतनैः ।
वाचिकं कथयामासुः कुशलप्रश्नपूर्वकम् ॥ २०१ ॥

तद्यथा—

छायह कारणिसिरधरिअ येंश्विविभूमि पडंति ।
पत्तहं इह्णुपत्तभणं वरतरुकाइं करिंति ॥ २०२ ॥
न गंगां गां नेयं सुयुवतिकपोलस्थलगतं
न वा शुक्तिं मुक्तामणिरुरसिजास्वादरसिकः ।
न कोटीरारूढं स्मरति च सवित्रीं च सुभुवं
ततो मन्ये विश्वं स्वसुखनिरतं स्नेहविरतम् ॥ २०३ ॥
पांसुमलिनांघ्रिजंघः कार्पटिको म्लानमौलिमुखशोभः ।
यद्यपि गुणरत्ननिधिस्तथापि पथिकः पथि वराकः ॥ २०४ ॥
इत्याकर्ण्य गुरुस्तेषां पुरः प्राह वचः स्थिरम् ।
सौहृदे दौर्हृदे वापि संसृजेन्मनसा मनः ॥ २०५ ॥
आमनाममहीभर्तुर्भवद्भिर्वाचिकं हि नः ।
निवेदनीयमार्यस्य इदं गाथाकदंबकम् ॥ २०६ ॥

तथाहि—

गमयमाणसुचंदणु भमरुरयणायऊ सेरि खंडु ।
जडउच्छयु बप्पभट्टि किउ सत्तुपगाहासंडु ॥ २०७ ॥
विक्रेणविणा विगया नरिंदभुवणेसु हुंति गारविया ।
कोन होइ अगउप्पहिं बहुप्पहिविगप्पहिं ॥ २०८ ॥
माणसरहिप्पहिं सुहीइं जह नलब्भतिरायहंसिहिं ।
तह तस्स चिंतेहि विणातीतीरुच्छंगातसोहंति ॥ २०९ ॥
परिसेसियहंसउलंपिमाणसंम्माणसंनसंदेहो ।
अन्नच्छविजच्छगयाहंसाबिच्छया न भवंति ॥ २१० ॥
हंसा जहिं गय तहिं जिगयम हिं मंडणाहवंति ।
अनच्छविजुछगया हंसावि वया न भवंति ।
वह उताह महासरहजिहंसि हि मुच्चंति ॥ २११ ॥

---

१ J P H तैश्चैषोनैः प्रभोरायाप्राप्यं विगतवैभवैः । २ P सिरिधिरि अयाधिवि०.

मलउसंचंदणोच्छियनइमुहहीरंत चंदणहुमो हो ।
पच्छंपिहुमलयाउ चन्दणं जायं इ महग्घम् ॥ २१२ ॥
अग्घायन्ति महुयरा विमुक्ककमलाय राविमयरंदम् ।
कमलायरोपि दिट्ठो खुउचकिंमहुअरविहीणो ॥ २१३ ॥
एकेण कोछुहेणं विनावि रयणवरुच्चियसमुद्दो ।
कोछुहरयणंपि उरेजस ट्ठिउसो विहुमहग्घो ॥ २१४ ॥
खंडंविणाविअखंडमंडलोच्चेव पुण्णिमाचंदो ।
हरसिरिगयंपि सोहइ ननेइ विमलं ससिरकंडम् ॥ २१५ ॥

तथा—

यइमुक्का हविवरतरुफिट्टइपत्तत्तणंम पत्ताहं ।
तह पुणच्छायाजइहोतारिसातेहि पत्तेहिं ॥ २१६ ॥
जइसव्वच्छअहच्चियउवरिंसुमणाणि सव्वरुरकाणं ।
दावेविवउंतिगुणा यहु पत्तिया पावएकोडिम् ॥ २१७ ॥
ये के विपद्ममहिमंगलमिते उच्छुदण्डसारिच्छा ।
सरसाजडाण मज्झे विरसा यत्तेसु दीसन्ति ॥ २१८ ॥
इय उज्युयसीलालं कियाण थायपडियवयण सोहाणा ।
गुणवंतद्माणपहुणो पहणो गुणवंतया दुलहा ॥ २१९ ॥

ततः—

अस्माभिर्यदि कार्यं वस्तदा धर्मस्य भूपतेः ।
सभायां च्छन्नमागत्य स्वयमापृच्छयतां द्रुतम् ॥ २२० ॥
जाते प्रतिज्ञानिर्वाहे यथा यामस्तवान्तिकम् ।
प्रधानाः प्रहिताः पूज्यैरिति शिक्षापुरस्सरम् ॥ २२१ ॥
कन्यकुब्जमहीनाथमुपाजग्मुश्च तेऽप्यथ ।
सम्यग्व्यज्ञपयन् सूरेर्वचो माहात्म्यधाम तत् ॥ २२२ ॥
अकुंठोत्कठमामस्तैः करभैर्विगतारिभीः ।
गच्छन् गोदावरीतीरे ग्रामं कंचिदवाप सः ॥ २२३ ॥
तस्य पर्यंतभूपीठे खंडदेवकुले तदा ।
चक्रे वासं कृतावासस्तद्देव्याश्चेतसि स्थिरम् ॥ २२४ ॥
निशीथे सा समागत्य रूपाक्षिप्ता नरेश्वरम् ।
बुभुजे प्रार्थनापूर्वं भाग्यं जागर्ति सर्वतः ॥ २२५ ॥
प्रातरुत्थाय सन्मित्रायलुकेन तरंगितः ।
ययौ करभमारुह्यानापृच्छयैव तदाथ ताम् ॥ २२६ ॥
स प्राप प्रभुपादानां प्रान्तं विरहरुक्शुचा ।
काव्यं जजल्प निर्वेदवह्निज्वालोपमं नृपः ॥ २२७ ॥

१ मज्भे. २ अकुठोकमद्भृतामास्ते करभे॰ ३ त्रायउल्ल॰

निद्राजागरणादिकृत्यनिवहे नित्यानुवृत्तिस्पृशां
स्वप्नेष्वप्यथ योगिनां नयनवच्चेष्टासु सूक्ष्मास्वपि ।
तत्तद्वत्सुहृदामिवेह सुहृदां निष्ठेदृशी स्याद्यदा
मित्राशापरिहारमाचर ततश्चेतः प्रसीद प्रभो ॥ २२८ ॥
नृपो यथोतथवचःप्रतीतोऽप्यथ कौतुकात् ।
गाथापरार्द्धमाचख्यौ पूर्वार्धे च गुरुस्ततः ॥ २२९ ॥
तद्यथा—अज्जवि तं सुमरिज्जइ को नेहो रागराईए ।
गोलानइए खंडे देउलमज्झे पहिअजं नवसिडसि ॥ २३० ॥
इत्युक्त्वा सूरिभिर्भूपो वाढं स परिषस्वजे ।
अविश्वास्यं मनस्तस्यांतः प्रविश्येव वीक्षितुम् ॥ २३१ ॥
प्रकाममामभूपालस्तुष्टिं बिभ्रत्सवीक्षणे ।
इदं काव्यमुवाचाथ नाथः कविकुलेषु यः ॥ २३२ ॥
तद्यथा—अंगैरुत्पुलकैः प्रसादसलिलप्रस्यंदिभिर्लोचनै-
राकर्ण्याद्भुतसंकथास्तव सुधीभर्तुः प्रसन्नात्मनः ।
सौजन्यामृतनिर्झरे सुमहति स्नातुं विपद्वारिधेः
पारं गंतुमपारपौरुष वयं त्वां द्रष्टुमभ्यागताः ॥ २३३ ॥
श्लोकं विचित्रबंधेन लिलेख स खटीदलात् ।
कौतुकादामभूपालः शालिसौहार्दरंगितः ॥ २३४ ॥
तथाहि—अति अति अन्मेमलंप्रीघरघजघ
मेलामेलामेलमेलंफसफसफस ॥ २३५ ॥
तं च गोमूत्रिका बंधं ज्ञात्वा गुरुरपि स्वयम् ।
वाचयामास दोषज्ञैरपि ज्ञातं परैर्नहि ॥ २३६ ॥
तथाहि—अद्य मे सफला प्रीतिरद्य मे सफला रतिः ।
अद्य मे सफलं जन्म अद्य मे सफलं फलम् ॥ २३७ ॥
विद्वद्गोष्ठ्या विनिद्रं तं विश्रमय्य क्षपाक्षणे ।
प्रगेऽशंको नृपास्थानं सूरिः प्राप यथास्थिति ॥ २३८ ॥
आमराजोऽप्यथ श्रीमानप्रच्छन्नइवांशुमान् ।
विशिष्टैः स्वार्थनिष्ठोऽगात्स स्थगीधरकैतवात् ॥ २३९ ॥
आमविज्ञप्तिकां धर्मराजस्य दर्शयन्गुरुः ।
आगमिष्यद्वियोगाग्निज्वालामिव सुदुःसहाम् ॥ २४० ॥

---

१ स्वप्नेप्यथ वियो० स्वप्नेष्वथ वियो० २ P. अति अति अन्य अल प्रीघग्घ-जघपघ । मेलामेल मेल फसफसफसफस.

वाचयित्वा च तां पृष्टो दूतस्ते कीदृशो नृपः ।
स प्राहास्य स्थगीभर्तुस्तुल्यो देव प्रबुध्यताम् ॥ २४१ ॥
मातुलिंगं करे बिभ्रन्सैष पृष्टश्च सूरिणा ।
करे ते किं स चावादीद्विजराज इति स्फुटम् ॥ २४२ ॥
दूतेन चाढकीपत्रे दर्शिते गुरुराह सः ।
स्थगीधरं पुरस्कृत्य नूअरिपत्तमित्ययम् ॥ २४३ ॥
प्राकृतेनोत्तरं प्रादाच्छ्लेषेण ज्ञापनोपमम् ।
अवबोधे यदृच्छा तु धर्मस्यर्जुचेतसः ॥ २४४ ॥
अथोवाच प्रधानश्च सूरिरेष श्लथादरः ।
अस्मास्विति प्रतिज्ञाय दुःपूरां विदधे ध्रुवम् ॥ २४५ ॥
विहितेऽत्रापि चेत्पूज्य आपाति प्राज्यपुण्यता ।
अस्माभिः सह तद्देवाः प्रतुष्टा नो विचार्यताम् ॥ २४६ ॥
युग्मम् ।

यत –तच्छ्रीसी अलामेलावा केहा णण उत्तावली
प्रियमंदसिणेहाविरहहिं ।
माणसुजंमरइतसु कवण निहोरा कलिप-
वित्तडी ज्ञुणु जाणइदोरा ॥ २४७ ॥

राज्ञोचे वस्तुकस्यास्य कीदृगर्थप्रभस्ततः ।
बप्पभट्टिर्नृपस्याग्रे व्याख्यादाख्यातधीनिधिः ॥ २४८ ॥

तथाहि—

एका लोहपिंडी वह्निना तप्ता । अर्थात् ज्ञेया एका शीतला अनयोर्मेलकः संसर्गः कीदृशः ॥ उभयोरपि तप्तयोरेव संबंधो भवति । इत्यनेन किमुक्तं यद्वयं रणरणकतप्ताः अयं च औदासीन्याज्जितेंद्रियत्वान्निर्लोभत्वाच्च शीतस्तदस्माकमनेन सह कथं मेलक इति । तथा घनादेशीशब्देन पत्नी सा उत्सुका प्रियश्च मंदस्नेहः । ततः कथं मेलको भवति विरहेण यन्मानुषं म्रियते मृततुल्यं प्राणशेषं भवति तस्य को निहोरक उपरोधस्स प्रकृतेपि न जीवति । मिलित एव प्रणयिनी जीवति तथा कर्णे पवित्रिकेयं जनो जानाति दारकं द्वित्रिगुणावलिततंतुरूपं स्थगीधरस्येति वा सूत्रार्थः ॥ १ ॥

तथा तप्तं तपस्तदिच्छतीत्येवं शीलस्तपश्चरणेच्छुः स तप्तेपी ॥

---

१ P. पुरस्कृत्य त्तमियत्य । २ P. तत्रीसी अलीमेलावाकेहा धण.
३ P. सूत्रकृतेपि.

तथा अलिभूषाप्रिय एको लक्षणया स कामः । "नाकामी मंडनप्रियः" इति वचनात् अनयोर्मीलकविषये का ईहा चेष्टा किंतु न कापि । तथा उप्तं धनं यैस्ते धनोप्ताः ॥ आहिताग्न्यादित्वात् कांतपरनिपातस्तेषामावली श्रेणीर्दानेश्वरसमूहस्तस्य प्रियो वल्लभः । दानेश्वराणां हि सत्पात्रेच्छा विशेषतो भवति स चार्थादाचार्यः । स मन्दस्नेहो निर्मोह इत्यर्थः ॥ तथा विरहे विशिष्टेकान्ते तद्धेतोर्म्रियते लक्षणया तदर्थं संतप्यत इत्यर्थः ॥ तस्य का न होरा मुहूर्तरूपाः । स सर्वदा तस्य विरहे संतप्त एवास्ते । स वा इति प्रश्नाध्याहारे कान्यकुब्जे पवितडितसमानविद्युत्समः तेजस्वी जनो विद्वज्जनो मल्लक्षणः स जानाति दोरा द्वौराजानौ । वा एवार्थे द्वौरा द्वावेव राजानौ धर्म आमश्च विद्वत्प्रियाविति मच्चित्ते गूढार्थस्तु हे राजन् त्वया ज्ञेयं यद्गुरुप्रतिज्ञानिर्वाहाय आमोऽत्रायातोऽस्तीति द्वितीयोऽर्थः ॥ २ ॥

तथा तसीतारा शीतला योऽत्रश्लथआदर इत्यर्थः । स तसिरीतलः । स्वराणां स्वराः प्रायोऽपभ्रंशे इतीकारः ॥ तत्र मीलकः कीदृशः । यतः ध्वनदुक्तावली चमत्कारिकाव्यश्रेणी वल्लभा यस्य अर्थादाचार्यः सोस्मासु मंदस्नेहः स उपरोधेन न गृह्यत इत्यर्थः । तथा विरहे अर्थाद्विषवियोगसर्वसंगपरित्यागे सति यो मरति मानुषपुरुषः। देवत्सुखीभवति तस्य कःस्नेहः। संबंधादिषु निहोरः क उपरोधः । स उपरोधेन न गृह्यत इत्यर्थः । करणप्रवृत्तिदानेश्वरत्वात्कर्णरीतिः दोरोदोषा राजते महाबाहुः स आम एवंविधमपि सूरिर्जनमिव प्राकृतमिव जानाति न किंचिदित्यर्थः॥ ३॥

तथा तत्त्वानि ईष्टे तत्त्वेशी अत एव आली संगनिषेधी तस्य मेलः संसर्गः तस्य अवोऽवाप्तिः ॥ स्वराणां स्वरा इत्याकारस्तथा के ब्रह्मणि ईहा चेष्टा यस्य स केहः परमब्रह्मेच्छः । दीर्घः प्राग्वत् । धनयुक्तानामावली श्रेणी । प्रिया अमंदस्नेहा अत्यर्थप्रीतिर्भवति ॥ विगतरागेषु हि सर्वः प्रीतिमान् धनवन्तोपि तत्रैव रतिं निदधति तथा विः पक्षी गरुडः स रथो यस्य स विरथो विष्णुस्तस्मिन्नर्थात् चित्तस्थे यो म्रियते तस्य को निभः सदृशः । सच रा राजेव एवं भवति गुरौ चित्तस्थे मृत्युरपि श्लाघ्यः । तथा जह्नुजानद्याः गंगायाः सकाशात् का अन्या पवित्रायमेव भगवान्पूज्यः तथा दोरा द्वौ राजानौ संगतौ यस्य द्विराट् सर्वसामर्थ्ययुक्तो भवानेव यदुचितं तद्विधेहीति चतुर्थोऽर्थः ॥ ४ ॥

तत्तीसीयलाटीकायां ग्रंथाग्रं ३२ अ० ८ व० ॥ ५ ॥

---

१ J H. omit तथा-इत्यर्थः

श्रीबप्पभट्टिना चैवमर्थानां साष्टकं शतम् ।
व्याख्यातं मतिमांद्येन न जानीमो वयं पुनः ॥ २४९ ॥
तत उत्थाय रात्रौ च वारवेश्यागृहेवसत् ।
अमूल्यं कंकणं दत्त्वास्याः प्रातर्निरगाद्गृहात् ॥ २५० ॥
द्वितीयं राजसौधस्य द्वारि त्यक्त्वा स्वरांशुरुक् ।
इन्द्रकीले ययौ तस्माद्बहिरस्थाद्वहोवने ॥ २५१ ॥
ततः प्रातर्मुनिस्वामी संगत्य नृपतेः सभाम् ।
आपपृच्छे नृपः कन्यकुब्जप्रस्थानहेतवे ॥ २५२ ॥
तेन पूर्णप्रतिज्ञायामज्ञातायां कथं त्विति ।
राज्ञा पृष्टे समाचख्यावामभूप इहागमत् ॥ २५३ ॥
विद्वत्कथनतस्तेन कथितं यद्यदीदृशः ।
ज्ञायतां सैषे एवेति दोराशब्दात्तथा पुनः ॥ २५४ ॥
द्वौ राजानौ इति स्पष्टं मातुलिंगस्य दर्शनात् ।
इदं किमिति पृष्टे च बीज ऊरात उत्तरात् ॥ २५५ ॥
तथा रूंअरिपत्तंति तच्चारिपात्रमित्यथ ।
संस्कृताद्भवतीत्येतत्तवाग्रे जगदे स्फुटम् ॥ २५६ ॥
ततो विप्रतिसारोऽस्य प्रससार प्रकर्षतः ।
धिगस्ति मम मूर्खत्वं न ज्ञातं कथितेपि यत् ॥ २५७ ॥
ततोऽवसर एतस्मिन् वारवामा प्रभोः पुरः ।
कंकणं मुमुचे रत्नरोचिरस्ततमस्ततिः ॥ २५८ ॥
क्षत्ता परं समर्प्याथ भूपालाय व्यजिज्ञपत् ।
द्वारेन्द्रकीलकेनापि मुक्तं नाथ न वेद्म्यहम् ॥ २५९ ॥
यावत्पश्यति राजा तदामनामाथ दृष्टवान् ।
श्रीवप्पभट्टेरापृच्छय हेतुप्रत्यायकः प्रभुः ॥ २६० ॥
गृहागतो नृपः शत्रुर्नार्चितो नच साधितः ।
द्विधापि चिरवैरस्य निर्वृत्तिर्न प्रवर्तिता ॥ २६१ ॥
तथाच विरहः पूज्यैरुपतस्थेऽतिदुःस्वदः ।
यो वल्लभ्यं तु लभ्येत किं ब्रूमः सांप्रतं प्रभोः ॥ २६२ ॥
गुरुराह महाराज मा खेदोऽत्र विधीयताम् ।
हंसा इव वयं येनाप्रतिबद्धविहारिणः ॥ २६३ ॥

---

१ J H. जायतामेष० २ P. तस्मान् अरिपत्तंतियारिपा० H भू भरि.

आपृष्टोसि महाबाहो यामः स्वं नाम सार्थकम् ।
कुर्याद्यथा परे लोका निर्मलाः स्युः सुहृत्तम ॥ २६४ ॥
इत्युक्त्वातो निरीयागात् संगत्यामनृपेण च ।
करभीभिरमीपुंभिः सुरभिर्यशसा गुरुः ॥ २६५ ॥
मार्गे तदासनारूढः प्रभुणा सह संचरन् ।
पुलिंदमेकं कासारे क्षिप्तास्यं वारिमध्यतः ॥ २६६ ॥
पिबंतं च छगलवद्दृष्ट्वा गुरुपुरस्तदा ।
आह प्राकृतकाव्यार्द्धमपूर्वेक्षासकौतुकः ॥ २६७ ॥
तथाहि–पसुजेमपुलिंदउ पय पीअइ जुपंथिउ
कमणिहि कारणिण ।
इत्याकर्ण्य प्रभुः प्राहोत्तरार्द्धं तत्क्षणादपि ।
विलंबन्ते न काव्येषु सिद्धसारस्वताः क्वचित् ॥ २६८ ॥
तच–करबेवि करंविय कज्जलिणमुद्धहिअंसुनिवारणिण ॥ २६९ ॥
प्रत्ययार्थं पुलिंदस्य समाकार्य स भूभुजा ।
पृष्टो लज्जानतास्योयं यथावृत्तमथावदत् ॥ २७० ॥
नाथ प्रवसने युष्मद्वधूं सांत्वयतः सतः ।
सांजनाश्रुप्रसृष्टौ मा भूतां कज्जलितौ करौ ॥ २७१ ॥
हर्षप्रकर्षमासाद्य वृत्तांतेनामुना नृपः ।
सुरेंद्र इव सौधर्म्यं द्राक् कन्याकुब्जमासदत् ॥ २७२ ॥
प्रविवेशोत्सवेनैष प्राच्याशातिशयेन सः ।
कोटिकोटिगुणामर्चामकार्षीच्च गुरोस्तथा ॥ २७३ ॥
इतश्च श्रीसिद्धसेनसूरयो जरसा भृशम् ।
आक्रांताः कृतकृत्यत्वात् सेच्छाः प्रायोपवेशने ॥ २७४ ॥
वप्पभट्टेर्विधेयस्य विनेयस्य मुखाम्बुजम् ।
दिदृक्षवो मुनिं प्रैषुर्वृतं चाह्वानहेतवे ॥ २७५ ॥
तच्चेदम्–सारीरं सयलं बलं विगलिअं दिट्ठी विकट्ठेण मे
दट्ठव्वे सुपयट्टइ परिगणप्यायं तहा आउयम् ।
पाणा पाहुणयछगन्तु महुणा वंदत्ति वच्छा तुमम्
मंदट्ठुं जइ मच्छितालइुलइ इच्छाहि निस्संसयम् ॥ २७६ ॥

---

१ D मुनींद्रश्च. २ D विधेयस्य गुरुणास्य.

तं दृष्ट्वा बहुमानार्द्रो गुरौ द्रागाजगाम च।
राजपुंभिः समं मोढेरके प्रभुपदान्तिके ॥ २७७ ॥
प्रभोः स न्यासविन्यासं रुंधन् प्रथमदर्शने।
अतृप्तस्तस्य वात्सल्ये तेनासौ जल्पितः शमी ॥ २७८ ॥
तथाहि-वपुः कुब्जीभूतं तनुरपि शनैर्यष्टिशरणा
विशीर्णा दंताली श्रवणविकलं कर्णयुगलम्।
निरालोकं चक्षुः तिमिरपटलश्यामलमहो
मनो मे निर्लज्जं तदपि विषयेभ्यः स्पृहयति ॥ २७९ ॥
ततो वत्समतिस्वच्छगच्छवात्सल्यतत्परः।
भव त्वं गुरुसाहाय्यं प्रेत्यमे(चै)वानृणो भव ॥ २८० ॥
तत आराधनां कृत्वा परलोकं समाधिना।
तं ययुर्गुणशास्तिश्च चक्रेऽसौ राजपूजितः ॥ २८१ ॥
श्रीमद्गोविन्दसूरेः श्रीनन्नसूरेश्च स प्रभुः।
बप्पभट्टिं समर्प्याथ गच्छं संघं च सोद्यमम् ॥ २८२ ॥
अनुज्ञाप्य क्षितिस्वामिं प्रधानैराप्तैर्वृतः।
पुनरप्यापययावामधाम निर्ग्रंथनायकः ॥ २८३ ॥ युग्मम्।
तं दृष्ट्वा भूपतिस्तत्र जातरागविकल्पतः।
चित्ताभिसन्धिसंबद्धां गाथामेनामचिन्तयत् ॥
समासीनोऽन्यदा राज्ञः सूरिप्रेक्षणकक्षणे।
प्रवीणपुस्तिकाहस्तः पुंरूपेव सरस्वती ॥ २८४ ॥
द्विधाक्षरे पदे स्थास्नुर्दृष्टिस्तत्क्लेशनाशिनी।
तदा कदाचिदाध्यासीन्नीलचण्डातके दृशम् ॥२८५॥ युग्मम्।
तथाहि-सिद्धंतपारं गयाणजो इणजो गजुत्ताणम्।
जइ ताणं पिमयच्छी मणिम्मिता तच्चियपमाणम् ॥ २८६ ॥
अमूढकार्यनिर्वाहज्ञानहेतुं ततस्तदा।
स्नेहादेव निशि प्रैषीत्तां पुंवेषां तदाश्रये, ॥ २८७ ॥
सा निलीना क्वचिद्द्रव्यगणे स्वस्थानगे ततः।
रहः शुश्रूषितं सूरिं प्रारेभे धैर्यभित्तये ॥ २८८ ॥
स्त्रीकरस्पर्शतो ज्ञात्वा चोपसर्गमुपस्थितम्।
विममर्श नृपाज्ञानतमसश्चेष्टितं ध्रुवम् ॥ २८९ ॥

१ P. मः २ P केग. ३ P. सिद्धंतत...ओऽणगन्नाना अनमितानिधि.

ससज्जः सज्जयः सज्जमनोभूविजये ततः ।
अष्टाङ्गयोगसद्धर्म्मसंवर्म्मिततनुर्मुदा ॥ २९० ॥

शुभध्यानाश्वमारूढः संतोषयक्षराक्षसम् ।
दृढसंयमकोदण्डविप्रब्धतप आशुगः ॥ २९१ ॥

सद्बोधपुष्टिरिष्टिश्रीःशक्तिशक्तिस्फुरत्करः ।
मनाश्रया समुत्तस्थावन्तरङ्गद्विपञ्जये ॥२९२॥ त्रिभिर्विशेषकम् ।

अब्रवीद् ब्रूहि कात्र त्वं किमर्थं समुपस्थिता ।
ब्रह्मचर्म्मवतामेषा स्यान्न भूमिर्भवादृशाम् ॥ २९३ ॥

अध्वन्येषु यथा व्याली हारङ्करं द्विजालये ।
पलं दर्शनशालासु हलं राजकुले यथा ॥ २९४ ॥

धर्मे प्राणवधो यद्वद्वेदोच्चारे यथांत्यजः ।
नालिकेरं पयौ यद्वद्द्विकें दधिफलं यथा ॥ २९५ ॥

चन्दने मक्षिका यद्वद्धामठं कुङ्कुमे यथा ।
कर्पूरे लशुनो यद्वत्तथात्र त्वं न चित्तहृत् ॥२९६॥ विशेषकम् ।

विश्वश्रोतःश्रवद्विस्रजंबालकलुषाकृतौ ।
लज्जनीयेऽवलादेहे रजन्त्येके कृमीन्विना ॥ २९७ ॥

श्रुत्वेति तानुवाचासौ नाहं पूजाभिलाषिणी ।
आययौ भवतो मार्गभ्रष्टान् बोधयितुं स्फुटम् ॥ २९८ ॥

संपत्संपत्तये दानधर्म्मे लोकानुरुध्यते ।
ऐश्वर्याय तपस्तप्यं तच्च राज्यं विना नहि ॥ २९९ ॥

स्वर्भुवोपि च तत्रापि सारं सारङ्गलोचना ।
यया विना नृदेवानामवकेशीव पुंजनः ॥ ३०० ॥

उक्तञ्च–राज्ये सारं वसुधा वसुधायां पुरं पुरे सौधम् ।
सौधे तल्पं तल्पे वराङ्गनानङ्गसर्वस्वम् ॥ ३०१ ॥

जगत्यपि न वर्तन्ते विपरीताग्रहग्रहम् ।
अवाप्तवांछयावाप्तं त्यज्यंतो जनहास्यदाः ॥ ३०२ ॥

दुर्बुद्धिबृद्धितो दैवदण्डिता इव ते प्रभो ।
अवधारय पाखण्डखेदितो मा स्म मूर्जडः ॥ ३०३ ॥ युग्मम् ।

महासभ्यामराजेन प्रैष्यहं प्राणवल्लभा ।
विज्ञा मनोहरप्रज्ञा गुणरक्तधराधिपा ॥ ३०४ ॥

---

१ D संतोषप्रक्षराक्षतं. २ D पयौ यद्वद्वीके ३ द्रंडे चकु० ४ PH चिहहृत्
५ D जगत्पतीनं ।

प्रभोर्यदूचे बीभत्सरसन्यासवशा तनुः ।
अशुश्रूषाकदर्य्याङ्गभूतामेव कुयोषिताम् ॥ ३०५ ॥
वयं निरन्तरायाप्तकर्पूरादिमया इव ।
वेधसा विहिता अज्ञा दौर्गन्ध्यादिकथास्वपि ॥ ३०६ ॥
ततो नाथेय नाथ त्वां सफलीकुरु मामकम् ।
भोगाभोगं हि भोगेन भोगिन्या भोगिराडिव ॥ ३०७ ॥
ततः प्राक् सिष्मिये सूरिस्तद्वाग्भिर्न विसिष्मिये ।
उवाच च गिरं धीरां धैर्याधारधुरन्धरः ॥ ३०८ ॥
हेम्नी पांचालिका रिक्तांतराला शुचिपूरिता ।
बहिश्चन्दनचर्चादिभूषासुरभि वस्तु किम् ॥ ३०९ ॥
मलमूत्रादिपात्रेषु गात्रेषु मृगचक्षुषाम् ।
रतिं करोति को नाम सुधीर्वर्चोगृहेष्विव ॥ ३१० ॥
चक्षुः संवृणु वक्रवीक्षणपरं वक्षः समाच्छादय
रुंद्धि स्फूर्जदनेकभङ्गिकुटिलं रम्योपचारं वचः ।
अन्ये ते नवनीतपिण्डसदृशा वश्या भवन्ति स्त्रियाम्
मुग्धे किं परिखेदितेन वपुषा पाषाणकल्पा वयम् ॥ ३११ ॥
इत्याकर्ण्याप्यकर्ण्येव न बुद्धा प्रत्युत प्रभोः ।
स्वभावकठिनौ हस्तौ स्वगात्रेऽपत्रपाप्यधात् ॥ ३१२ ॥
ताभ्यां च सर्गपत्राभ्यामिव सास्पर्शयत्ततः ।
स्मरकुञ्जरकुम्भाभौ मृदुस्पर्शावुरोरुहौ ॥ ३१३ ॥
नभः शृङ्गारशिखरिखादिरांगारभारवत् ।
निर्दम्भशोकदन्तेन पूच्चकार मुनीश्वरः ॥ ३१४ ॥
किं किमित्यूचिषी वक्षोजाग्रात्पाणिं विकृष्य सः ।
अवाष्पगद्गदाव्यक्तवाचोवाच कथञ्चन ॥ ३१५ ॥
अमूल्यातुल्यवात्सल्यवर्द्धितासादृशाङ्गिनाम् ।
गुरूणां स्मारिता अद्य निजाङ्गस्पर्शतस्त्वया ॥ ३१६ ॥
तया कथमिति प्रश्ने कृते प्राह पुनः प्रभुः ।
रात्रौ स्वाध्यायकृत्वानंतरं विश्रामणां प्रभोः ॥ ३१७ ॥
अहं व्यरचयं सर्वकालं सर्वाङ्गसंगिनीम् ।
कटिं विश्राम्यँ तत्प्रोथयुगलं च समस्पृशम् ॥ ३१८ ॥ युग्मम् ।

---

१ H. हम्री…चिः २ H पुरुपा ३ H. गुरुणी ४ P. विश्रम्येतप्रोथयुगलं व समास्पृशं ।

तदङ्घस्मृतिमानीतं वृत्तमार्दवसाम्यतः ।
यादृक् तव कुचद्वंद्वं तादृक् तदपि चाभवत् ॥ ३१९ ॥
श्रुत्वेति सा परावृत्तरसा भग्नाशतानिधिः ।
दध्यौ विधूतकामांध्या किं मे कर्मोदयं ययौ ॥ ३२० ॥
ग्रावा लोहं कथं वज्रं दुर्भिदोऽयं सिताम्बरः ।
वह्नि टंकादिभिर्भेद्यो ग्रावा लोहश्च वह्निना ॥ ३२१ ॥
कुचलीकोमलफलक्षोदाद्यैर्वज्रमप्यथ ।
भिद्येतानन्यसामान्यकाठिन्यं किञ्चिदस्य नु ॥ ३२२ ॥
घृतपिण्डसमा ह्यन्ये वह्निकुण्डसमासु ये ।
महिलासु विलीयन्ते सृष्टिरेवापरस्य च ॥ ३२३ ॥
वेधायमश्वकावस्य पुरः कर्मोर्मिकिङ्करौ ।
कर्म्माप्यस्यबिभेतीव तीव्रब्रह्मव्रतस्पृशः ॥ ३२४ ॥
रसे विरसमाधत्त मत्काममपि मन्नवान् ।
तिरश्चकार मां यस्तु तेन दैवं हि जीयते ॥ ३२५ ॥
ध्यायन्तीति निदद्रौ सा मुनिद्रोहे गताग्रहा ।
निद्रा हि विश्वदुःखाप्तौ विश्रामादुपकारिणी ॥ ३२६ ॥
प्रगे जागरिताचार्यं पर्यङ्कासनसंस्थितम् ।
प्रणम्य प्राह नाहमरहंतद्विकृतौ[१] कृतीन् ॥ ३२७ ॥
वीतरागः पुरा स्मेरस्मरमुख्यारिजित्वरः ।
आसीस्त्वद्वृत्ततः सत्यमिदं ख्यातिं ययौ किल ॥ ३२८ ॥
तदापृच्छे प्रसाद्याशु पृष्ठे हस्तं प्रदेहि मे ।
तव शापेन शक्रोऽपि नश्यत्यन्यस्य का कथा ॥ ३२९ ॥
अथाह गुरुरज्ञानवागेषा ते वयं पुनः ।
रोषतोषमरामीता अज्ञाः शापादिगीर्ष्वपि ॥ ३३० ॥
इति श्रुत्वा ययौ भूपसमीपं वरवर्णिनी ।
उवाच तद्गुणव्रातक्षणविहतवैकृता ॥ ३३१ ॥
नाथ पाथःपतिं बाहुदण्डाभ्यां स तरत्यलम् ।
भिनत्ति च महाशैलं शिरसा तरसा रसात् ॥ ३३२ ॥
यथेच्छवह्निमास्कन्देत् सुप्तं सिंहञ्च बोधयेत् ।
श्वेतभिक्षुं तव गुरुं य एनं हि विकारयेत् ॥ ३३३ ॥

---

१ H. पृष्टि २ P ज्ञस्यल०.

इत्याकर्ण्यावनीपालः प्राप्तरोमाञ्चकञ्चुकः ।
स्वगुरोर्गुरुसत्त्वेन प्राह नृत्यन्मनोनटः ॥ ३३४ ॥
न्युंञ्छने यामि वाक्याय दृग्भ्यां यास्यवतारणे ।
बलिर्विधीये सौहार्दहृद्याय हृदयाय च ॥ ३३५ ॥
असौ महीधराधारादेशः पुरमिदं मम ।
भाग्यसौभाग्यभृद्यत्र बप्पभट्टिप्रभुस्थितिः ॥ ३३६ ॥
त्रिभिर्विशेषकम् ।

स्वक्षेत्रभ्रंशिनं कामं कामादिति विमर्शतः ।
परक्षेत्रगतास्तत्र लालसत्वं हि तत्यजुः ॥ ३३७ ॥
पशवोपि गजास्तस्मादहासीत्सर्वथा नु तान् ।
योस्मै गजवरेत्याख्या ततः ख्यातास्तु मद्गुरोः ॥ ३३८ ॥
ततो गजवरो ब्रह्मचारी च बिरुदद्वयम् ।
तस्याभूद्भूतसद्भावभाविवेत्तुः श्रुतागमात् ॥ ३३९ ॥
तथा किं विदधे तत्र त्वया पृष्टेति सावदत् ।
कटाक्षक्षेपवक्षोजतत्करस्पर्शनादिभिः ॥ ३४० ॥
अजातबोधका चैकं तदा दोधकमब्रुवम् ।
तत्र प्रज्ञानुमानेन कवित्वं हि प्रसर्पति ॥ ३४१ ॥
तथाहि—गयवरकेरइ सच्छरइ पायपसारि उसत्त ।
निव्वोरा गुजराजजिस्थिनाहनकेणइ भुत्त ॥ ३४२ ॥
एवं नृपादिभिः सत्यगुणकीर्तनतस्ततः ॥
ब्रह्मप्रभावप्रागल्भ्याद्बप्पभट्टिः प्रभुर्जयी ॥ ३४३ ॥
प्राकारबाह्यमन्येद्युराजा राजाध्वनाचरन् ।
पश्चादोकसि गेहस्येक्षांचक्रे हालिकप्रियाम् ॥ ३४४ ॥
पञ्चांगुलबृहत्पत्रसंवृतस्तनविस्तराम् ॥
वृणुत्रवृतिरन्ध्रेणार्पयित्वा प्रियहस्तयोः ॥ ३४५ ॥
लवित्रं विस्मृतं पश्चात्प्रयांती गृहमन्तरा ।
उरोजबिम्बाकाराणि बहिःपत्राणि वीक्ष्य च ॥ ३४६ ॥
गाथार्द्धं प्रोचिवान् कौतूहलाकृष्टमनःक्रमः ।
दृष्टिमेरंड उद्दण्डस्कन्धे न्यस्यन् चलाचलाम् ॥ ३४७ ॥
त्रिभिर्विशेषकम् ॥

तच्च—वइविवर निगायदलोपरंडोसाहइ तरुणाणं ।
तत्प्रातः स्वगुरोरग्रेऽवदत्संसदि संस्थितः ॥ ३४८ ॥

---

१ P H नदः २ D वर धारादेश ।

उत्तरार्द्धमवादीच्च तस्यानुपदमेव सः ।
इच्छघरे हलियवहु सद्दहमित्तच्छणी वसइ ॥ ३४९ ॥
इति श्रुत्वा यथादृष्टपूरकं प्रभुमस्तवीत् ।
सिद्धसारस्वतः कोपि कलौ नामगुरुं विना ॥ ३५० ॥
सायमैक्षत सोऽन्येद्युरेकां प्रोषितभर्तृकाम् ।
यांतीं वासालये वक्रग्रीवां दीपकरां तदा ॥ ३५१ ॥
उत्तरार्द्धं विधायात्र गाथायाः सुहृदः पुरः ।
प्रातराह ततोऽसौ च प्राग्दलं प्राह सत्वरम् ॥ ३५२ ॥
तथाहि–पियसंभरणपलुट्टंतं अंसुधारानिवायभीया ।
दिज्जइ वंकग्गीवा इवीउपहि नायाए ॥ ३५३ ॥
इत्यनेकप्रबन्धाढ्यकाव्यगोष्ठीगरीयसा ।
कालं सुखेन याति स्म गुरो राज्ञः कियानपि ॥ ३५४ ॥
श्रीधर्मभूधनोन्येद्युर्दूतंप्रेषितवानथ ।
श्रीमदामस्य वामस्य दुष्कृतानां सुधीनिधिः ॥ ३५५ ॥
ततः स भूपमानस्य सभायामुचितासनः ।
सम्यक् व्यजिज्ञपत् सभ्यैर्विस्मितैर्वीक्षिताननः ॥ ३५६ ॥
मम नाथ प्रभो तावकीनच्छेकत्वभङ्गिभिः ।
संतुष्टः स्पष्टमाहस्म सविस्मयमनःक्रमः ॥ ३५७ ॥
भवत्कोविदकोटीररत्नश्रीबप्पभट्टिना ।
सत्यानृतकवित्वस्य व्याख्यानाच्छलिता वयम् ॥ ३५८ ॥
यदायातोऽपि गेहान्न आतिथ्यार्होपि नार्हितः ।
आमो रामो धियानूपोनुतापातिशयः स नः ॥ ३५९ ॥
हृल्लेखाधायि वैदग्ध्यं साहसं वाक्पथातिगम् ।
वयं चमत्कृतेर्हृष्टास्तद्वदाम किमप्यहो ॥ ३६० ॥
राज्ये नः सौगतो विद्वान् नाम्ना वर्द्धनकुञ्जरः ।
महावादी दृढप्रज्ञो जिनवादिशतोन्नतः ॥ ३६१ ॥
देशसन्धौ समागत्य वादमुद्रां करिष्यति ।
सभ्यैः सह वयं तत्र समेष्यामः कुतूहलात् ॥ ३६२॥ युग्मम् ।
यः कोपि भवतां वादकोविदः सोपि तत्र वा ।
आयातु सह विद्वद्भिर्घनाघन इवोन्नतः ॥ ३६३ ॥

---

१ P दुःतत्तानासु०

तद्वाक्संग्राम एवास्तु यस्य वादी विजीयते ।
जित एवापरेणासौ किं हतैर्बहुशस्त्रिभिः ॥ ३६४ ॥
संज्ञो वाचिवशौर्य्यंते? वादिनोऽथ पराजिताः ।
यद्यसौ सौगताचार्य्यो महावादीविजीयते ॥ ३६५ ॥
तस्मिन् जिते जिता एवायासवाह्यं त्वया वयम् ।
घृतपिण्ड इव स्त्यानमुदके हिमनिश्चयः ॥ ३६६ ॥
इति श्रुत्वामभूपाल ऊचे संदेशहारकम् ।
श्रीधर्म्मोनुचितं ब्रूयात्किं कदापि नराधिपः ॥ ३६७ ॥
परं किञ्चिदुपालभ्यमस्ति नार्हसतां हि यत् ।
अस्मिन्नवसरे वाच्यं प्रस्तावो दुर्लभो ध्रुवम् ॥ ३६८ ॥
विदुषः सुहृदस्तस्याकारणव्याजतो ध्रुवम् ।
आयामो मिलितुं तत्र स्फुटं वास्माभिरौच्यत ॥ ३६९ ॥
तत्र वीज उरादोरावाक्याभ्यां वंधुरीतितः ।
द्वितीयो राडि चद्वौच राजानावितिसंस्कृतान् ॥ ३७० ॥
दर्शिते वाटकीपत्रे व्याख्यातं वप्पभट्टिना ।
इदं भूअरिपत्तन्ते अरिपत्राख्यसंस्कृते ॥ ३७१ ॥
त्रिराख्यातेपि न ज्ञातं तैया वा न स्फुटीकृतम् ।
न विघ्नस्तु तृतीयेपि वचसि प्रकटेन यत् ॥ ३७२ ॥
एतत्प्रकाशितं यस्मादज्ञानात्पुंनपुंसकम् ।
ज्ञापितस्त्वत्प्रभुस्ते च विशिष्टा विदिता किल ॥ ३७३ ॥
तथापि चेज्जिगीषास्ति मयि तु त्वदधीशितुः ।
श्रद्धां ते पूरयिष्यामि भवत्वेतद्भवद्वचः ॥ ३७४ ॥
परं विजयिनो राज्ञः पराभूतक्ष्माभुजा ।
सप्ताङ्गमपि राज्यं स्वमर्पणीयमदर्पिता ॥ ३७५ ॥
ईदृशं भवतः स्वामी यदोरीकुरुते तदा ।
एवनास्त्वत्पथा किं नः प्रयासेन फलं विना ॥ ३७६ ॥
इत्याकर्ण्यावदद्दूत आमत्याख्या त्वया निजा ।
सत्या कृता विशांनाथ मतेरपरिपाकतः ॥ ३७७ ॥

---

१ P. भुजोवापिचशौर्यंते. २ H तस्मिन्न. ३ P वधुरीरितः. ४ D omits सस्कृतान्···to अरिपत्राख्य. ५ P भियाचा. ६ H पवतस्तरनय. ७ H. विशाम्यतवमतेरपरिपाकवत.

जडोपि को न वेत्तीति कथिते किं पुनःपुनः ।
अपरोऽपि गृहायातं नृपं शत्रुमपि ध्रुवम् ॥ ३७८ ॥
योजयेदातिथेये न भवांस्तु प्रकटीकृतः ।
सत्कारायापि नाम स्वं सत्यापयति चेन्द्रिया ॥ ३७९ ॥
पलायमानो बाह्यानां हस्तारूढो विनश्यति ।
दृढमस्मत्प्रभोर्नाम वैतथ्यं जायते स्फुटम् ॥ ३८० ॥
विग्रहेऽपि स एवास्यादोषो राक्षस्ततो नृप ।
विमृश्यकारिता तत्र सैवास्यैकाऽपराध्यति ॥ ३८१ ॥
क्षमाक्लीबस्य तस्य त्वं जितेऽस्मद्वादिना ततः ।
पुमानथापमानस्य पात्रं सर्वस्वनाशतः ॥ ३८२ ॥
ग्राह्यीकृतप्रसादस्य नास्त्येवास्य पराजयः ।
वादिनो वि(व्य)मृशंस्तत्रमुख्यमर्शो(र्षो)हि नाशकृत् ॥३८३॥
श्रुत्वेति बप्पभट्टास्ये सहास्ये नृपवीक्षिते ।
मुनीशेन सदानन्दनिर्भरं जगदे वचः ॥ ३८४ ॥
को हि धर्म्मस्य नोत्कंठी पूर्वं परिचितस्य वा ।
यदि रागिग्रहो न स्यादस्य श्रेयोबहिष्कृतः ॥ ३८५ ॥
अनित्यैकग्रहे रक्ते भिक्षौ कृतजयाग्रहः ।
क्षणं तदेव चेद्रागे जयोमोक्षस्ततः कुतः ॥ ३८६ ॥
वैराग्य एव मुक्तिः स्यात्सर्वदर्शनसम्मतः ।
कार्य्या नात्राधृतिर्भिक्षुर्जेयो मे तत्कृतोन्नतिः ॥ ३८७ ॥
धर्म्मराजस्य सम्यक्तुविचारादिदमादृतः ।
मदाश्रितो यतो वादस्तस्यैवोपकरिष्यति ॥ ३८८ ॥
कुत्राप्यवसरे तस्मादस्तुवाक्पुरतो रणः ।
संमान्य प्रेषय प्रेष्ठपुमांसं धर्म्मभूपते ॥ ३८९ ॥
आमराजेन कृत्वैतत्प्रहितः सययौ भुवम् ।
व्यवस्थाप्य जगामासौ प्रोचे तत्स्वामिनः पुरः ॥ ३९० ॥
वाग्विग्रहाय वादींद्रराजवर्द्धनकुञ्जरम् ।
धर्मं संवाहयामास गीष्पतिं वासवो यथा ॥ ३९१ ॥
चतुर्दिगन्तविश्रांतकीर्त्तयस्सुहृदस्ततः ।
आहूयाभ्यर्च्यसभ्यत्वे वादेऽस्मिन् विहिता मुदा ॥ ३९२ ॥
परमारमहावंशसम्भूतः क्षत्रियाग्रणीः ।
तस्य वाक्पपतिराजोऽस्ति विद्वान्निरुपमप्रभः ॥ ३९३ ॥

---

१ D. मदास्ये.

पूर्वं परिचितश्चासौ बप्पभट्टिप्रभोस्ततः ।
तस्य वाग्मर्मविज्ञानहेतौ संवाहितो मुदा ॥ ३९४ ॥
व्यवस्थितदिने प्राप प्रदेशं देशसन्धिगम् ।
समाधीशमहासभ्यैः समं वर्द्धनकुंजरः ॥ ३९५ ॥
कन्यकुब्जादपि श्रीमानामः कामसुधीनिधिः ।
श्रीबप्पभट्टिना विद्वद्वृन्दसन्निधिना सभाम् ॥ ३९६ ॥
भुवं तामेव संप्रापातपत्राच्छादिताम्बरः ।
आवासान् स्वःपुरा पट्टे दत्वावस्थितवानथ ॥ ३९७ ॥
युग्मम् ।

आजन्म सर्वदादृष्टशास्त्राशक्तिश्लथादरः ।
अदृष्टपूर्ववाग्युद्धप्रेक्षायै सकुतूहलः ॥ ३९८ ॥
अहंपूर्विकया सिद्धविद्याधरसुरव्रजः ।
समेतश्चाप्सरोवर्गैः स्वर्गवद्गगनांगणे ।
कौतुकाकृष्टचेतोभी राजसभ्यैर्बहुश्रुतैः ।
ईयतुः सङ्गतौ तत्र तौ वादिप्रतिवादिनौ ॥ ३९९ ॥
उपविष्टेषु सभ्येषु श्रुत्यधीनमनस्सु च ।
तिमितात्र सभा साभूदालेख्यालिखिता किल ॥ ४००॥
निजं निजं नराधीशमाशिषाभिननंदतुः ।
स्वस्वागमाविरोधेन सभ्यानुमतिपूर्वकम् ॥ ४०१ ॥
ततः श्रीसौगताचार्य्यः पूर्वं वर्द्धनकुञ्जरः ।
आशीर्वादमुदाजह्रे व्यथकं क्षेपिपर्षदाम् ॥ ४०२ ॥
तथाहि–शर्म्मणे सौगतो धर्म्मः पश्य वाचंयमेन यः ।
आदृतः साधयन्विश्वं क्षणक्षणविनश्वरम् ॥ ४०३ ॥
अथ श्वेतांबराचार्य्यो बप्पभट्टिः सुधीपतिः ।
अभ्यधत्ताशिषं स्वीयां भूपालाय यथा तथा ॥ ४०४ ॥
अर्हन् शर्म्मोन्नतिं देयान्नित्यानन्दपदस्थितः ।
यद्वाचा विजिता मिथ्यावादा एकान्तमानिनः ॥ ४०५ ॥
उभयोराशिषः श्लोकौ निरूचुः पार्षदास्तदा ।
असौ धर्म्मो गतः सम्यग्यमिता गीश्च वाग्मिभिः ॥ ४०६ ॥
क्षणभङ्गि जगच्चोक्तं भङ्ग्यैवानया गिरा ।
सौगतस्यानुमीयेत वाग्देवी सत्यवादिनी ॥ ४०७ ॥
नित्यानन्दपदं श्रीदो देव एकान्तविग्रही ।
मिथ्यावादविजेत्री गीः श्वेतभिक्षोस्ततो जयः ॥ ४०८ ॥

---

१ H. सर्वं on the margin. २ H श्रीनी.

इति निश्चित्य ते तस्थुर्यावन्मौने सभासदः ।
तावत्कस्तूरिकां हस्ते कृत्वा बौद्धोऽब्रवीदिदम् ॥ ४०९ ॥
कस्तूरीउपगरह मोक्के प्राकृत ऊचिवान् ।
आचार्य उपकर्त्रीयं रजकस्येति विद्यताम् ॥ ४१० ॥
इति तत्प्रश्नसङ्केतादुत्तरेणाधरीकृते ।
तावद्रक्ताम्बरः सर्वानुमतः पक्षमब्रवीत् ॥ ४११ ॥
सर्वानुवादेनानूद्यततस्तत्पक्षदूषकान् ।
उदाजहार व्याहारान्प्रमाणिकपतिर्मुनिः ॥ ४१२ ॥
उत्तरादुत्तरं चैवमुक्तिप्रत्युक्तिरीतितः ।
षट् व्यतीयुस्तदा मासास्तयोर्विवदमानयोः ॥ ४१३ ॥
श्रीमानामनृपोऽन्येद्युरूचे सूरिं कदा प्रभो ।
व्यापातो राजकार्याणां वादः संपूरयिष्यते ॥ ४१४ ॥
तत आह तदाचार्यो वाग्विनोदसुखाय वः ।
इयत्कालं हि नश्चेतस्यासीदितिकृते प्रभो ॥ ४१५ ॥
बाधा व्यधायि यद्येषा भवतस्तद्विलोकय ।
प्रभाते निगृहीष्यामि विद्वन्मन्यं हि भिक्षुकम् ॥ ४१६ ॥
प्राग्दत्तं गुरुभिर्मन्त्रं परावर्त्तयतस्ततः ।
मध्यरात्रे गिरां देवी स्वर्गगावेणिमध्यतः ॥ ४१७ ॥
स्नाती तादृशरूपा च प्रादुरासीद्रहस्तदा ।
अहो मन्त्रस्य माहात्म्यं यद्देव्यपि विचेतना ॥ ४१८ ॥ युग्मम् ।
अनावृतशरीरां च सकृदीषद्ददर्श ताम् ।
सूरिः सूर्य्यादिवास्यं च परावर्तयतिस्म सः ॥ ४१९ ॥
स्वरूपं विस्मरन्ती च प्राह वत्स कथं मुखम् ।
विवर्त्तसे भवन्मन्त्रजापात्तुष्टाहमागता ॥ ४२० ॥
वरं वृणिवति तत्रोक्तो बप्पभट्टिरुवाच च ।
मातर्विसदृशं रूपं कथं वीक्षे तवेदृशम् ॥ ४२१ ॥
स्वां तनुं पश्य निर्वस्त्रामित्युक्ते स्वं ददर्श सा ।
अहो निबिडमेतस्य ब्रह्मव्रतमिति स्फुटम् ॥ ४२२ ॥
वीक्ष्य मामीदृशीं यन्न चेतोऽस्य विकृतिं ययौ ।
ध्यायन्तीति दृढं तोषात्तत्पुरः समुपस्थिता ॥ ४२३ ॥ युग्मम् ।
वरेऽपि निस्पृहे त्वत्र दृढं चित्रादुवाच च ।
गत्यागत्योर्ममत्वेच्छा त्वदीया निर्वृतो भव ॥ ४२४ ॥
ततः सूरिर्गिरां देवीं तुष्टुवे सुष्टुवाग्भरैः ।
वृत्तैरघनितेद्याद्यैश्चतुर्दशभिरद्भुतैः ॥ ४२५ ॥

इमां स्तुतिं सुवर्णाढ्यां कर्णकुण्डलरूपिणीम् ।
मानयंत्यतिसन्तोषाद्भारती वाचमूचुषी ॥ ४२६ ॥
वत्स किं पृच्छसीत्युक्ते सूरिरूचे विवाद्यसौ ।
सत्यं प्रज्ञावलाद्यल्पेद्विशानमथ ? किञ्चन ॥ ४२७ ॥
देवी प्राहामुना सप्तवारानाराधितास्म्यहम् ।
प्रदत्ता गुटिकाक्षय्यवचनास्य मया ततः ॥ ४२८ ॥
तत्प्रभावाद्वचो नास्य हीयते यतिनायक ।
सोपालम्भमिवाहासौ सूरिः श्रीश्रुतिदेवताम् ॥ ४२९ ॥
पुणासि प्रत्यनीकं किं शासनस्य जिनेशितुः ।
सम्यक् दृष्टि पुराम्नायात् शुश्रुवे भवती न तु ॥ ४३० ॥
सरस्वती पुनः प्राह माहं जैनविरोधिनी ।
उपायं तेऽर्पयिष्यामि यथासौ जीयते बुधः ॥ ४३१ ॥
सर्वेऽपि मुखशौचं ते विधाय श्रीपार्षदादयः ।
ततोऽस्य कार्य्यमाणस्य गण्डूषं मुञ्चतो मुखात् ॥ ४३२ ॥
भ्रष्टा चेद्गुटिकाऽवश्यं युष्माभिर्जितमेव तत् ।
चतुर्दशं पुनर्वृत्तं न प्रकाश्यं कदापि हि ॥ ४३३ ॥
यतस्तत्र श्रुतेः साक्षाद्भवितव्यं मया ध्रुवम् ।
कियतां हि प्रसीदामि निष्पुण्यानां मुनीश्वर ॥ ४३४ ॥
इत्युक्त्वान्तर्दधे देवी सूरिश्छन्नं जगौ पुरः ।
विशवाक्पतिराजस्य यदादिष्टं गिरा तदा ॥ ४३५ ॥
इत्यङ्गीकृत्य तेनाथ करकं नीरपूरितम् ।
समानाय्य सभा सर्वा वक्त्रशुद्धिं व्यधीयत ॥ ४३६ ॥
तत्कुर्वतोथ तस्यापि गुटिका पतिता मुखात् ।
भिक्षोरास्यजलैर्नुन्ना श्रीरिवापुण्यकर्मणः ॥ ४३७ ॥
अविश्रान्तमिथोवादाध्वन्याऽध्वन्यतया त[…]तः ।
श्रांता विश्राममिच्छन्ती मूकस्येवास्य गीः स्थिता ॥ ४३८ ॥
सदस्याश्च वचः प्रोचुर्गुटिकैव वचःक्षमा ।
अनेडमूक एवायं भिक्षुर[…]र्थनामभूः ॥ ४३९ ॥
जिग्ये श्रीवप्पभट्टिस्तं वादिकुञ्जरकेसरी ।
विरुदं जुघुषे राज्ञा जज्ञे जयजयारवः ॥ ४४० ॥
धर्मराज्यं गृहीतुं च स्ववलात्सार्द्धवैभवम् ।
तदाम उपचक्राम स्वं पणं कस्त्यजेज्जयी ॥ ४४१ ॥
उवाचाथ गुरुस्तस्य यदुक्तं वः पुरः पुरा ।
यद्राज्येन पणं चक्रे धर्म्मभूपोधिकृत्य नः ॥ ४४२ ॥

१ P. सप्तभवानाराधिता.

तत्तस्यैवाधिकाराय भविष्यति कदाचन ।
तदस्य वचसः कालो नृपनाथ समाययौ ॥ ४४३ ॥
इयं प्रमाणशास्त्राणां मुद्रा यल्लिखिते ततः ।
संबंधे निग्रहो नैव यत्पराजय एव सः ॥ ४४४ ॥
अस्य राज्यं तदस्यैव संतिष्ठतु यथास्थितम् ।
अनित्यभवहेतोः कः शास्त्रमुद्रां विलुंपति ॥ ४४५ ॥
गुरुभक्त्याभिरामोयमामोऽनिच्छुर्वेलादपि ।
धर्मे धर्मस्थितो राज्यमनुमेने प्रसादतः ॥ ४४६ ॥
तत आश्लिष्य बौद्धं तं सूरिर्वर्द्धनकुञ्जरम् ।
तदासन्ने गोपगिरौ श्रीवीरभवनेन यत् ॥ ४४७ ॥
श्रीमहावीरबिंबं स विलोक्य हृदि हर्षितः ।
शांतो वेष इति स्तोत्रं चक्रे प्रमुदितस्तदा ॥ ४४८ ॥
एवं स्तुत्वा जिनं स्वात्मनिंदके सौगतप्रभौ ।
सूरिर्जैनरहस्यानि तस्य प्रादर्शयत् पुरः ॥ ४४९ ॥
मिथ्यात्वगरलं हृत्वा पीयूषामलगीर्भरैः ।
परीक्षापूर्वमस्यापि तच्चित्ते धर्म आर्हतः ॥ ४५० ॥
निद्रानिद्राणचैतन्ये निशायामन्यदा गुरौ ।
प्रतिप्रहरमाह स ताथागतयतीश्वरः ॥ ४५१ ॥
चतुरक्षरनिष्पन्नं समस्यानां चतुष्टयम् ।
स चोत्स्वप्नायितेनेवापूरयत्सूरिपुंगवः ॥ ४५२ ॥
मन्दाक्रान्तापदैर्मदाक्रांतिक्षुण्णान्यतीर्थिकः ।
अपूरमपरैः सर्वप्रयत्नेनापि वाग्मिभिः ॥ ४५३ ॥ युग्मम् ।
( एको गोत्रे सर्वस्य द्वे स्त्रीपुंवच्च वृद्धो यूना समस्याः )
एको गोत्रे स भवति पुमान् यः कुटुंबं बिभर्ति
सर्वस्य द्वे सुगतिकुगती पूर्वजन्मानुबद्धे ।
स्त्री पुंवच्च प्रभवति यदा तद्धि गेहं विनष्टम्
वृद्धो यूना सह परिचयात्त्यज्यते कामिनीभिः ॥ ४५४ ॥
सम्यक्त्वं ग्राहितः सोथ द्वादशव्रतशोभितम् ।
आश्लेषपूर्वमापृच्छ्य स्वं स्थानं प्रययौ ततः ॥ ४५५ ॥
पूर्ववैरपरीहारात्संगतौ सोदराविव ।
अन्योन्यप्राभृतैस्तुष्टौ पुरं स्वं स्वं गतौ नृपौ ॥ ४५६ ॥
अन्यदा रहसि प्राह धर्मरूपं स सौगतः ।
विजिग्ये बप्पभट्टिर्मा न तत्क्षुण्णं मनस्यपि ॥ ४५७ ॥

---

१ J. स्थितौ.

यतो वाग्देवता तस्य यथोदितविधायिनी।
स्वयं वदति तद्देहे स्वप्ने जाग्रति वा स्थिता ॥ ४५८ ॥
परं वाक्पतिराजेन त्वद्राज्यपरिभोगिणा।
अस्मास्वपकृतं भूरि मुखशौचविधापनात् ॥ ४५९ ॥
इति श्रुत्वापि बौद्धे स छलवादात् श्लथादरः।
स्नेहं वाक्पतिराजेन गुणग्राह्ये मुमोच न ॥ ४६० ॥
यशोवर्मनृपो धर्ममन्यदा चाभ्यषेणयत्।
तस्माद्द्विगुणितं दत्तं भूपं युद्धेऽवधीद्बली ॥ ४६१ ॥
तदा वाक्पतिराजश्च बंदे तेन निवेशितः।
काव्यं गौडवधं कृत्वा तस्माच्च स्वममोचयत् ॥ ४६२ ॥
कन्यकुब्जे समागत्य संगतो बप्पभट्टिना।
स राजसंसदं नीतस्तुष्टुवे चेति भूपतिम् ॥ ४६३ ॥

तथाहि—

कूर्मः पादौ च यष्टिर्भुजगतनुलताभाजनं भूतधात्री
तैलोत्पूरः समुद्रः कनकगिरिरयं वृत्तवर्तिप्ररोहः।
अर्चिश्चंडांशुरोचिर्गगनमलिनिमा कज्जलं दह्यमाना
शत्रुश्रेणीपतंगोज्ज्वलतु नरपते त्वत्प्रतापप्रदीपः ॥ ४६४ ॥
चटच्चटिति चर्म्मणि छमिति चोच्छलिते शोणिते
धगद्धगिति मेदसि स्फुटरवास्थिष्वाकृतिः।
पुनातु भवतो हरेरमरवैरिनाथोरसि
क्वणत्करजपञ्जरक्रकचकाषजन्मानलः ॥ ४६५ ॥
पृथुरसि गुणैः कीर्त्या रामो नलो भरतो भवान्
महति समरे शत्रुघ्नस्त्वं सदैव युधिष्ठिरः।
इति सुचरितैः ख्यातिं बिभ्रच्चिरंतनभूभृतां
कथमसि न मांधाता देवत्रिलोकविजय्यपि ॥ ४६६ ॥
सन्मानातिशयो राज्ञा विदधे तस्य भूभृतः।
गंगां गेहागतां कोहि पूजयेदलसोपि न ॥ ४६७ ॥
मन्यते कृतकृत्यं स्वं स्वर्गनाथोपि वाक्पतिम्।
प्राप्य वाक्पतिराजं तु नाधिकोद्य किमस्त्यतः ॥ ४६८ ॥
त्यागाद्धर्मस्य माकार्षीर्मनस्यनुशयं सखे।
यद्गेहागतमत्पूजानाधानात्सोवत? स्थितिः ॥ ४६९ ॥
तवाधीनमिदं राज्यं विचिन्त्य सुखमास्व तत्।
श्रीबप्पभट्टेर्मम च तृतीयस्त्वं महामते ॥ ४७० ॥

---

१ H बला P. भस्त्र. २ P रामौ. ३ H श्राय. ४ P नाधिकोद्य किमस्त्यतं.

इत्यामराजव्याहारामृतसारपरिप्लुतः ।
गंगोदक इव स्नातः प्रीतिपावित्र्यमाप सः ॥ ४७१ ॥
सहैवोत्थाय तत्रासौ नृपमित्रेण सूरिणा ।
उपाश्रयमनुप्राप्यातिष्ठत्परमया मुदा ॥ ४७२ ॥
गौडबंधो मद्रमहीविजयश्चेति तेन च ।
कृता वाक्पतिराजेन द्विशास्त्रीकवितानिधिः ॥ ४७३ ॥
बौद्धकारिततद्वेषापोषके धर्मभूपतौ ।
सर्वत्र गुणिनः पूज्या गुरुरित्याह तत्पुरः ॥ ४७४ ॥
वृत्तौ कृतं हेमटंकलक्षं तद्विगुणीकृतम् ।
नृपेणासौ महासौख्यात् कालं गमयतिस्म सः ॥ ४७५ ॥
युग्मम् ।
सभायामन्यदा राजा सुखासीनं गुरुं प्रति ।
प्राह न त्वत्समो विद्वान् स्वर्गेपि किमु भूतले ॥ ४७६ ॥
गुरुराह पुराभूवन् पूर्वे ते जैनशासने ।
श्रुतज्ञानमहांभोधेर्येत् प्रज्ञा पारदृश्वरी ॥ ४७७ ॥
शतं सहस्रलक्षं वा पदानामेकतः पदात् ।
अवगच्छंति विद्वांसोऽभूवन् केथाधिका अपि ॥ ४७८ ॥
ऐदंयुगीनकालेपि संति प्रज्ञाबलाद्भुताः ।
येषामहं नवाप्नोमि पादरेणुतुलामपि ॥ ४७९ ॥
अस्मदीयगुरोः शिष्यौ खेटकाधारमंडले ।
विद्येते नन्नसूरिः श्रीगोविंदसूरिरित्यपि ॥ ४८० ॥
यत्पुरो बठरत्वेन ? तत्र स्थितिमनिच्छतः ।
शृंगाराय भवत्सख्यं विदेशावस्थितेर्मम ॥ ४८१ ॥
इति वाचा चमत्कारं धारयन्नब्रवीन्नृपः ।
भवद्वचं प्रतीतोपि प्रेक्षिष्ये कौतुकं हि तत् ॥ ४८२ ॥
ततो वेषपरावर्त्तप्राप्तो गुर्जरमंडले ।
पुरे हस्तिजये जैनमंदिरस्य समीपतः॥ ४८३ ॥
उपाश्रयस्थितं भव्यकदंबकनिषेवितम् ।
राजानमिव सच्छत्रं चामरप्रक्रियान्वितम् ॥ ४८४ ॥
सिंहासनस्थितं श्रीमन्नन्नसूरिं समैक्षत ।
उत्तानहस्तविस्तारसंज्ञयाह किमप्यथ ॥ ४८५ ॥
एतद्विलोक्याचार्योपि मध्यमातर्जनीद्वयम् ।
पुरस्तस्य वितस्तार शृंगाकारेण तत्र च ॥ ४८६ ॥
इत्युत्थाय गते तत्र जनैः पृष्टमिदं किमु ।
ततः प्रापंचयत्सूरिः कोपि विद्वानसौ पुमान् ॥ ४८७ ॥

पृच्छतिस्म यतीनां किं राज्यलीला यतो ? मया ।
इत्युत्तरं ददौ शृंगे भवतो भूपतेः किमु ॥ ४८८ ॥
निविष्टमन्यदा चैत्ये शास्त्रं वात्स्यायनाभिधम् ।
व्याख्यातं प्रेक्ष्य तं भूपो नमस्कृत्य जिनं ययौ ॥ ४८९ ॥
ननाम न गुरुं कामशास्त्रव्याख्यानतः स च ।
विद्वानेष न चारित्री गुरुरित्थं विकल्पितः ॥ ४९० ॥
परिज्ञातेथ तत्तत्त्वे खेदं दध्रे स कोविदः ।
धिग्वैदग्ध्यं हि नो निर्यदपकीर्तिकलंकितम् ॥ ४९१ ॥
श्रीगोविंदाः शशासैनं खिद्यसे किं वचः शृणु ।
आमभूपतिरेवायं गुप्तो नापर ईदृशः ॥ ४९२ ॥
ततः किंचिद्धर्मशास्त्रं विधायातिरसोज्ज्वलम् ।
पार्श्वान्नटस्य कस्यापि बप्पभट्टिप्रभोः पुरः ॥ ४९३ ॥
प्रेषयैतद्यथा तत्राभिनामयति तत्पुरः ।
तत्रापरिरसावेशं सोनुभूय प्रभोक्षते ॥ ४९४ ॥
तथेति प्रतिपद्याथ कृत्वा तच्च नटोत्तमान् ।
प्रैषयच्छिक्षितान्सम्यक् प्रापदामपुरं च सः ॥ ४९५ ॥
अमिलद्बप्पभट्टेश्च तेन राज्ञोऽथ दर्शितः ।
आदितीर्थकृतो वृत्तमभिनिन्ये सकु(ना)तनम् ॥ ४९६ ॥
विहितं संधिबंधेन रसाय नन्नसूरिणा ।
तत्कथां प्रथयन् नृत्यन्नाह प्राकृतरूपकम् ॥ ४९७ ॥ युग्मम् ।
कञ्चणक्कु सुचिपक्कु सुगिरिवे ञक्कुविट्ठावहे
श्रीबप्पभट्टिराहेदमद्भुतं रूपकद्वयम् ।
नर्मवर्मणि तत्रापि नटो व्यावृत्य तत्पुरे ॥ ४९८ ॥
आगत्य तथ्यमाचख्यौ नन्नाचार्यकवेः पुरः ।
नैतद्ग्राम्यमिदं कार्यमिति संचिंत्य हर्षतः ॥ ४९९ ॥
ततो रूपं परावृत्य स सिद्धगुटिकादिभिः ।
प्रतस्थे कन्यकुब्जेथ सह गोविंदसूरिणा ॥ ५०० ॥
प्राप्तोऽथ मिलितो बप्पभट्टेः पट्टेश्वरस्य च ।
राजपर्षदि नृत्यंश्च रसं वीरं वितेनिवान् ॥ ५०१ ॥
तद्ध्यानैकमनाभूय चकर्ष क्षुरिकां निजाम् ।
मारिमारीति शब्देन नदन् सिंह इव क्रुधा ॥ ५०२ ॥

---

१ H P ततो. २ D धिग्वै दुग्धं हिनो निर्यपद०. ३ P H तत्पुरोः, D व्यावृत्तन्वित्पुरे.

अंगरक्षैस्ततो नाट्यमिदमित्थं निवारितः ।
चैतन्यै संगतः पश्चात्प्रतिबद्धो गुरूक्तिभिः ॥ ५०३ ॥
आह गोविंदसूरिस्तद्भूप युक्तं कथं कृतम् ।
केनापि न परं शास्त्ररसः सर्वोनुभूयते ॥ ५०४ ॥
ततो वात्स्यायने व्याख्यायमाने नन्नसूरिणा ।
सविकल्पो मनीषी त्वमन्यः को न विकल्पयेत् ॥ ५०५ ॥
लक्षितेन ततो राज्ञा क्षमितौ कोविदाधिपौ ।
सत्यं तद्वचनं बाढं यदूचे सुहृदा मम ॥ ५०६ ॥
संयमेन तु शीलेन वृत्त्या विद्वत्तया तथा ।
तद्गुरुभ्रातरौ पूज्यौ भ्रान्तिर्मे क्षम्यतामिति ॥ ५०७ ॥
इत्याकर्ण्य ततः प्रोचे श्रीमद्गोविंदसूरिणा ।
तपो न नः कलंक्येत त्वयि वृत्तानि पश्यति ॥ ५०८ ॥
यतः—भवन्तु ते दोषविदः शिवाय विशेषतस्तेह शिवैकनिष्ठाः ।
येषां प्रभावादपवादभीता गुणार्जनोत्साहपरा नराः स्युः ५०९
तथा—जे चारित्तिहि निम्मला ते पंचायणसीह
विसयकसाइहि गंजियानाहं फुसिज्जइली ह
ताहं फुसिज्जइलीह इच्छेतनुसल्लिषालह ॥ ५१० ॥
ते पुणविसयपिसाय बलियगय करिणिहि
बालहते पंचायण सीह सत्ति उज्वलनियकित्तिहिं
ते नियकुलनहयलमयंकनिम्मलचारित्तिहि जेचारित्तिहि५११
श्रुत्वेति नृपतिस्तेषामुवाच सुहृदं गुरुम् ।
धन्योहमेव यस्याभूद्गुरोः कुलममूदृशम् ॥ ५१२ ॥
राज्ञाथ स्थापितौ तत्र दिनान्यथ कियंत्यपि ।
व्यापृच्छ्य बप्पभट्टिं तावागतौ स्वंभुवं[1] ततः ॥ ५१३ ॥
धर्मव्यंख्या(र्मख्यान)सदाख्यानाख्यानप्रश्नोत्तरादिभिः ? ।
कियानपि ययौ कालः समुदोः सुहृदोस्तयोः ॥ ५१४ ॥
आययावन्यदा वृंदं गायनांतावसायिनाम् ।
अवः स्वादिमहानादरसनिर्जिततुंबरुः ॥ ५१५ ॥
तत्रैका किन्नरी साक्षान्मातंगी गीतभंगिभिः ।
राजानं रंजयामास रूपादपि रसादिभिः ॥ ५१६ ॥
प्रवाह्य प्रतिपक्षस्य राज्ञो रागद्विपन् जयी ? ।
चित्तवृत्तिमहापुर्यामवस्कंदं ददौ तदा ॥ ५१७ ॥
वास्तव्यानीन्द्रियाण्यस्य वहिर्भीत्येव निर्ययुः ।
तैरेव प्रेरितो राजा वासं वहिरचीकरत् ॥ ५१८ ॥

1 H. स्वभुवं.

उवाच च—

वक्त्रं पूर्णशशी सुधाधरलता दन्ता मणिश्रेणयः
कान्तिः श्रीर्गमनं गजः परिमलस्ते पारिजातद्रुमाः ॥
वाणी कामदुघा कटाक्षलहरी तत्कालकूटं विषम्
तत्किं चंद्रमुखि त्वदर्थममरैरामंथि दुग्धोदधिः ॥ ५१९ ॥
अन्तश्चरेभ्यो विज्ञातवृत्तान्तः सूरिरप्यथ ।
दध्यौ स सादिनो दोषो यदश्वो विपथं व्रजेत् ॥ ५२० ॥
आमभूपे विमार्गस्थे विश्वप्रकृतिषु ध्रुवम् ।
अपकीर्तिः कलंकोयं ममैवासंजति स्फुटः ॥ ५२१ ॥
तदुपायाद्विनेयोसाविति ध्यात्वा बहिर्गृहे ।
ययौ विलोकनव्याजात्कामार्त्तैरौषधं स्मरन् ॥ ५२२ ॥
नव्येषु पट्टशालायाः पट्टेषु खटिनीदलैः ।
काव्यानि व्यलिखद्बोधबंधुराणि ततो गुरुः ॥ ५२३ ॥ युग्मम् ।

तथाहि—

शैत्यं नाम गुणस्तवैव तदनु स्वाभाविकी स्वच्छता
किं ब्रूमः शुचितां व्रजन्ति शुचयः संगेन यस्यापरे ।
किं वातः परमस्ति ते स्तुतिपदं त्वं जीवितं देहिनाम्
त्वं चेन्नीचपदेन गच्छसि पयः कस्त्वां निषेद्धुं क्षमः ॥ ५२४ ॥
सद्वृत्तसद्गुणमहार्घ्यमहार्हकांतकांताघनस्तनतटोचितचारुमूर्त्तिः ।
आः पामरीकठिनकंठविलग्नभग्नहाहारहारितमहो भवता गुणित्वम् ॥

उप्पहजायाए असोहरीइ फलकुसुमपत्तरहियाए ।
बोरीइं च इदितो भोभो पामरनलज्जिहसि ॥ ५२६ ॥
मायंगी सत्तमणस्समेइणि तहपभुजमाणस्स ।
अभिमडइ मुष्मनायावभोकानइद्धम्मस्स ॥ ५२७ ॥
लवि जइ जेण जणे मइलिघ इनियकुलक्कमो जेण ।
कंठढ्ढिपहिजीवे मासुंदरतं कुणिघासु ॥ ५२८ ॥
जीयं जलबिंदुसमं संपत्ती उत्तरंगलोला ।
उसिविणयसं वपिम्मंजं जाणहतं करिद्याहु ॥ ५२९ ॥
लिखित्वा स्वाश्रयं प्राप वप्पभट्टिप्रभुर्मुदा ।
द्वितीयेहनि भूपोपि तत्सद्म प्रेपितुं ययौ ॥ ५३० ॥
अवाचयच्च वाक्यानि हल्लेखीनि यथा यथा ।
तथा तथा भ्रमोऽनेशद्दुग्धाद्धत्तूरमोहवत् ॥ ५३१ ॥
अथान्वतप्यत श्रीमानामः श्याममुखाम्बुजः ।
व्यमृशच्च विना मित्रं कोन्य एवं हि बोधयेत् ॥ ५३२ ॥

१ H पामर.

इदानीमहमप्रेक्ष्यं स्वमास्यं दर्शये कथम् ।
तस्य व्यथाकरं विश्वप्राणिनां दोषकारणम् ॥ ५३३ ॥
सांप्रतं मे बृहद्भानुरेव शुद्धिं विधास्यति ।
कलंकपंकिलं त्याज्यमेवास्माकं हि जीवितम् ॥ ५३४ ॥
इति ध्यात्वा स तत्रैवादिशत्प्रेष्यांश्चिताकृते ।
अनिच्छंतोपि भूपालादेशं तत्र व्यधुर्बलात् ॥ ५३५ ॥
राजलोक इदं ज्ञात्वा पूच्चक्रे करुणस्वरम् ।
राजमित्रगुरोरग्रे तेनासौ तत्र जग्मिवान् ॥ ५३६ ॥
उवाचाथ गुरुर्भूपप्रारब्धं स्त्रीजनोचितम् ।
किमिदं विदुषां निंद्यं ततो राजाह तत्पुरः ॥ ५३७ ॥
मम प्रच्छन्नपापस्य मालिन्ये मनसा कृते ।
स्वदेहत्याग एवास्तु दंडो दुःकृतनाशनः ॥ ५३८ ॥
यथा दुःकृतिलोकस्य वयं दंडमकृष्महि ।
तथा स्वस्यापि किं नैव कुर्मः कर्मछिदा कृते ॥ ५३९ ॥
गुरुराह स्मितेनाथ विमृश त्वं हि चेतसा ।
निबद्धं कर्म चित्तेन चित्तेनैव विमोच्यते ॥ ५४० ॥
स्मार्त्तानार्त्त(र्त्ति)भिदे पृच्छ प्रायश्चित्तानि पाप्मनाम् ।
यतः स्मृतिषु सर्वेषां मोक्ष ऊचे मनीषिभिः ॥ ५४१ ॥
वेदान्तोपनिषत्तत्वश्रुतिस्मृतिविशारदाः ।
तत्राहूयंत भूपेन सूपेन न्यायनाकिनः ॥ ५४२ ॥
यथावृत्तं मनःशल्यं जगदे तत्पुरस्तदा ।
ततस्ते स्मृतिवाचालास्तथ्यं शास्त्रानुगं जगुः ॥ ५४३ ॥
आयसीं पुत्रिकां वह्निध्मातां तद्वर्णरूपिणीम् ।
आश्लिष्यन्मुच्यते पापाच्चांडालीसंगसंभवात् ॥ ५४४ ॥
श्रुत्वेति भूपतिः कारयित्वा तां कथितक्रमात् ।
आनाय्य तत्र सज्जोभूत्तदालिंगनहेतवे ॥ ५४५ ॥
वेगादागत्य पांचालीमाश्लिष्यंस्तां स्वसिद्धये ।
पुरोधोबप्पभट्टिभ्यां भूपतिर्भुजयोर्धृतः ॥ ५४६ ॥
आह श्रीबप्पभट्टिश्च स्थिराधार स्थिरो भव ।
मा कोटिभरमात्मानं नाशयेथा मुधा सखे ॥ ५४७ ॥
उक्तश्चैकाग्रचित्तेन साहसानन्यवेश्मना ।
भवता कर्मवित्तेन बद्धमुन्मोचितं त्वया ॥ ५४८ ॥
अस्य पापस्य मुक्तोसि कृष्णाभ्रादिव भास्करः ।
द्योतिष्यसे सतामंतर्मुंच तत्कर्म दुष्करम् ॥ ५४९ ॥

आनंदितः प्रभोर्वाग्भिरिति तत्याज कुग्रहम् ।
इति ज्ञाते च हर्षोत्र पुनर्जात इवाभवत् ॥ ५५० ॥
अमात्यैर्नगरे तत्र सर्वर्द्ध्यालंकृते कृते ।
गजगंधर्वसंदोहरथ्यापादातिसंवृतः ॥ ५५१ ॥
पट्टहस्तिशिरस्थानाग्रासनस्थे मुनीश्वरे ।
रोमगुच्छातपत्रादिप्रक्रियाप्रकटप्रभे ॥ ५५२ ॥
प्रविवेश विशामीशः स्वयं श्रीशयशःश्रिया ।
सुराणामप्यपूर्वेण पुरमत्युत्सवेन सः ॥ ५५३ ॥

त्रिभिर्विशेषकम् ।

इतो वाक्पतिराजश्च तं दृष्ट्वा राजवैकृतम् ।
निर्बन्धान्नृपमापृच्छ्य वैराग्यान्मथुरां ययौ ॥ ५५४ ॥
धर्माख्यावसरेऽन्येद्युः प्रभुर्भूपालमूचिवान् ।
धर्मतत्वानि पार्षद्यमानितानि विवृत्य सः ॥ ५५५ ॥
नवनीतसमं विश्वधर्माणां करुणानिधिम् ।
संत्याज्यमार्हतं धर्मं परीक्षापूर्वकं श्रय[1] ॥ ५५६ ॥
राजा प्राहार्हतो धर्मो निर्वहत्येव मादृशाम् ।
परीक्षायाः परं शैवधर्मे चेतो लगेद्दृढम् ॥ ५५७ ॥
त्वदुक्तो नीरमानेष्ये कुंभेनामेन रंगतः ।
परं मा माममुं धर्मं त्याजयिष्यसि सौहृदात् ॥ ५५८ ॥
न मुंचे पैतृकाचारं वच्मि किंचिच्च व. पुरः ।
चेद्रोषं नहि धत्तात्र गुरुरोपाद्विभीश्रिये[2] ॥ ५५९ ॥
ब्रूतेथ गुरुणा प्रोक्ते नृपः प्राह स्मितं दधत् ।
बोधयेयुर्भवन्तोपि बाला गोपांगनादिकम् ॥ ५६० ॥
कोविदं नैव शास्त्रार्थपरिकर्मितधीसखम् ।
रंभाफलं यथा भक्ष्यं तथा निंबफलं न तु ॥ ५६१ ॥
शक्तिश्चेद्भवतामद्य मध्येमथुरमागतम् ।
पुराणपुरुषं नित्यं चित्ते ध्यायंतमद्भुतम् ॥ ५६२ ॥
यज्ञोपवीतवीतांगं नासाग्रन्यस्तदृष्टिकम् ।
तुलसीमालया लीढवक्षःस्थलमिलास्थितम् ॥ ५६३ ॥
श्रीकृष्णगानसत्कृष्णवैष्णवब्राह्मणावृतम् ।
पुत्रजीवकमालाभिर्मंडितोरःस्थलं किल ॥ ५६४ ॥
वराहस्वामिदेवस्य प्रासादांतरवास्थितम् ।
वैराग्यातिशयात्तत्र कृतप्रायोपवेशनम् ॥ ५६५ ॥

1 D धिः 2 P प्रभुणा. 3 P बाल.

प्रतिबोध्य तदा जैनमते स्थापयत द्रुतम् ।
वाक्पतिराजसामंतं पर्यंकासनसुस्थितम् ॥ ५६६ ॥

पंचभिः कुलकम् ।

तैश्चाभ्युपगतेऽशीतिं चतुर्भिरधिकां तदा ।
सामंतानां बुधानां च सहस्रं प्रैषयन्नृपः ॥ ५६७ ॥
आचार्यैः सह ते प्रापुस्त्वरितं शीघ्रवाहनैः ।
मथुरां तत्र चाजग्मुर्वराहस्वामिमंदिरे ॥ ५६८ ॥
पूर्वाख्यानोदितावस्थं परमात्मस्थचेतनम् ।
ददृशुः सूरयो भूभृत्पुमांसश्च तमादरात् ॥ ५६९ ॥
तत्र श्रीवप्पभट्टिश्च त्रयीस्तवनतत्परम् ।
काव्यवृंदमुदाजह्रे तस्य चेतः परीक्षितुम् ॥ ५७० ॥

तथाहि—

रामो नाम बभूव हुं तदबला सीतेति हुं तां पितु-
र्वाचा पंचवटीवने विचरतस्तस्याहरद्रावणः ।
निद्रार्थं जननीकथामिति हरेर्हुं कारिणः शृण्वतः
पूर्वस्मर्तुरवंतुकोपकुटिलभ्रूभंगुरा दृष्टयः ॥ ५७१ ॥
दर्प्पणार्पितमालोक्य मायास्त्रीरूपमात्मनः ।
आत्मन्येवानुरक्तो वः श्रियं दिशतु केशवः ॥ ५७२ ॥
उत्तिष्ठन्त्या रतांते भरमुरगपतौ पाणिनैकेन कृत्वा
धृत्वा चान्येन वासो विगलितकबरीभारमंसे वहंत्याः ।
सद्यस्तत्कायकांतिद्विगुणितसुरतप्रीतिना शौरिणा वः
शय्यामालिंग्य नीतं वपुरलसलसद्बाहु लक्ष्म्याः पुनातु॥५७३॥
संध्या यत्प्रणिपत्य लोकपुरतो बद्धांजलिर्याचते
धत्से यत्त्वपरां विलज्ज शिरसा तच्चापि सोढं मया ।
श्रीर्जातामृतमंथने यदि हरेः कस्माद्विषं भक्षितम्
मां स्त्रीलंपट मा स्पृशेत्यभिहितो गौर्या हरः पातु वः॥५७४॥
यदमेध्यमपामंतरुप्तं बीजमज त्वया ।
अतश्चराचरं विश्वं प्रभवस्तस्य गीयसे ॥ ५७५ ॥
कुलं पवित्रं जननी कृतार्था वसुंधरा पुण्यवती त्वयैव ।
अबाह्यसंवित्सुखसिंधुमग्नं लग्नं परे ब्रह्मणि यस्य चित्तम् ॥५७६॥
स कर्णकटुकं तच्च श्रुत्वा शीर्षं व्यधूनयत् ।
आकूण्य नासिकां वाचं प्राहाथो दुर्मनायितः ॥ ५७७ ॥

---

१ H रदतु ····भुंगुरी. २ D चेत·

अमीषां रसकाव्यानां प्रशंसायांश्च[1] किं सखे ।
अ(इ)यं वेला कथं नाम सौहार्दं तव चेदृशम् ॥ ५७८ ॥
इदं च श्रीबप्पभट्टिसदृशं भवतीह किम् ।
पारमार्थिकवाणीभिर्बोधवेला ममाधुना ॥ ५७९ ॥
ततः प्राह गुरुः साधु साधु ते चेतनां स्तुमः ।
प्रष्टव्यमस्ति किंचित्तु भवत्पार्श्वे सुहृत्तम ॥ ५८० ॥
देवानां यन्मयाख्यायि स्वरूपं भवदग्रतः ।
तत्तथ्यं वितथं नास्ति तथ्यं चेदुर्मनाः कथम् ॥ ५८१ ॥
वितथं च कथं तत्स्यात्प्रत्यक्षे संदिहानकः ।
अत्र कार्ये प्रवृत्तिस्ते राज्यादीच्छावशादिह ॥ ५८२ ॥
परमोर्थोपलंभे वा[2] विकल्पः प्रथमो यदि ।
संमतं नस्तदा राज्ञा देवा भूपतयोपि च ॥ ५८३ ॥
इष्टं प्रणयिनां दद्युः सामर्थ्यात्संशयोपि न ।
परमार्थे तु चेदिच्छा तत्त्वं तत्त्वं विचारय ॥ ५८४ ॥
संसारोपाधिमग्नैश्चेत्सुरैर्मुक्तिः प्रदीयते ।
तन्नात्र मत्सरोस्माकं स्वयं निखिलवेधसि ॥ पंचभिः कुलकम् ।
श्रुत्वेति सद्गुरोर्वाचं पंकापनयवारिमां ।
अवलेपो ययौ तस्य हिक्काकस्माद्भयादिव ॥ ५८५ ॥
अहो पुण्यपरीपाको मम यत्सूनृतः सुहृत् ।
संगतोवसरेमुत्र तत्र चोपकृतिं कुरु ॥ ५८६ ॥
इत्युक्त्वा विरते दत्तावधाने वाक्पतौ प्रभुः ।
धर्मदेवगुरूणां च तत्वान्याख्यात्तदग्रतः ॥ ५८७ ॥ युग्मम् ।

त्रैकाल्यं द्रव्यषट्कं नवपदसहितं जीवषट्कायलेश्याः
पंचान्ये चास्तिकायाव्रतसमितिगति[3]ज्ञानिचारित्रभेदाः ।
इत्येतन्मोक्षमूलं त्रिभुवनसहितैः प्रोक्तमर्हद्भिरीशैः
प्रत्येति श्रद्दधाति स्पृशति च मतिमान् यः स वै शुद्धदृष्टिः ५८८

अथ देवतत्वम्—

अर्हन् सर्वार्थवेदी यदुकुलतिलकः केशवः शंकरो वा
बिभ्रद्वौरीं शरीरे दधदनवरतं पद्मजन्माक्षसूत्रम् ।
बुद्धो बालं कृपालुः प्रकटितभवनो भास्करः पावको वा
रागाद्यैर्यो नदोषैः कलुषितहृदयस्तं नमस्यामि देवम् ॥ ५८९ ॥

---

१ P प्रशंसाया. २ P पलं ते वा विकल्पः प्रथमोपमो. ३ H omits गतिज्ञानि......मति.

यत्र तत्र समये यथा तथा योसि सोस्यभिधया तया ।
वीतदोषकलुषः स चेद्भवानेक एव भगवन्नमोस्तु ते ॥५९०॥
मदेन मानेन मनोभवेन क्रोधेन लोभेन च संमदेन ।
पराजितानां प्रसभं सुराणां वृथैव साम्राज्यरुजा परेषाम् ५९१
प्राइं मुणिहि विभ्रंतडीति मणिअडागणंति ।
अखयनिरंजणि परमपइ अज्जवि तनुनलहंति ॥ ५९२ ॥

अथ गुरुतत्त्वम्—

पंचमहव्व येन्नातु पंचपरं परेमेठिहिं भजउ ।
पंचेंदिय निग्गहणु पंचविसयहुं विरत्तउ ॥ ५९३ ॥
पंच समिध्वनि वहुणुपगुणुगुणु आगमसच्छिण ।
कुविहिकुगह परिहरइ भविय वोहइ परमच्छिण ॥ ५९४ ॥
वालीसदोससुद्धासणि णछविह जीवह ।
अमयकरु निम्मच्छरु केसरिकहइ फुडुत्तिगुत्ति ॥ ५९५ ॥
गुत्रुसोमभ्भगुरु कुरकी संबलचन्नधणनिम्बवलंवि ।
अहरूछापहाकहविगवेसि गुरु ते तारणहसम्मच्छा ॥ ५९६ ॥
दोविगिहच्छा धडहडभ्मव्वइं कोकिर कसय ।
श्रुभणियइ सारंभो सारंभं पुज्जइ कहसुकइयेण किमसुम्महि ॥
इत्यादि सद्गुरोर्वाक्यैः प्राणितो हृदयंगमैः ।
ध्यानं प्रपार्य पप्रच्छ किंचित्संदेग्धि मे मनः ॥ ५९८ ॥
अनंताः प्राणिनो मुक्तिं यदि प्राप्ता नृलोकतः ।
रिक्तो भवेत्स पूर्णत्वान्मुक्तौ स्थानं च नास्ति तव् ॥ ५९९ ॥
गुरुराह महासत्व ज्ञातजैनगिँरामयम् ।
आलापं शृणु दृष्टांतमत्र श्राव्यं विपश्चिताम् ॥ ६०० ॥

तथाहि—

आसंसारं सरियासपहि हीरं तरेणु निवहि हिम् ।
प्रहवीननिद्धियच्चिय उदही विपलीन संजाउ ॥ ६०१ ॥
उल्लसत्पुलकांकुरोदूरीकृतकुवासनः ।
प्राह वाक्पतिराजोथ राजा यो ब्रह्मवेदिनाम् ॥ ६०२ ॥
इयन्तं समयं यावद्भ्रान्ताः स्मो मोहलीलया ।
परमार्थपरामर्शिधर्मतत्त्वबहिष्कृताः ॥ ६०३ ॥
चिरं परिचयः पूज्यैस्तादृशैरपि मेऽफलः ।
एतावन्ति दिनान्यासीद् धर्माख्यानविनाकृतः ॥ ६०४ ॥

१ D यज्जुत्तं. २ P पंचपरं मिद्धिदिमत्तनु. ३ D समिहनिवहणुयगुणु आगमप्रसिणा. ४ H ज्ञाते जैनगिरा. ५ H दूरीकृत कुचीरान्.

उक्तश्च तेन—

मेयनाहि कलुसिएणं इमिणा किंकरफलं निडालेण।
इच्छामि अहं जिणवर पणामकिणकलुसियं काउं ॥ ६०५ ॥
मुमुक्षोर्मम यत्प्राय औचित्यं न विलंघयेत्।
तदादिश यथादिष्टं विदधे कर्मनाशकम् ॥ ६०६ ॥
श्रीबप्पभट्टिराहाथ शंका चेत्कर्मणां तव।
मनःशुद्धिस्ततः कार्या व्यवहारोऽपि तादृशः ॥ ६०७ ॥
ततः संन्यस्त एव त्वं जैनमार्गं समाश्रय।
श्रुत्वेति तैः सहैवास उदस्थाद्भवनात्ततः ॥ ६०८ ॥
आजगामाथ पार्श्वेऽस्य स्तूपे श्रीपार्श्वमन्दिरे।
मिथ्यादर्शनवेषं च व्यमुंचत् स्वीकृतं पुरा ॥ ६०९ ॥
जैनर्षिवेषमास्थाय संयमावारशिष्यकः।
संसारचरमप्रत्याख्यानी ध्यानैकतानभृत् ॥ ६१० ॥
अष्टादश तदा पापस्थानान्युत्सृज्य सर्वतः।
चतुःशरणमादध्यौ निर्धूतांतरकल्मषः ॥ ६११ ॥
प्रशंसागर्हणे प्रोच्य सुकृतासुकृते व्यधात्।
परमेष्ठिपदाधीनमानसो मानशोषभूः ॥ ६१२ ॥
दिनान्यष्टादश प्रायमुपायं दुष्कृतार्दने।
एकावतारांतरितो महानंदपदस्तदा ॥ ६१३ ॥
सम्यगाराधनोपात्तपांडित्यमृतिरीतितः।
देहमुग्ध्यां गतः साम्यं प्राप प्राचीनबर्हिषा ॥ ६१४ ॥ युग्मम् ॥
ततः किंचित्सखिस्नेहगद्गदः शमिनायकः।
उवाच विश्वसामंतविद्वद्वृंदस्य शृण्वतः ॥ ६१५ ॥

तथाहि—

यइ सग्गगए सामंतराय अवरत्ते उन फिट्टिहइ।
पढमं चियवरिय पुरंदराय सग्गस्स लच्छीए ॥ ६१६ ॥
तत्र गोकुलवासेऽस्ति पुरा नंदनिवेशिते।
श्रीशांतिः शांतिदेवीह हेतुर्विश्वस्य शांतिके ॥ ६१७ ॥
तत्र श्रीबप्पभट्टि श्रीतीर्थेश्वरनमस्कृतौ।
गत्वा च तुष्टुवे शांतिदेवतासहितं जिनम् ॥ ६१८ ॥
जयति जगद्रक्षाकर इत्याद्यं शांतिदेवतास्तवनम्।
अद्यापि वर्त्तते तच्छांतिकरं सर्वभयहरणम् ॥ ६१९ ॥

१ H omits किंकरफलंनिडालेण. २ H. चिरह. ३ P. देहमुग्‌यांगतः. ४ P. स्नेहगद्गदः. ५ H. सामंतः. ६ P. पयडमाण.

ततः सामाजिकस्तोमस्तुतो व्यावृत्य संययौ।
कन्यकुब्जपुरं बप्पभट्टिः कतिपयैर्दिनैः॥ ६२०॥
पुरापि ज्ञातवृत्तान्तो नृपतिर्गूढपूरुषैः।
संमुखीनः पुरोपांतं गत्वा प्रावेशयद्गुतम्॥ ६२१॥
गुरुं सभोपविष्टं च प्राह भूपश्चमत्कृतः।
अहोचोवाच सामर्थ्यं सोपि यत् प्रतिबोधितः॥ ६२२॥
प्रभुः प्राह च का शक्तिर्मम यत् त्वं न बुध्यसे।
राजाह सम्यग् बुद्धोस्मि त्वद्धर्मोस्तीति निश्चितम्॥ ६२३॥
माहेश्वरं पुनर्धर्मं मुंचतो मे महाव्यथा।
तत्प्राच्यभवसंबद्ध इवार्य किं करोम्यतः॥ ६२४॥
श्रुतज्ञाननिमित्तेन ज्ञात्वा प्रभुरुवाच च।
तत्र प्राक्कृतकष्टस्य राज्यमल्पतरं फलम्॥ ६२५॥
सविस्मयैस्तदा पर्षत्प्रधानैरौच्यत प्रभुः।
प्रसह्य कथ्यतां राज्ञः प्राग्भवोस्मत्प्रबुद्धये॥ ६२६॥
प्रभुराह ततः सम्यग् विमृशेति यथातथम्।
प्रश्नचूडामणे शास्त्रादस्तार्थज्ञानशेवधिः[1]॥ ६२७॥
शृणु भूमिपते कालिंजराख्यस्य गिरेरधः।
शालिशालद्रुमोर्द्धस्थशाखाबद्धपदद्वयः[2]॥ ६२८॥
अधोमुखो जटाकोटिसंस्पृष्टपृथिवीतलः।
द्वन्हे द्वन्हे मिताहाराद् हारी क्रोधादिविद्विषाम्॥ ६२९॥
इति वर्षशतं साग्रं तपस्तप्त्वातिदुष्करम्।
आयुःप्रान्ते तनु त्यक्त्वाऽभवस्त्वं भूपनायकः॥ ६३०॥
यदि न प्रत्ययो राजन् प्रेषय प्रवरान् नरान्।
जटा अद्यापि तत्रस्था आनायय तरोस्तलात्॥ ६३१॥
इत्याचार्यकथास्मेरो नृपतिः प्रेष्य मानुषान्।
जटा अनाययत्तत्र गत्वा नीताश्च तास्ततः॥ ६३२॥
मुनीन्द्रोयं महाज्ञानी कलावपि कलानिधिः।
भूपालः कृतपुण्योऽसौ यस्येदृग्गुरुरद्भुतः॥ ६३३॥
पार्षद्या धूतमूर्द्धानस्तद्वृत्तोल्लासशंसिनः।
पर्युपास्तिं दधुः सूरिपादांतभ्रांतमौलयः॥ ६३४॥
अन्यदा सौधमूर्द्धस्थो नृपः कुत्रापि वेश्मनि।
कलहांतरितां रामां भिक्षायै गृहमागताम्॥ ६३५॥

---

१ P. शास्तदस्तार्थज्ञानसेवधः. D. शास्त्रादस्त्वर्थज्ञा. २ D. द्रुमाग्रस्थ.

जैनभिक्षुं परब्रह्मध्यानैकाग्रहसंग्रहम् ।
वृषस्यन्तीमवज्ञातां तेन निर्गच्छता गृहात् ॥ ६३६ ॥
बाढं कपाटमाश्लिष्य प्रहारेऽङ्घ्रेः समुद्यते ।
नूपुरं यतिपादाब्जप्रतिष्ठं कौतुकादिव ॥ ६३७ ॥
पश्यन्तीमथ सोत्प्रासां निर्लज्जां कामदामनीम् ।
गणयत्येष नेत्येवं वदंतीं च तदैक्षत ॥६३८॥ चतुर्भिः कलापकम् ।
प्राकृतस्याद्य वृत्तस्य पादमेकमुवाच सः ।
गुरोरग्रे ततोऽवादीत्स प्रागेव पदत्रयम् ॥ ६३९ ॥

तच्च—

कवाडमा सज्जवरं गणाए अब्भछिउज्जुव्वणमत्तियाए ।
अमन्निए मुक्कपयप्पहारे सनेउरोपव्वइ यस्स पाउ ॥ ६४० ॥
युवा भिक्षाचरोन्येद्युः प्रेषितः प्रेयसीगृहे ।
दृष्टः प्रविष्टो भिक्षायै राज्ञा सौधाग्रचारिणा ॥ ६४१ ॥
आनीयान्नभृतां दर्व्वीमूर्द्धास्थात्सा तदास्यदृक् ।
सोपि तन्नाभिसौंदर्यासक्तनेत्रस्तथा स्थितः ॥ ६४२ ॥
एकचित्ततया दानग्रहणास्मरणात्तदा ।
नृपस्तयोरेकदृशोर्ध्याने दृष्टेथ वायसैः ॥ ६४३ ॥
विकीर्णे सकलेप्यन्ने विस्मयस्मेरलोचनः ।
गाथार्द्धमूचिवांस्तत्र यथादृष्टार्थवाचकम् ॥ ६४४ ॥
ध्यानं पश्यन् जगौस्मितः ? —

तद्यथा—

भिर क(क्ष)यरो पिच्छइ नाहिमंडलं सावितस्स मुहकमलम्
श्रीबप्पभट्टिराकर्ण्य नृपाग्रे वाक्यमब्रवीत् ॥ ६४५ ॥
किं गण्यानीदृशान्यस्य पयोधेरिव बुद्बुदाः ॥ ६४६ ॥
दुहं पिकवालं चहुयं, कालाविलुंपति ।
श्रुत्वेति भूपतिस्तुष्टः प्राह कल्याणधीनिधिम् ॥ ६४७ ॥
विना मन्मित्रमेते कः पूरयेन्मवमेक्षितम् ? ।
इत्येवं सत्यसौहार्दमार्दवाद्दैनमीतिभूः ॥ ६४८ ॥
गुरुवक्त्रांबुजे नित्यं भृशं भंगीतुलां व्यधात् ।
एकदा समगादेकच्छेको विश्वकलाश्रयः ॥ ६४९ ॥
चित्रकृच्चित्रकृच्चित्रकर्म्मकर्म्मणि कर्मठः ।
पूर्वमालिखितं सम्यक्तः कर्पटवारितम् ॥ ६५० ॥

---

१ P वृषस्यंतीमवज्ञातं मेने. २ P. दितः. ३ P. दव्वीमूर्द्धास्थात्सातदास्यदृक्. ४ P. D. रेकदृशोद्ध्यानंपश्यन् जगी स्मितः. ५ D. मध्यधेक्षितम्.

रेखितं रंगिवर्णौघपूर्णक्षणमथ स्फुटम् ।
अलक्ष्यमपि मां चित्रभंगे जीववधाद्भुवः ॥ ६५१ ॥
इति सत्यापयन् वाचं स जीवकलया स्वया ।
स त्रयोदशभिर्भागैर्भूपरूपं विधाय तत् ॥ ६५२ ॥
चित्रचूडामणिं राज्ञो दर्शयन् विकटे पटे ॥
राजा सुहृद्रणग्रामरामणीयकलंपटः ॥ ६५३ ॥
अनास्थया समीक्ष्यास्य ददौ नोत्तरमप्यसौ ।
एवं त्रिर्विहिते रूपे यदा नोत्तरमाप सः ॥ ६५४ ॥
अवोचत्प्रेक्षकानन्याग्निर्वेदादविदीनगीः ।
छिनद्मि स्वौ करौ किं वा ललाटं स्फोटये निजम् ॥ ६५५ ॥
कलया नु क्षयं भाग्यहीनस्य मम किं ब्रुवे ।
बप्पभट्टिः समीक्षस्वेत्युक्तः कैश्चिद्दयालुभिः ॥ ६५६ ॥
ततोऽसौ गुरवे जैनं बिंबं कृत्वा करे ददौ ।
प्राशंसि च ततोऽसौ तैरेष चित्रकलानिधिः ॥ ६५७ ॥
भूपालाग्रेऽथ सोप्यस्य टंकलक्षं ददौ मुदा ।
श्रीवर्द्धमानबिंबेन भास्वत्पटचतुष्टम् ॥ ६५८ ॥
न्यधापयद्धाचैकं कन्यकुब्जपुरांतरा ।
मथुरायां तथैकं चाणहिल्लपुर एककम् ॥ ६५९ ॥
सतारकपुरेचैकं प्रतिष्ठाप्य न्यधापयत् ।
श्रीपत्तनांतरामोढचैत्यांतर्म्लेच्छभंगतः ॥ ६६० ॥
पूर्वमासीत्तमैक्षंत तदानीं तत्र धार्मिकाः ।
द्विपंचाशत्प्रबंधाश्च कृतास्ताराणादयः ॥ ६६१ ॥
श्रीबप्पभट्टिना शैक्षकविसारस्वतोपमाः ।
अथ राजगिरिं दुर्गमन्यदा रुरुधे नृपः ॥ ६६२ ॥
समुद्रसेनभूपालाधिष्ठितं निष्ठितद्विपन् ? ।
गजाश्वरथपादातपादपातादिसादितैः ॥ ६६३ ॥
शब्दाद्वैतमिव व्योम्नि प्रति (त्य) तिष्ठत्समुन्नतम् ।
समग्रप्राज्यसामग्रीजाग्रदुव्यग्रपरिग्रहम् ॥ ६६४ ॥
अपि प्रपंचलक्षाभिर्दुर्ग्रहंविग्रहिद्विपाम् ।
भैरवादिमहामंत्रयष्टिमुक्ताश्मगोलकैः ॥ ६६५ ॥
वाह्यकुट्टिमकुट्टाकैः कुटिताट्टघटातटम् ।
अभ्रंलिहं द्विषद्भित्तिशिरस्यकपिशीर्षकैः ॥ ६६६ ॥
सैटिंचैः ? क्लेशसंचारं रवेस्तारापतेरपि ।

---

१ H. स्वराः. २ P. समारकपु. ३ H. कूडाकै. ४ H ज्य. ५ P. H टिंचै.

सुरंगाशूकरीमुख्यप्रपंचैरपि विद्विषाम् ।
पतदत्युष्णतैलौघप्लुष्टैर्विफलविक्रमम् ॥६६७॥ षड्भिः कुलकम् ।
पप्रच्छ बप्पभट्टिं च निर्वेदादामभूपतिः ।
कथं कदा वा ग्राह्योयं प्राकारः क्ष्माधरोपमः ॥ ६६८ ॥
प्रश्नचूडामणिः शास्त्रात्सुविचार्याब्रवीदिति ।
पौत्रस्ते भोजनामामुं ग्रहीष्यति न संशयः ॥ ६६९ ॥
अभिमानादसोढेदं राजा तत्रैव तस्थिवान् ।
वर्षैर्द्वादशभिर्दुंदुकस्य सूनोः सुतोऽजनि ॥ ६७० ॥
सच पर्यंकिकान्यस्तः प्रधानैर्जातमात्रकः ।
आनिन्ये तस्य दंभोलिरिवशैलच्छिदा विधौ ॥ ६७१ ॥
तद्दृष्टिर्दुर्गशृंगाग्रे मुखं बालस्य तन्मुखम् ।
विधायायोन्यतापित्ततैलज्वालाविलासि ? रुक् ॥ ६७२ ॥
सकोट्टः कुट्टिताधस्थरणमंडपमंडलः ।
स्फुटदट्टालकस्तोमप्रभ्रश्यद्गोपुरादपि ॥ ६७३ ॥
मृद्यमानमनुष्यस्त्रीगजाश्वमहिषीगवाम् ।
आर्त्ताक्रन्दरवैः शब्दाद्वैतं सर्वत्र पोषयत् ॥ ६७४ ॥
निर्घातक्षुण्णसामान्यपर्वतो महतामपि ।
गिरीणां प्रददद्भीतिं न्यपतन्नाकिलोकिनः ॥ ६७५ ॥
त्रिभिर्विशेषकम् ॥

समुद्रसेनभूपोपि धर्मद्वारा ययौ बहिः ।
आमनामाथ भूपालः श्रीराजगिरिमाविशत् ॥ ६७६ ॥
अधिष्ठाता तु दुर्गस्य यक्षोंगीकृतवैरतः ।
आमाधिष्ठायिकैः कृष्टप्रतोलीस्थायिनं जनम् ॥ ६७७ ॥
इति लोकात् परिज्ञाय राजा तत्रागमत्तदा ।
तमाह प्राकृतं लोकं मुक्त्वा मामेव घातय ॥ ६७८ ॥
इति साहसवाचा स तुष्टो हिंसाग्रहात्ततः ।
न्यवर्त्तत प्रशांतात्मा सत्संग उपकारकः ॥ ६७९ ॥
मैत्रं च प्रतिपेदे स यथादिष्टकरः प्रभोः ।
कियन्मे जीवितं मित्र ज्ञानाद्दृष्ट्वा निवेदय ॥ ६८० ॥
षण्मास्यामवशेषायां कथयिष्यामि तत्र च ।
इति जल्पन् तिरोधत्तावसरे च तदब्रवीत् ॥ ६८१ ॥
गंगान्तर्मागधे तीर्थे नावा वै तरतः सतः ।
मकाराद्यक्षरग्रामोपकंठे मृत्युरस्ति ते ॥ ६८२ ॥

१ D. पात्स० P. न्यापात्सतापित्त. २ H. प्रभस्या. ३ H. निर्घात.
४ P. मैत्रीं.

निर्यद्धूमं जलादृष्ट्वाभिज्ञानं भवता दृढम् ।
विज्ञेयमुचितं यत्ते तत्रेत्यार्थं समाचर ॥ ६८३ ॥
तीर्थयात्रामसौ मित्रोपदेशादुपचक्रमे ।
अलसः को हिते स्वस्य नेच्छेत्सद्गतिमात्मनः ॥ ६८४ ॥
प्रयाणैः प्रवणैः पुंडरीकाद्रिं प्राप भूपतिः ।
युगादिनाथमभ्यर्च्य कृतार्थं स्वममन्यत ॥ ६८५ ॥
ययौ रैवतकाद्रिं च श्रीनेमिं हृदि धारयन् ।
उपत्यकाभुवं प्राप प्राप्तरेखः सुधीषु यः ॥ ६८६ ॥
तीर्थं प्रणन्तुमानेकानैकादश नरेश्वरान् ।
अपश्यन्नश्यदातंको हयायुतपरिच्छदान् ॥ ६८७ ॥
तथैकादशभिः फल्गुवाग्डंबरदिगंबरैः ।
राक्षसैरिव शाखोटान् कलिनिष्ठैरधिष्ठितान् ॥ ६८८ ॥
स्वीकुर्वाणान्महातीर्थं शैलारोहनिषेधिनः ।
असंख्यसैन्यः संख्याय तानाहाययदिलापतिः ॥ ६८९ ॥
तान् दृष्ट्वा बप्पभट्टिः श्रीसुहृद्भूपालमब्रवीत् ।
धर्मैकर्माधमे युद्धात् प्राणिनः को जिघांसति ॥ ६९० ॥
वागाहवेन जेष्यामि विद्वत्पाशानिमान् नृप ।
नखच्छेद्येऽब्जिनीखंडे कुठारं कः प्रयोजयेत् ॥ ६९१ ॥
ते जिता वादमुद्रायाममुद्रायासमंतरा ।
दीपस्य शलभक्षेपे स्तुतिः संस्तूयते हि का ॥ ६९२ ॥
ततोपि तानभ्यमित्रानवादीद्विशदांबरः ।
निर्जयादपि चेद्यूयं शमिनो न मृतादपि ॥ ६९३ ॥
असंख्यव्यंतराधीशचुंबितांह्रिनखावलिः ।
अंबा श्रीनेमिपादाब्जकादंबा शासनामरी ॥ ६९४ ॥
आत्मनोरुभयोः कन्यायुग्मं व्यत्ययतः स्थितम् ।
देवी तदंतरा येषामेतां संजल्पयिष्यति ॥ ६९५ ॥
तीर्थं तदीयमेवास्तु यस्यां वाः श्रमनोऽमुतः ।
समर्पयति तत्किंतु वादैर्वादीनचास्पदैः ॥ ६९६ ॥ [illegible]
उभयाभिमतो [illegible] व्यवहारोऽयमेतयोः ।
पक्षयोरुभयोर्दम्भप्रभावा [illegible] ततः ॥ ६९७ ॥
ततः कुमारिकां तेषां बप्पभट्टिर्व्यदर्पयत् ।
[illegible] भगवान् यावत्संमुखैः साधिताम्बिका ॥ ६९८ ॥
[illegible] शास्त्र [illegible] नेऽपठन् ।
[illegible] ॥ ६९९ ॥

1 H. [illegible] 2 B. [illegible] 3 D. [illegible]

तन्मूर्ध्नि बप्पभट्टेश्च करं कमलकोमलम् ।
ददावंबा च तद्वक्त्रे स्थिता स्पष्टमुवाच च ॥ ७०० ॥
उज्जिंतसेलसिहरे दिक्खनाणं निसीहियाजस्स ।
तं धम्मचक्कवट्टिं अरिट्ठनेमिं नमंसामि ॥ ७०१ ॥
ततो जयजयध्वानमिश्रो दुंदुभिरध्वनत् ।
रोदः कुक्षिंभरिः श्वेतांबरपक्षोन्नतिप्रदः ॥ ७०२ ॥
ततः प्रभृति गाथेयं चैत्यवंदनमध्यतः ।
सिद्धस्तवनकृद्गाथात्रितयादूर्ध्वमाहृता ॥ ७०३ ॥
शक्रस्तववदाबालांगनोपाख्यान्मानिता[१] ।
अष्टापदस्तुतिश्चापि श्रुतवृद्धैः पुरातनैः ॥ ७०४ ॥
ततो रैवतकारोहात्समुद्रविजयांगजम् ।
आनर्चासौ महाभक्तो मानयन् जन्मनः फलम् ॥ ७०५ ॥
दामोदरहरिं तत्राभ्यर्च्यागात् पिंडतारके ।
तथा माधवदेवे च शंखोद्धारेच तं स्थितम् ॥ ७०६ ॥
द्वारकायां ततः श्रीमान् कृष्णमूर्त्तिं प्रणम्यच ।
तत्र दानादि दत्वा श्रीसोमेश्वरपुरं ययौ ॥ ७०७ ॥
ततः श्रीसोमनाथस्य हेमपूजापुरस्सरम् ।
तल्लोकं प्रीणयामास वासवो जीवनैरिव ॥ ७०८ ॥
पुरः स्वं नगरं प्राप श्रीमानाम महीपतिः ।
याहच्छिकं ददौ दानं धर्मस्थानानि च व्यधात् ॥ ७०९ ॥
प्राप्ते काले सुतं राज्ये दुंदुकं संन्यवेशयत् ।
प्रकृतीः प्रक्षमयामास पूर्वमानंदिता अपि ॥ ७१० ॥
प्रयाणं दत्तवान् गंगासरित्तीरस्थमागधम् ।
तीर्थं जिगमिषुर्नावमारूढश्च तदंतरा ॥ ७११ ॥
सूरिणा सह तन्मध्ये दृष्टवान् धूमनिर्गमम् ।
उपगंगं जनाज्ज्ञे मगटोडानिवेशनम्[२] ॥ ७१२ ॥
प्रतीते व्यंतराख्याते सूरिराहामभूपतिम् ।
जैनधर्मं प्रपद्यस्व प्रांतेऽपि प्रत्ययोस्ति चेत् ॥ ७१३ ॥
राजाह प्रतिपन्नोस्मि सर्वज्ञः शरणं मम ।
देवो गुरुर्ब्रह्मचारी[३] धर्मश्चेत्कृपयोदितः ॥ ७१४ ॥
देवो गुरुश्च धर्मश्च यश्चक्रे व्यावहारिकः ।
इयद्दिनानि सोर्त्यार्जि[४] मम त्रिविधशुद्धितः ॥ ७१५ ॥

१ P. शक्रसूववदाबालांमनापाख्यात्रमानिता D. स्तवनदाबालां गतायामान मानिना. २ D. मगटोडानिवेशन. ३ H. गुरु. ४ D. H. स्राजि.

मम सौदार्द्दतः पूज्यपादानामपि सांप्रतम् ।
विधिवद्विग्रहत्याग इह वो नोचिता स्थितिः ॥ ७१६ ॥
परत्रापि यथा लोके समस्यापूरणादिभिः ।
कालोऽतिवाह्यते सौख्यान्मिलितैरेव निश्चितम् ॥ ७१७ ॥
श्रुत्वेत्याह प्रभुर्मुग्धवागियं स्वस्वकर्मभिः ।
कस्कः कां कां गतिं गंता बुद्ध्यते को जिनं विना ॥ ७१८ ॥
युक्तमेतद्व्रतस्थानां नात्मप्राणापरोपणम् ।
तथातः पंचवर्षाणि ममाद्याप्यायुरस्ति च ॥ ७१९ ॥
विक्रमतो वर्षाणां शताष्टके सनवतौ च भाद्रपदे ।
शुक्ले सितपंचम्यां चन्द्रे चित्राख्यऋक्षस्थे ॥ ७२० ॥
तुलाराशौ तथा चंद्रस्थितेऽर्के प्रहरेऽतिमे ।
श्राव्यमाणो भृशं पंचपरमेष्ठिनमस्क्रियाम् ॥ ७२१ ॥
दृढं जिनेशसन्मित्रगुरुपादस्मृतिस्थितः ।
श्रीमान्नागावलोकाख्यो राजा प्राप दिवं तदा ॥ ७२२ ॥
विशेषकम् ।

अथ किंचित्सुहृन्मोहात्तत्र स्थित्वौर्ध्वदेहिकम् ।
कारयामास पार्श्वस्थः प्रधानैस्तत्सनाभिभिः ॥ ७२३ ॥
किंचिच्छोकोर्मिसंतप्त उवाच करुणं तथा ।
सोद्वेगं च तदीयानां गुणानां संस्मरन् भृशम् ॥ ७२४ ॥
माभूत्संवत्सरोऽसौ वसुशतनवतेर्मा च ऋक्षेषु चित्रा
धिग्मासं तं नभस्यं क्षयमपि स खलः शुक्लपक्षोपि यातु ।
संक्रांतिर्या च सिंहे विशतु हुतभुजं पंचमी या तु शुक्ले
गंगातोयाग्निमध्ये त्रिदिवमुपगतो यत्र नागावलोकः ॥ ७२५ ॥
अथ श्रीबप्पभट्टिश्च कन्यकुब्जं मुनीश्वरः ।
प्राप दुंदुकभूपालाधिष्ठितं तन्निरुद्यमः ॥ ७२६ ॥
सक्तः कंद्याख्यवेश्यायां भूपो भोजं निजं सुतम् ।
भाग्योदयकलाकेलिविलासमपि पापभूः ॥ ७२७ ॥
अतिद्रुह्यति मूढस्तद्वाग्भिर्विगतचेतनः ।
अविवेकधराधुर्यं धिग् वेश्याजनसंगमम् ॥ ७२८ ॥ युग्मम् ॥
तन्माता निजबंधूनां ज्ञापयामास दुःखिता ।
संकटे हि कुलस्त्रीणां शरणं शरणं पितुः ॥ ७२९ ॥
समागत्याह्वयन् ते च पुत्रजन्मोत्सवच्छलात् ।
आपृच्छायै पुनर्भोजः संचचार नृपालये ॥ ७३० ॥
ज्ञापितो गुरुभिः सौधद्वारे विज्ञाय शस्त्रिणः ।
निवृत्तो मातुलैः साकं प्रययौ पाटलीपुरम् ॥ ७३१ ॥

आचार्यमन्यदा राजा दुंदुकः प्राह मत्सरी ।
मयि प्रसादमाधाय नीयतां नंदनोत्तमः ॥ ७३२ ॥
ततः स ध्यानयोगादिप्रारंभैरुत्तरोत्तरैः ।
वाहयामास वर्षाणि पंच पंचत्ववासरम् ॥ ७३३ ॥
ततोथ समये प्राप्ते राजा दृढतरं गुरुः ।
उपरोध्य सुताह्वानहेतवे प्रैष्यतादरात् ॥ ७३४ ॥
ययौ तन्नगराभ्यासे विममर्श च चेतसि ।
चेद्भोजो नीयते यस्मात्तन्नृपेण स हन्यते ॥ ७३५ ॥
नोचेत्कंटिकया बाढं मूर्खोसाविति संहितः ।
शिष्याणां चिद्रवैः कर्त्ता शासनस्याप्रभावनाम् ॥ ७३६ ॥
सांप्रतं सांप्रतं मृत्युस्तस्मात्प्रायोपवेशने ।
तच्च कृत्वातिगीतार्थकारिताराधनादृतः ॥ ७३७ ॥
स्वयमध्यात्मयोगेन दिनानामेकविंशतिः ।
अतिवाह्य क्षुधातृष्णानिद्रादिद्वेषिविग्रही ॥ ७३८ ॥
आत्मानं दशमद्वाराभिरवासयदुद्यतः ।
ईशाने नाकितां प्राप बप्पभट्टिर्मुनीश्वरः ॥७३९॥ विशेषकम् ॥
विक्रमतः शून्यद्वयवसुवर्षे (८००) भाद्रपदतृतीयायाम् ।
रविवारे हस्तर्क्षे जन्माभूद्बप्पभट्टिगुरोः ॥ ७४० ॥
षड्वर्षस्य व्रतं चैकादशे वर्षे च सूरिणा ।
पंचाधिकनवत्या च प्रभोरायुः समर्थितम् ॥ ७४१ ॥
शरनंदसिद्धिवर्षे ८९५ नभःशुद्धाष्टमीदिने ।
स्वातिभेजनि पंचत्वमामराजगुरोरिह ॥ ७४२ ॥
इत्याकर्ण्यामराजस्य पौत्रोऽतिस्फारशोकभूः ।
भोजः संकुचितांभोजवदनं विललाप च ॥ ७४३ ॥
विवेकौघेऽविवेकेन जितः सारस्वतं हितम् ।
अनुत्सेकस्तिरोधत्त ज्ञाने दत्तो जलांजलिः ॥ ७४४ ॥
इति क्षणं विमृश्यासावादिदेश चिताकृते ।
प्रेष्यानदूष्यचारित्रो गुरुभक्तिपवित्रितः ॥ ७४५ ॥
पितामहवियोगेपि वर्द्धितस्तस्य मित्रतः ।
अनाथ इव लोकेऽत्र तत्रापि त्रिदिवं गते ॥ ७४६ ॥
ततः क्षणमपि स्थातुं न शक्तः पृथिवीतले ।
पितृवत्तु सुहृत्सूरेरनुमज्याधुनोचिता ॥ ७४७ ॥
मातृपक्षप्रधानानां बोधं चावगणय्य सः ।
गुरुमृत्युभुवं प्राप गंता लीलावने यथा ॥ ७४८ ॥
भुजदंडे जनन्या च धृत्वाथाजल्पि तत्क्षणम् ।
निर्धारत्वे निषेधाय राज्यस्य कृपयापि च ॥ ७४९ ॥

स्वसुरद्वयसंहारे जाते ते विद्विषत्पिता ।
जितंमन्यो महापापी त्वत्प्रजाः पीडयिष्यति ॥ ७५० ॥
हृदयालुः कृपालुश्च तत्त्वं प्रार्थनया मम ।
कर्मतो विरमामुष्मात् हृदानंदन नन्दन ॥ ७५१ ॥
इति मातुरलंघ्यत्वात् श्रीभोजः साश्रुलोचनः ।
उत्तरीयं निचिक्षेप चितायां गुरुपृष्ठतः ॥ ७५२ ॥
अस्तोकशोकसंभारधारणक्रांतदेहरुक् ।
ऊर्ध्वदेहिकमाधत्त कृत्यं पैतामहं प्रभोः ॥ ७५३ ॥
अन्यदा मातुलैः साकमाकस्मिकदवोपमः ।
तातं शमयितुं प्रायात्कन्यकुब्जमचिन्तितः ॥ ७५४ ॥
प्रतिष्ठो गोपुरेणाथ द्राग्राजद्वारसंनिधौ ।
मालाकारं ददर्शाथ बीजपूरत्रयान्वितम् ॥ ७५५ ॥
तेन ढौकनकं स्वामिपुत्रस्यास्य कृतं तदा ।
तं गृहीत्वा ययावंतः सौधं रोधं द्विशंत्विषम् ॥ ७५६ ॥
सह कंटिकया तत्रोपविष्टं प्रवरासने ।
जघान हृदये घातैस्त्रिभिस्तैर्बीजपूरकैः ॥ ७५७ ॥
महाप्राणकृताघातादुभौ प्राणैर्वि(व्य)युज्यताम् ।
प्रागूष्यातपुत्रहत्यांहोभीतैरिव विनिर्गतैः ॥ ७५८ ॥
अपद्वाराद्बहिः कृष्ट्वा क्रोष्टारमिव वेश्मनः ।
ढुंढुकं कंदुकस्थित्या क्रीडया प्रेषितं नरैः ॥ ७५९ ॥
निस्वानस्वानपूर्वं सोऽविशत्कंठीरवासने ।
प्राणतः सर्वसामंतैः सपौरैर्मंत्रिभिस्तथा ॥ ७६० ॥
श्रीमदामविहाराख्यतीर्थे नंतुं ययौ नृपः ।
तत्र शिष्यद्वयं दृष्टं बप्पभट्टेर्महामुनेः ॥ ७६१ ॥
विद्याव्याक्षेपतस्ताभ्यां न चक्रे भूमिपोचितम् ।
अभ्युत्थानादिसन्मानं श्रीभोजोऽथ व्यचिंतयत् ॥ ७६२ ॥
अज्ञातव्यवहारौ हि शिष्यावेतौ प्रभोः पदे ।
न युज्येते यतो विश्वव्यवहारो महत्वभूः ॥ ७६३ ॥
श्रीनन्नसूरिराचार्यः श्रीमान् गोविंद इत्यपि ।
आहूय पूजितौ राज्ञा पट्टे च स्थापितौ प्रभोः ॥ ७६४ ॥
मोढेरे प्रहितो नन्नसूरिः सूरिगणोन्नतः ।
पार्श्वे गोविंदसूरिश्चावस्थाप्यत नृपेण तु ॥ ७६५ ॥
भोजराजस्ततोऽनेकराज्यभ्रष्टग्रहग्रहः ।
आमादभ्यधिको जज्ञे जैनप्रवचनोन्नतौ ॥ ७६६ ॥

१ P. दिशन्विशां. २ H. भ्रष्ट ३ H. प्रवचनोन्नतः.

वप्पभट्टिर्भद्रकीर्तिर्वादिकुंजरकेसरी ।
ब्रह्मचारी गजवरो राजपूजित इत्यपि ॥ ७६७ ॥
विख्यातो विरुदैर्जैनशासनक्षीरसागरे ।
कौस्तुभः कृतसंस्थानः पुरुषोत्तमवक्षसि ॥ ७६८ ॥
जयताज्जगतीपीठे धर्मकल्पद्रुमांकुरः ।
इदानीमपि यन्नाममंत्रो जाड्यविषापहः ॥ ७६९ ॥

त्रिभिर्विशेषकम् ।

इत्थं श्रीवप्पभट्टिप्रभुचरितमिदं विश्रुतं विश्वलोके
प्राग्विद्वत्ख्यातशास्त्रादधिगतमिह यत् किंचिदुक्तं तदल्पम् ।
पूज्यैः क्षंतव्यमत्रानुचितमभिहितं यत्तथा तत्प्रसादात्
एतत्सर्वाभिगम्यं भवतु जिनमतस्थैर्यपात्रं ध्रुवं च ॥ ७७० ॥
श्रीचंद्रप्रभसूरिपट्टसरसीहंसप्रभः श्रीप्रभा-
चंद्रः सूरिरनेन चेतसि कृते श्रीरामलक्ष्मीभुवा ।
श्रीपूर्वर्षिचरित्ररोहणगिरौ श्रीवप्पभट्टेः कथा
श्रीप्रद्युम्नमुनीन्दुना विशदितः शृंगः किलैकादशः ॥७७१॥
दुष्कर्मजैत्रः पुरुषोत्तमांगा-
ज्जन्माविशुद्धाक्षरहेतुमूर्त्तिः ।
गिरीशतुंगाख्यपुरःस्थितश्रीः
प्रद्युम्नदेहः शिवतातिरस्तु ॥ ७७२ ॥
ग्रंथा । ८४० ॥ उभयं । २९६० ॥

---

श्रीमानतुंगप्रबन्धः ।

श्रीकन्यकुब्जक्षितिपप्रबोध-
कर्तुस्तथा पूर्वगतश्रुतेन ।
विश्वे समस्या नवपाठ्यबंधैः
श्रीभद्रकीर्तेर्नरिनर्ति कीर्त्तिः ॥ १ ॥
प्रभोः श्रीमानतुंगस्य देशनायां रसान्विताः ।
जयति ज्ञानपाथोधिशारदेंदुमरीचयः ॥ २ ॥
नित्यं योजनलक्षेण घर्मनाशः सुपर्वणाम् ।
मानतुंगः प्रभुः पातु मेरुः सौमनसाश्रितः ॥ ३ ॥
अस्त्यवाच्यागमनिःसमप्रगल्भ्यं जगत्यपि ।
निवास्यं तीर्थशृंगारमकलंकस्य प्रदर्शने ॥ ४ ॥

---

१ ग्रंथा० ८४० उभयं २९६०.

सदासुरसरिद्वीचीनिचयाचांतकश्मला ।
पुरी वाराणसीत्यस्ति साक्षाद्दिवदिवःपुरी ॥ ५ ॥
आसीत् कोविदकोटीरमर्थिदारिद्र्यपारभूः ।
तत्र श्रीहर्षदेवाख्यो राजा नतु कलंकभृत् ॥ ६ ॥
ब्रह्मक्षत्रियजातीयो धनदेवाभिधः सुधीः ।
श्रेष्ठी तत्राभवद्विश्वप्रजाभूपार्थसाधकः ॥ ७ ॥
तत्सुतो मानतुंगाख्यो विख्यातः सत्वसत्यभूः ।
अवज्ञातपरद्रव्यवनितावितथाग्रहः ॥ ८ ॥
संतीह मुनयो जैना नग्ना भग्नस्मराधयः ।
तच्चैत्ये जग्मिवानन्यद्दिवसे विवशेंतरः ॥ ९ ॥
वीतरागप्रभुं नत्वा गत्वा गुरुपदांतिकम् ।
प्राणमद्धर्म्मवृद्ध्याशीर्वादेन गुरुणार्हितः ॥ १० ॥
महाव्रतानि पंचास्योपादिशन्नग्नतां तथा ।
ऊर्णकर्प्पासकौशेयशौचावृत्तिनिषेधतः ॥ ११ ॥
इत्याद्यनेकधा धर्म्ममार्गाकर्णनतस्तदा ।
वैराग्यरंगिणो मानतुंगस्य व्रतकांक्षिणः ॥ १२ ॥
तन्मातापितरौ पृष्ट्वा चार्यस्तस्य व्रतं ददौ ।
चारुकीर्तिर्महाकीर्तिरित्यस्याख्यां ददौ च सः ॥ १३ ॥
स्त्रीणां न निर्वृतिर्मोन्या मुक्तिः केवलिनोपिहि ।
द्वात्रिंशदन्तरायाणि बुबुधे च बुधेश्वरः ॥ १४ ॥
कृतलोचस्ततो हस्तस्थिततोयकमण्डलुः ।
स त्यक्तसर्वाभरण इर्यासमितिसंयुतः ॥ १५ ॥
गृहस्थावसथोर्द्ध्वस्थावस्थानकृतभोजनः ।
मायूरपिच्छिकाहस्तो मौनकालेषु मौनवान् ॥ १६ ॥
सदा निःप्रतिकर्म्मासौप्रतिक्रमणयोर्द्वयोः ।
दक्षो गुरुकनीयश्चेहुःकरं कुरुते व्रतम् ॥ १७ ॥ विशेषकम् ॥
अस्य स्वनृपतिर्लक्ष्मीधरो लक्ष्मीवरस्थितिः ।
आस्तिकानां शिरोरत्नमत्रासीद्विस्फुरद्यशाः ॥ १८ ॥
दृढभक्त्या स चार्यार्थमन्यदाप्यनिमंत्रितः ।
महर्षिस्तेन कालेन मध्येतद्गृहमागमत् ॥ १९ ॥
अशोधनप्रमादेनानुसंधानाज्जलस्य च ।
नैके संमूर्छितास्तत्र पूतरास्तत्कमंडलौ ॥ २० ॥
गंडूपार्थमृपिर्योवच्चुलुके जलमाददे ।
ददर्श तान् स्वसा प्राह लीना श्वेतांबरव्रते ॥ २१ ॥

---

१ H. रतः. २ H. शाम्वा.

व्रते कूपारसः सारस्तदमी द्वींद्रियाङ्गसाः ।
विपद्यंते प्रमादाद्धस्तज्जैनसदृशं नहि ॥ २२ ॥
लज्जावरणमात्रेऽत्र वस्त्रखण्डे परिग्रहः ।
ताम्रपात्रे कथं न स्याद्याद्दक्छिकमिदं किमु ॥ २३ ॥
धन्या श्वेतांवरा जैनाः प्राणिरक्षार्थमुद्यताः ।
न सन्निदधते नीरमपि रात्रौ क्रियोद्यताः ॥ २४ ॥
अचेलाश्च सचेलाश्च नावधारणदुर्नयम् ।
आद्रियन्तेस्म निःसङ्गाः परमार्थकृतादराः ॥ २५ ॥
पञ्चाश्रवेंद्रियार्थानां? परिहारपरायणाः ।
गुप्तिभिस्तिसृभिर्गुप्ता स्थितिः समितिपंचके ॥ २६ ॥

त्रिभिर्विशेषकम् ॥

इत्याकर्ण्य मुनिः प्राह प्रांजलं शृणु मद्वचः ।
गृहवासपरित्यागो मया पुण्यार्थिना कृतः ॥ २७ ॥
आस्तामन्यः समाचारो यत्र जीवदयापि न ।
तेन धर्मेण किं कुर्वे श्रीसर्वज्ञविरोधिना ॥ २८ ॥
अत्र देशे समायांति दुःप्राया श्वेतभिक्षवः ।
सा प्राह मध्यदेशात्ते समायास्यंति सांप्रतम् ॥ २९ ॥
सांगत्यं कारयिष्यामि तव तैः सह निश्चितम् ।
तपसा निर्मलेनाशु भवं पावयसे यथा ॥ ३० ॥
इदानीं क्वापि कूपादौ रहो जलमिदं त्यज ।
शासनस्य यथा म्लानिर्न भवेल्लघुताकरी ॥ ३१ ॥
विराधना पुनर्जीवगणस्यात्र भवेद्ध्रुवम् ।
अपरापरनीरोत्थजीवा अन्योन्यविद्विषः ॥ ३२ ॥
श्रुत्वेति तद्वचोऽकार्षीद्दृशं विप्रतिसारतः ।
भोजितः परया भक्त्या बोधितश्चाश्रयं ययौ ॥ ३३ ॥
अन्यदा जिनसिंहाख्याः सूरयः पुरमाययुः ।
पुरा श्रीपार्श्वतीर्थेशकल्याणकपवित्रितम् ॥ ३४ ॥
गंगातीरस्थमुद्यानमुद्दामं शिखरिव्रजैः ।
शिश्रियुर्ज्ञानसंयुक्तास्त्रिदशा इव नन्दनम् ॥ ३५ ॥
तया च ज्ञापिते श्राद्धकांतया सोदरो मुनिः ।
श्रुत्वा समाययौ तत्र गुरूणां संगतस्तदा ॥ ३६ ॥
पूर्वर्षिभिः समाचीर्णा सामाचारी न्यवेद्यत ।
तैस्तदग्रैव पीयूषवत् सोऽथा(दसावा)दतोऽशृणोत् ॥ ३७ ॥

---

१ भरः. २ H. प्रायः ३ HP. करा. ४ P. जित. ५ P. वज्ञापिते श्राद्धकातया ६ P. चार्णा समाचारीत्यवेद्यतः ७ P. वत्तांसो

गुरुभिर्दीक्षितश्चासौ नदीष्णोग्रेपि च क्वचित् ।
तपस्याविधिपूर्वं चागमसभ्याप्यतादरात् ॥ ३८ ॥
ततः प्रतीतिभृत्सम्यक्तपःश्रुतसमर्जनात् ।
योग्यः सन् गुरुभिः सूरिपदे गच्छाद्दतः कृतः ॥ ३९ ॥
क्लिष्टकाव्यश्रमिश्रांता देवी वाचामधीश्वरी ।
यद्वचोऽमृतसंसिक्ता परमानंदभूरभूत् ॥ ४० ॥
स तदातनकालीयलीनज्ञानक्रियोन्नतिः ।
अभूदभूमिरुन्निद्रोपद्रवांतरविद्विषाम् ॥ ४१ ॥
इतश्च पुरि तत्रासीद्वेदवेदांगपारगः ।
विरंचिरिव मूर्तिस्थो भूदेवः पार्थिवार्चितः ॥ ४२ ॥
कोविदानां शिरोरत्नं मयूर इति विश्रुतः ।
प्रत्यर्थिसर्प्पदर्प्पाणां मयूर इव दर्प्पहृत् ॥ ४३ ॥ युग्मम् ॥
दुहिता सुहिता रूपशीलविद्यागुणोदयैः ।
तस्य सत्या उमागंगालक्ष्मीदेव्यो यदीक्षणात् ॥ ४४ ॥
पंके पंकजमुज्झितं कुवलयं चापारनीरे ह्रदे ।
बिंबी चापि वृतैर्बहिः प्रकटिता क्षिप्तः शशी चांबरे ।
यस्याः पाणिविलोचनाधरमुखान्वीक्ष्य स्वसृष्टिर्विधे-
रुच्छिष्टेव पुरातनी समभवद्देवाङ्घ्रिधायेह ताम् ॥ ४५ ॥
अद्भुतं कुलरूपाद्यैस्तस्याः समुचितं वरम् ।
सर्वत्रालोचयन् सम्यगप्राप्तावार्तिमासदत् ॥ ४६ ॥
तर्कलक्षणसाहित्यरसास्वादवशैकधीः ।
अनूचानो महाविप्रो बाणाख्यः प्राग्गुणान्वितः ॥ ४७ ॥
प्रख्यानवक्तकः कामाभिरामाकारधारकः ।
दृष्टे तत्र मयूरोभूद्दारिद्र्याडंबरे यथा ॥ ४८ ॥
संमान्योद्वाहयामास तां सुतां नैव वैभवात् ।
अनुरूपवरप्राप्तिः सुता पित्रापि दुस्त्यजा ॥ ४९ ॥
यत्र श्रीहर्षदेवस्य दर्शितो दुःहितुः पतिः ।
आशिषोदितया तस्योदितया तोषमाप च ॥ ५० ॥
तस्या वासः पृथक् चक्रे धनधान्यादिसंभृतः ।
एवं राजार्द्दि (र्द्धि) तौ तौ द्वौ संगत्य प्रापतुः सदा ॥ ५१ ॥
बाणोन्यदा समं पत्न्या स्नेहतः कलहायितः ।
सिता हि मरिचक्षोदाद्दत्ते भवति दुर्जरा ॥ ५२ ॥
पितुर्गृहमगाद्रुष्टा बाणपत्नी मदोद्धुरा ।
सायं तद्गृहमागत्य भर्त्ता प्राहानुनीतये ॥ ५३ ॥

---

१ P. दीक्षि.

तद्यथा-मानं मुंच स्वामिनि शत्रुं जगतो विनाशितस्वार्थम् ।
सेवककामुकपरमवसुखेच्छवो नावलेपभृतः ॥ ५४ ॥
वासागाराद्बहिः प्रेष्य पंडितं तां सखी जगौ ।
वाग्भंगीभिस्ततो मानामुचितस्यामहोवदन् ? ॥ ५५ ॥
उक्तं च-लिखन्नास्ते भूमिं बहिरवनतः प्राणदयितो
निराहाराः सख्यः सततरुदितोच्छूननयनाः ।
परित्यक्तं सर्वं हसितपठितं पञ्जरशुकै-
स्तवावस्था चेयं विसृज कठिने मानमधुना ॥ ५६ ॥
विलक्षीभूय साथाह बहिरागत्य कोविदम् ।
भवने प्रविशामोऽस्या मुक्त्वा वयमुपानहौ ॥ ५७ ॥
एतस्यां मौनमालंब्यावस्थितायां पुनस्ततः ।
विद्वान्(न)विद्वन्मन्योसौ बहुप्रातर्जगाद च ॥ ५८ ॥
तद्यथा-गतप्राया रात्रिः कृशतनु शशी शीर्यत इव
प्रदीपोयं निद्रावशमुपगतो घूर्णत इव ।
प्रणामान्तो मानस्तदपि न जहासि क्रुधमहो
कुचप्रत्यासत्त्या हृदयमपि ते सुभ्रु कठिनम् ॥ ५९ ॥
वह्निन्तिपरतः सुप्तोवकाशे तत्पिता तदा ।
जजागारातिसंभ्रांतः काव्यं श्रुत्वेत्युवाच च ॥ ६० ॥
स्थाने त्वं सुभ्रुशब्दस्य चंडीत्याख्यामुदाहर ।
यतोऽस्या दृढकोपायाः शब्दोयमुचितः खलु ॥ ६१ ॥
इत्याकर्ण्य पितुर्वाचं लज्जाभरनतानना ।
सिममर्श निशावृत्तं विश्वं मे जनकोऽशृणोत् ॥ ६२ ॥
धिग्मां मूर्खामविज्ञातकारिणीमित्यकुत्सयत् ।
आत्मानं सा ततो वपूर्य(पूर्वम)मर्षं च व्यधाद् घनम् ॥ ६३ ॥
मदं मुक्त्वा च सा प्रेम भर्त्तरि स्थिरमादधौ ।
गंगा हिमवतो गर्जे यथा शीतांशुशेखरे ॥ ६४ ॥
अहो शैशवतो भ्रांता यद्यसौ विद्वदग्रणीः ।
जनकोनुचिताधायी विमंदाक्षः कथं किल ॥ ६५ ॥
इदं किमुचितं वक्तुं कुलीनानां हि तादृशैः ।
मातृस्वसृदुहितॄणामवाच्यं नहि वाच्यभूः ॥ ६६ ॥
शशाप कोपाटोपेन पितरं प्रकटाक्षरम् ।
कुष्ठी भव क्रियाभ्रष्टावज्ञातो रसनात्रकः ॥ ६७ ॥
तस्याः शीलप्रभावेण सद्यः श्वेतांगचंद्रकैः ।
कलाप्यग्रे मयूरोग्रे तदा जज्ञे स चंद्रकी ॥ ६८ ॥

१ HP. मदो D सुचिक. २ D. गर्जे. ३ D. शा. ४ PH. तौ.

सागान्निजगृहं बाणे बिभ्रती संक्रिमादरात् ।
पितुर्दुर्वचनं तस्याः सान्त्वनाय तदाभवत् ॥ ६९ ॥
सद्यः कुष्ठं तदालोक्य पश्चात्तापार्चिविह्वलः ।
अवाङ्मुखो गृहे खेऽस्थान्न ययौ राजपर्षदि ॥ ७० ॥
पंचषान् वासरान्नासौ जगाम क्ष्मापमंदिरे ।
बाणोपि कुपितस्तस्य बहून्दोषानभाषत ॥ ७१ ॥
भोगिभोगविनाशैकप्रतिज्ञो मलिनांगभृत् ।
सुहृत्समागमे लज्जास्थानं प्रकटयन् सदा ॥ ७२ ॥
असौ मेघसुहृन्मेघसुहृच्चंद्रकितस्तनौ ।
चित्रंचित्रात्सभायोग्यो भूपानां नैनसां निधिः ॥ ७३ ॥
राजा श्रुत्वेति किं सत्यं मयूरः कुष्ठदूषितः ।
इति चित्रात्समाहूतवांस्तं निजनरैः प्रभुः ॥ ७४ ॥
कृतावगुंठनः पद्यः ससंवीतांगमंडनः ।
उपभूपतिमागच्छदनिच्छन्स्थानमत्र च ॥ ७५ ॥
बाणेनोचे स्फुटं दृष्ट्वा मयूरं प्राकृतादथ ।
शीतरक्षांगसंव्यानं वरकोटीति संसदि ॥ ७६ ॥
पुनर्निजं गृहं गत्वा व्यमृशच्चेतसि स्थिरम् ।
कलंकपंकिलानां हि नोचिता सुहृदां सभा ॥ ७७ ॥
सहक्रीडितसंघेऽस्मिन् ये तिष्ठंत्यंकशंकिताः ।
क्रूखड्गछिन्नमेते किं स्वं मूर्द्धानं न जानते ॥ ७८ ॥
वैराग्यात्त्यज्यते देहः सतां तदपि नोचितम् ।
दुःखानामसहिष्णुत्वात्क्लीवत्कातरता हि सा ॥ ७९ ॥
सुरः सनातनः प्रीतिहार्यः कश्चित्कलानिधिः ।
आराध्यते प्रसादेन यस्य देहो नवो भवेत् ॥ ८० ॥
सहस्रकिरणः कर्मसाक्षी ध्येयो मयास्य यत् ।
दृश्येते सफले साक्षादाराधनविराधने ॥ ८१ ॥
षट्पारं रज्जुयंत्रं सोऽवलंब्यात्रोपविष्टवान् ।
गर्त्ते च खदिरांगारैरधोऽर्चिभिरपूरयत् ॥ ८२ ॥
शार्दूलवृत्तमेकैकमुक्त्वा शस्त्रिकयाच्छिनत् ।
पादमेवं च काव्येषु पंचसूकेन कुष्टिना ॥ ८३ ॥
छिंदतः शेषपादं च मार्त्तंडो व्यक्ततेजसा ।
आगत्यास्य ददौ देहं मंक्षु विध्यापितोऽनलः ॥ ८४ ॥
काव्यानां शततः सूर्यस्तुतिं संविदधे ततः ।
देवान् साक्षात्करोतिस्म येषामेकमपि स्मृतम् ॥ ८५ ॥

---

१ H. भक्ति. २ PH. ज्ञवि.

श्रीभानुस्तोषतस्तस्य नीरुजं देहमातनोत् ।
सार्द्धषोडशवर्णि(वार्षि)क्यंदीप्यत्कनकभास्वरम् ॥ ८६ ॥
प्रातः प्रकटदेहोऽसावाययौ राजपर्षदि ।
श्रीहर्षराजः पप्रच्छासीत्ते किं रुग्नवा वद ॥ ८७ ॥
आसीद्देव परं ध्यातः सहस्रकिरणो मया ।
तुष्टो देहं ददावद्य भक्तेः किं नाम दुष्करम् ॥ ८८ ॥
तदा च बाणपक्षीयैः सासूयैरिव पंडितैः ।
जगदे किंचिदत्युग्रं वाग्वृत्तश्रुतितः स्फुटम् ॥ ८९ ॥
तथाहि-यद्यपि हर्षोत्कर्षं विदधति मधुरा गिरो मयूरस्य ।
बाणविजृंभणसमये तदपि न परभागभागिन्यः ॥ ९० ॥
राजाह सत्यमेवेदं गुणी गुणिषु मत्सरी ।
यूयमत्रापि सासूया ब्रूमहेऽत्र वयं किमु ॥ ९१ ॥
वैद्यौषधं विना येन प्रांजलेनैव चेतसा ।
सूर्य आराधितो भक्त्या कवित्वैर्देहमातनोत् ॥ ९२ ॥
परितोषं परं प्राप सविता यद्वचःक्रमैः ।
के वयं मानुषास्तत्राहारादिकलुषाकुलाः ॥ ९३ ॥
बाणः प्राह प्रभो प्रायः कृतपक्षं किमुच्यते ।
अस्य कः किल शृंगारो देवस्यातिशये स्फुटे ॥ ९४ ॥
एवंजातीयमाश्चर्यातिशयं कोपि दर्शयेत् ।
अपरो यदि चेच्छक्तिः कः प्रत्यर्थी शुभायतौ ॥ ९५ ॥
इति राज्ञो वचः श्रुत्वा बाणः प्राहातिसाहसात् ।
हस्तौ पादौ च संछिद्य चंडिकावासपृष्ठतः ॥ ९६ ॥
मां परानयतु स्वामी तत्र मुक्तोत्थितः स्थिरम् ।
यथा युष्मादृतिप्रौढि प्रातिहार्यं प्रतिश्रये ॥ ९७ ॥ युग्मम् ॥
अवादीच्च मयूरोपि तथाप्यस्यानुकंपया ।
मयि प्रसह्य भूपालमकार्षीरेनमीदृशम् ॥ ९८ ॥
यतो मद्दुहितुः कष्टं व्यंगशुश्रूषणा भवेत् ।
आजन्म तन्ममाभीलं विलगेत प्रभो दृढम् ॥ ९९ ॥
श्रुत्वा च भूपतिर्भक्तिं मयूरे बिभ्रदद्भुताम् ।
बाणे कोपं वहन् प्राह तथा कौतूहलं महत् ॥ १०० ॥
कर्त्तव्यमेव बाणस्य धीःप्राणस्य कवेर्वचः ।
पाणिपादं नवं चेत्स्यादस्य स्फारं तदा यशः ॥ १०१ ॥
अन्यथा चेत्तदास्फारवचसा भज्यते मणिः ।
यदृच्छावचसां नावकाशो राज्ञां हि पर्षदि ॥ १०२ ॥

अथवा सूर्यमाराध्य त्वमेनमपि पंडितम् ।
विमदं निर्विषं नागमिव प्रगुणमाचरे ॥ १०३ ॥
उक्त्वा चैवं कृते राज्ञा चंडीं स्तोतुं प्रचक्रमे ।
बाणकाव्यैरतिश्रव्यैरुद्दामाक्षरडंबरैः ॥ १०४ ॥
ततश्च प्रथमे वृत्ते निर्वृत्ते सप्तमेऽक्षरे ।
समाधौ तन्मुखी भूत्वा देवी प्राह वरं वृणु ॥ १०५ ॥
विदेहि पाणिपादं मे इत्युक्तिसमनंतरम् ।
संपूर्णावयवे शोभा प्रत्यग्र इव निर्जरः ॥ १०६ ॥
महोत्सवेन भूपालमंदिरं स समीयिवान् ।
राज्ञा पुरस्कृतौ प्रातिहार्येऽस्थातामुभावपि ॥ १०७ ॥
ततो विवदमानौ च निवर्त्तेते पुरा क्रुधा ।
भूप एवं ततः प्राह निर्णयो नानयोरिह ॥ १०८ ॥
वाग्देवी मूलमूर्त्तिस्था यत्रास्ते तत्र गम्यताम् ।
उभाभ्यामपि काश्मीरनिवृत्तिप्रवरे पुरे ॥ १०९ ॥
जयः पराजयो वास्तु स्वामिन्यैव कृतोऽनयोः ।
प्रत्यवायं सचैतन्यः को हि स्वस्यानुषंजयेत् ॥ ११० ॥
यः पराभूतिमाप्नोति तद्ग्रंथाः प्रांगणे मम ।
प्रज्वाल्य पुस्तकस्तोमं विनाश्या अस्त्वसौ पणः ॥ १११ ॥
ताभ्यामभ्युपयाते च व्यवहारेऽथ पंडितैः ।
उभौ तत्र प्रतिस्थाते राजमर्त्यैः सहार्दि(र्हि)तौ ॥ ११२ ॥
तावल्पेनापि कालेन प्रयाणैरविखंडितैः ।
आसेदाते पुरं ब्राह्मी ब्रह्माद्भुतपवित्रितम् ॥ ११३ ॥
आराधयांबभूवाते तपसा दुष्करेण तौ ।
तुष्टा देवी परीक्षार्थं तौ पृथक्कृत्य दूरतः ॥ ११४ ॥
समस्यापदमप्राक्षीत्तूर्णमापूरितेन च ।
अपरेणापि संपूर्णा तथैवाक्षरपंक्तिका ॥ ११५ ॥
विलंबितद्रुते भेदतया काष्ठार्द्धमानतः ।
जितं बाणेन शीघ्रत्वाद्विलंबावर्जितः परः ॥ ११६ ॥
तथाहि–दामोदरकराघातविह्वलीकृतचेतसा ।
दृष्टं चाणूरमल्लेन शतचंद्रनभस्तलम् ॥ ११७ ॥
इति गीर्निर्णयं लब्ध्वा प्रधानैः सहितौ कवी ।
निजं नगरमायातौ तस्थतुर्भूमिपाग्रतः ॥ ११८ ॥
मयूरश्च निजग्रंथपुस्तकानि नृपांगणे ।
आनीयाज्वालयत् खेदात्तानि जातानि भस्मसात् ॥ ११९ ॥

भस्मापि यावदुड्डीनं श्रीसूर्यशतपुस्तकम् ।
तावत्प्रत्यग्रसूर्यांशुप्रकटाक्षरमस्ति च ॥ १२० ॥
ततो राज्ञा प्रभावोस्य गौरवेण प्रकाशितः ।
उभयोर्विदुषो मानं साम्ये स समभावयत् ॥ १२१ ॥
तौ भूपालः स्तुवन्नित्यममात्यं चान्यदा जगौ ।
प्रत्यक्षोतिशयो भूमिदेवानामेव दृश्यते ॥ १२२ ॥
कुत्रापि दर्शनेन्यस्मिन् कथमस्ति प्रजल्पतः ।
प्राह मंत्री यदि स्वामी शृणोति प्रोच्यते ततः ॥ १२३ ॥
जैनः श्वेतांबराचार्यो मानतुंगाभिधः सुधी ।
महाप्रभावसंपन्नो विद्यते तावके पुरे ॥ १२४ ॥
चेत्कुतूहलमत्रास्ति तदाहूयत तं गुरुम् ।
चित्ते वो यादृशं कार्यं तादृशं पूर्यते तथा ॥ १२५ ॥
इत्याकर्ण्य नृपः प्राह तं सत्पात्रं समानय ।
सन्मानपूर्वमेतेषां निस्पृहाणां नृपः कियान् ॥ १२६ ॥
तत्र गत्वा पुरो मन्त्री गुरूनानम्य चावदत् ।
आज्ञापयति वात्सल्याद्भूपः पादोऽवधार्यताम् ॥ १२७ ॥
गुरुराह महामात्य राज्ञा नः किं प्रयोजनम् ।
निरीहाणामियं भूमिर्नहि प्रेत्य भवार्थिनाम् ॥ १२८ ॥
मंत्रिणोचे प्रभो श्रेष्ठा भावनातः प्रभावना ।
प्रभाव्यं शासनं पूज्यैस्तद्राज्ञो रंगतो भवेत् ॥ १२९ ॥
इति निर्बंधतस्तस्य श्रीमानतुंगसूरयः ।
राजसौधं समाजग्मुरभ्युत्तस्थौ च भूपतिः ॥ १३० ॥
धर्म्मलाभाशिषं दत्वा निविष्टा उचितासने ।
नृपः प्राह द्विजन्मानः कीदृक् सातिशयाः क्षितौ ॥ १३१ ॥
एकेन सूर्यमाराध्य स्वांगाद्रोगो वियोजितः ।
अपरश्चंडिकासेवावशाल्लेभे करक्रमौ ॥ १३२ ॥
भवतामपि शक्तिश्चेत्काप्यस्ति यतिनायकाः ।
तदा कंचिच्चमत्कारं पूज्या दर्शयताधुना ॥ १३३ ॥
इत्याकर्ण्याथ ते प्राहुर्न गृहस्था वयं नृप ।
धनधान्यगृहक्षेत्रकलत्रापत्यहेतवे ॥ १३४ ॥
राजरंजनविद्याप्तिर्लोकाक्षेपादिका क्रिया ।
यद्विद्ध्मः परं कार्यः शासनोत्कर्ष एव नः ॥ १३५ ॥
इत्युक्ते प्राह भूपालो निगडैरेष यंत्र्यताम् ।
आपादमस्तकं ध्वांते निवेद्य प्रयत्नतिनि ॥ १३६ ॥

१ D. भूपगादौ.

ततोऽपवरके राजपुरुषैः परुषैस्सदा ।
निगडैश्च चतुश्चत्वारिंशत्संख्यैरयोमयैः ॥ १३७ ॥
नियंत्रितः समुत्पाद्य लोहयंत्रसमो गुरुः ।
न्यवेश्यताथ तद्वारारी च पिहितौ ततः ॥ १३८ ॥
अतिजीर्णं सनाराचं तालकं प्रददुस्ततः ।
सूचिमेघ (भेद्य) तमस्कांडः स पातालनिभो बभौ ॥१३९॥
वृत्तं भक्तामर इति प्रख्यं प्राहैकमानसः ।
अट्टकृत्य निगडं तत्र त्रुटित्वापपे(पै)ति तत्क्षणात् ॥ १४० ॥
प्राक्संख्यया च वृत्तेषु भणितेषु द्रुतं ततः ।
श्रीमानतुंगसूरिश्च मुत्कलो मुत्कलोभवत् ॥ १४१ ॥
स्वयमुद्घटिते द्वारयंत्रे संयमसंयतः ।
सदानुच्छृंखलः श्रीमानुच्छृंखलवपुर्बभौ ॥ १४२ ॥
अंतःसंसदमागत्य धर्मलाभं नृपं ददौ ।
प्रातः पूर्वाचलान्निर्यन्भास्वानिव महाद्युतिः ॥ १४३ ॥
नृपः प्राह शमस्तादृक् भक्तिश्चाप्यतिमानुषी ।
देव देवीकृताधारं विना कस्येदृशं महः ॥ १४४ ॥
देशः पुरमहं धन्यः कृतपुण्यश्च वासरः ।
यत्र ते वदनं प्रैक्षि प्रभो प्रातिभसंनिभम् ॥ १४५ ॥
आदेशसुकृतावेशं प्रयच्छ स्वच्छतानिधे ।
आजन्मरक्षादक्षः स्याद्यथा मे त्वदनुग्रहः ॥ १४६ ॥
श्रुत्वेति भूपतेर्वाचं प्राहुस्ते यदकिंचनाः ।
लक्ष्मीनामुपयोगं च कुत्राप्यर्थे विद्महे ॥ १४७ ॥
परं श्रीमन्गुणांभोधे प्रशाधि वसुधामिमाम् ।
जैनधर्म्मं हताक्षेमं परीक्ष्य परिपालय ॥ १४८ ॥
अथोवोचन्महीपालः पांथो जैनादृते पथि ।
अदर्शनादियत्कालं पूज्यानां वंचिता वयम् ॥ १४९ ॥
अहो ममावलेपोऽभूद्ब्राह्मणा एव सत्कलाः ।
देवान्संतोष्य यैः स्वीयोदर्शितः प्रत्ययो मम ॥ १५० ॥
विवदानावहंकारान्नैतावुपरतौ क्वचित् ।
दर्पायैव न बोधाय या विद्या सा मतिभ्रमः ॥ १५१ ॥
येषां प्रभावः सर्वातिशायी प्रशम ईदृशः ।
संतोषश्च तदाख्यातो धर्म्मः शुद्धः परीक्षया ॥ १५२ ॥

---

१ P. तत्कल्पो मुत्कलो. २ P. नांचविना.

तन्मया भवतामेवोपदेशः संविधीयते ।
अतःपरं कटुद्रव्यं त्यक्त्वा स्वाद्यं हि गृह्यते ॥ १५३ ॥
तत आदेशपीयूषपोषात्तृप्तं कुरुष्व माम् ।
राज्ञो वाचमिति श्रुत्वा सूरिः प्रण्यगदद्गिरम् ॥ १५४॥
दीनपात्रौचितीभेदात्त्रिधा दानरुचिर्भव ।
जीर्णान्युद्धर चैत्यानि बिंबानि च विधापय ॥१५५॥
आह मंत्री प्रभोर्विप्र प्रातिभं कज्जलोज्ज्वलम् ।
जैनवाचं यमादेशक्षीरेणैव विलुप्यते ॥ १५६ ॥
इत्थं धर्म्मोपदेशं च प्रदेशमिव सद्गतेः ।
तेऽथ प्रदाय भूपाय संययुः स्वाश्रयं तदा ॥ १५७ ॥
सर्वोपद्रवनिर्नाशी भक्तामरमहास्तवः ।
तदा तैर्विहितः ख्यातो वर्त्ततेद्यापि भूतले ॥ १५८ ॥
कदापि कर्म्मवैचित्र्यात्तेषां चित्तरुजाभवत् ।
कर्म्मणा पीडिता यस्मात् शलाकापुरुषा अपि ॥ १५९ ॥
धरणेन्द्रस्मृते रायस्पृष्टोऽनशन हेतवे ।
अवादीदायुरद्यापि स तत्संह्रियते कथम् ॥ १६० ॥
यतो भवादृशामायुर्बहुलोकोपकारकम् ।
अष्टादशाक्षरं मंत्रं ततस्तेषां समार्पयत् ॥ १६१ ॥
ह्रियते स्मृतितोयेन रोगादि नवधा वयम् ।
अंतर्दधौ ततः श्रीमान् धरणो धरणीतलम् ॥ १६२ ॥
ततस्तदनुसारेण स्तवनं विदधे प्रभुः ।
ख्यातं भयहरं नाम तदद्यापि प्रवर्त्तते ॥ १६३ ॥
हेमंतशतपत्रश्रीर्देहे स्तोघमहोनिधिः ।
सूरेरजनि तस्याहो सुलभं तादृशां ह्यदः ॥ १६४ ॥
सायं प्रातः पठेदेतत्स्तवनं यः शुभाशयः ।
उपसर्गा व्रजंत्यस्य विविधा अपि दूरतः ॥ १६५ ॥
मानतुंगप्रभुः श्रीमानुद्योतं जिनशासने ।
अनेकधा विधायैवं शिष्यान्निष्पाद्य सन्मतीन् ॥ १६६ ॥
द्वेधा गुणाकरं शिष्यं पदे स्वीये निवेश्य च ।
इंगिनीमथ संप्राप्यानशनीं दिवसभ्यगात् ॥ १६७ ॥

इत्थं श्रीमानतुंगप्रभुचरितमतिस्थैर्यकृज्जैनधर्म-
प्रासादस्तंभरूपाः सुकृतभरमहापट्टविष्टंभहेतुः ।
श्रुत्वा कुत्रापि किंचिद्गदितमिह मया संप्रदायं च लब्ध्वा
शोध्यं मेधाप्रधानैः सुनिपुणमतिभिस्तत्र नोत्प्रासनीयम् ॥

चारित्रं निरतीचारं ते श्रीमद्देवसूरयः ।
प्रतिपाल्य निवेश्याथ सूरिं प्रद्योतनं पदे ॥ १४
अंतेऽनशनमाधाय ते सदा राद्धसंयमाः ।
सम्यगाराधनापूर्वं दैवीं श्रियमशिश्रियन् ॥ १५ ॥
अथो विजहुर्नद्दुले(?)श्रीप्रद्योतनसूरयः ॥
तेषां परोपकारायावतारो हि भवेत्क्षितौ ॥ १६ ॥
तत्र श्रीजिनदत्तोऽस्ति ख्यातः श्रेष्ठी धनेश्वरः ।
सर्वसाधारणं यस्य मानसं मानदानयोः ॥ १७ ॥
धारिणीति प्रिया तस्य धर्मे निविडवासना ।
वर्त्तते व्यवहारेण द्वयोऽस्तु पुरुषार्थयोः ॥ १८ ॥
तत्पुत्रो मानदेवोऽस्ति मानवानप्यमानरुक् ।
वैराग्यरंगितस्वांतः प्रांतभूरांतरद्विषाम् ॥ १९ ॥
श्रीप्रद्योतनसूरीणामन्यदोपाश्रयेऽगमत् ।
ते धर्मं तस्य चाचख्युस्तरंडं भवसागरे ॥ २० ॥
संसारासारतां बुद्धा गुरुपादान् व्यजिज्ञपत् ।
मानदेवः परिव्रज्यां दद्ध्वं मे प्रसीदत ॥ २१ ॥
निर्बंधात्पितरौ चानुज्ञाप्य शुद्धे दिने ततः ।
चारित्रमग्रहीदुग्रमाचचार व्रतं च सः ॥ २२ ॥
अंगैकादशकेऽधीती छे(वे)दमूलेषु निष्ठितः ।
उपांगेषु च निष्णातस्ततो जज्ञे बहुश्रुतः ॥ २३ ॥
विज्ञाय सोऽन्यदा विज्ञो योग्यः सद्गुरुभिस्तदा ।
पदप्रतिष्ठितश्चक्रे चन्द्रगच्छांबुधेः शशी ॥ २४ ॥
प्रभावाद् ब्रह्मणस्तस्य मानदेवप्रभोस्तदा ।
श्रीजयाविजयादेव्यौ नित्यं प्रणमतः क्रमौ ॥ २५ ॥
एवं प्रभावभूयिष्ठे शासनस्य प्रभावकः ।
संपद्व्योमांगणोद्योतभास्वानिव स च व्यभात् ॥ २६ ॥
अथ तक्षशिलापुर्यां चैत्यपंचशतीभृति ।
धर्मक्षेत्रे तदा जज्ञे गरिष्ठमशिवं जने ॥ २७ ॥
अकालमृत्युं संयाति रोगैर्लोक उपद्रुतः ।
जज्ञे यत्रौषधं वैद्यो न प्रभुर्गुणहेतवे ॥ २८ ॥
प्रतिजागरणे ग्लानं देहन्येह प्रयाति यः ।
गृहागतः स रोगेण पात्यते तल्पके द्रुतम् ॥ २९ ॥
स्वजनः कोपि कस्यापि नास्तीद्द समये तथा ।
आक्रंदभैरवारावरौद्ररूपाभवत्पुरी ॥ ३० ॥

१ P. तने. २ D. नमृंन. P. नले.

चैत्यानां च सहस्राणि दृश्यंतेऽत्र बहिः क्षितौ ।
शवानामर्द्धदग्धानां श्रेणयश्च भयंकराः ॥ ३१ ॥
सुभिक्षमभवद्गृध्रक्रव्यादानां तदोदितम् ।
शून्या भवितुमारेभे पुरी लंकोपमा तदा ॥ ३२ ॥
पूजा च विश्वदेवानां विश्रांता पूजकान् विना ।
गृहाणि शवसंघाततुर्गंधानि तदाभवन् ॥ ३३ ॥
कियानप्युद्धृतः संघश्चैत्ये कृत्वा समागमम् ।
मंत्रयामास कल्पांतः किमद्यैवागतो ध्रुवम् ॥ ३४ ॥
न कपर्दी न वांबा च ब्रह्मशांतिर्न यक्षराट् ।
अद्याभाग्येन संघस्य नो विद्यादेवता अपि ॥ ३५ ॥
भाग्यकाले यतः सर्वो देवदेवीगणः स्फुटः ।
स प्रत्यय इदानीं तु ययौ कुत्रापि निश्चितम् ॥ ३६ ॥
इति तेषु निराशेषु समेता शासनामरी ।
उपादिशत्तदा संघमेवं संतप्यते कथम् ॥ ३७ ॥
म्लेच्छानां व्यंतरैरुग्रैः सर्वः सुरसुरीगणः ।
विहतस्तद्विधीयेत किमत्रास्माभिरुच्यताम् ॥ ३८ ॥
अतः परं तृतीयेऽत्र वर्षे भंगो भविष्यति ।
तुरुष्कैर्विहितः सम्यग्ज्ञात्वा कृत्यं यथोचितम् ॥ ३९ ॥
परमेकमुपायं वः कथयिष्यामि वस्तुतः ।
शृणुतावहिताः संतः संघरक्षा यथा भवेत् ॥ ४० ॥
ततस्तेनाशिवे क्षीणे मुक्त्वा पुरमिदं ततः ।
अन्यान्यनगरेष्वेव गंतव्यं वचसा मम ॥ ४१ ॥
श्रुत्वा च किंचिदाश्वासवंतस्ते पुनरप्यधुः ।
समादिश महादेवि कोन्योऽन्यः परिरक्षिता ॥ ४२ ॥
देवी प्राहाथ नड्डूले मानदेवाख्यया गुरुः ।
श्रीमानस्ति तमानाय्य तत्पादक्षालनोदकैः ॥ ४३ ॥
आवासानभिषिंचध्वं यथा शाम्यति डामरम् ।
एवमुक्त्वा तिरोधत्त श्रीमच्छासनदेवता ॥ ४४ ॥
श्रावकं वीरदत्तं ते प्रैषुर्नड्डूलपत्तने ।
विज्ञप्तिकां गृहीत्वा च स तत्र क्षिप्रमागमत् ॥ ४५ ॥
भूप्रणामाश्रयं दृष्ट्वा व्यधान्नैषेधिकीं तदा ।
मध्याह्ने सूरिपादाश्च मध्येऽपवरकं स्थिताः ॥ ४६ ॥
उपाविशन् शुभे स्थाने स्थाने सब्रह्मसंविदाम् ।
पर्यंकासनमासीना नासाग्रन्यस्तदृष्टयः ॥ ४७ ॥

१ D. स्था.

समानाः कृच्छ्रकल्याणे तृणे स्त्रैणे मणौ मृदि।
तेषां प्राप्ते प्रणामाय देव्यौ श्रीविजयाजये ॥ ४८ ॥
कोणान्तरुपविष्टे च ते दृष्ट्वा सरलः स च।
निमग्नात्मा तमस्तोमे दध्यौ चिन्ताविपन्नधीः ॥ ४९ ॥
ध्रुवं प्रसारिकास्माकं सापि शासनदेवताम्।
ययौ तावंतमध्वानं प्रेष्याहं क्लेशितो ध्रुवम् ॥ ५० ॥
आचार्योयं हि राजर्षिर्मध्येदिव्यांगनं स्थितः।
अहो चारित्रमस्यास्ति शाम्येदस्मादुपद्रवः ॥ ५१ ॥
मामायांतं च विज्ञाय ध्यानव्याजमिदं दधौ।
क एवं नहि जानीते तस्मादारोक्षणं बहिः ॥ ५२ ॥
ध्याने च पारिते मुष्टिं बद्ध्वासावृजुधार्मिकः।
प्राविशद्द्वारमध्ये च सावज्ञं गुरुमानमत् ॥ ५३ ॥
विज्ञाय चेंगितैर्दिव्यौ तस्याविप्रतिपन्नताम्।
अदृष्टैर्बंधसंबन्धैस्तं निपात्य बबंधतुः ॥ ५४ ॥
आरटंतं च तं तारस्वरं दृष्टानुकंपया।
प्रभुर्विमोचयामास तदज्ञानप्रकाशवान् ॥ ५५ ॥
जयाहार महापाप शापयोग्य क्रियाधम।
प्रभोः श्रीमानदेवस्य चारित्रस्य शरीरिणः ॥ ५६ ॥
एवं विकल्पमाधत्से श्रावकव्यंसको भवान्।
पुंशायनाकिचिह्नानामनभिज्ञोज्ञशेखरः ॥ ५७ ॥
ईक्षस्वानिमिषे दृष्टी चरणावक्षितिस्पृशौ।
पुष्पमाला न च म्लाना देव्यावावां न लक्षसे ॥ ५८ ॥
प्रागेव मुष्टिघातेन प्रेषयिष्यं यमालये।
जैनश्रद्धालुदंभेनाहमपि च्छलिता त्वया ॥ ५९ ॥
प्रभोरादेश एव त्वज्जीवने हेतुरग्रिमः।
परं पातकभूः कस्मादीदृशस्त्वं समागतः ॥ ६० ॥
मुष्टिर्बद्धो लभेतात्र लक्षमित्यभिसंधितः।
बद्धमुष्टिर्भवानागाद्यादृगेव प्रयातु तत् ॥ ६१ ॥
स प्राह श्रूयतां देव्यौ श्रीसंघः प्रजिघाय माम्।
पुर्यास्तक्षशिलाख्यायाः शासनेशोपदेशतः ॥ ६२ ॥
अशिवोपशमार्थं श्रीमानदेवस्य सुप्रभोः।
आह्वानायाथ मूर्खत्वान्ममैवाशिवमाययौ ॥ ६३ ॥
उवाच विजया तत्राशिवं किमिव नो भवेत्।
तत्र युष्मादृशः श्राद्धादर्शनच्छिद्रवीक्षकाः ॥ ६४ ॥

१ B. ... २ P. जयादरे.

वराक न विजानासि प्रभावं त्वममुष्य भोः ।
मेघा वर्षति सस्यानां निष्पत्ति चास्य सत्वतः ॥ ६५ ॥
श्रीशांतिनाथतीर्थेशा सेविनी शांतिदेवता ।
सा मूर्तिद्वितयं कृत्वास्मद्व्याजाद्वंदते ह्यमुम् ॥ ६६ ॥
विजयाह त्वयैकेन श्रावकेण समं मुदा ।
प्रहिणोमि कथं पूज्या न कर्णहृदया किमु ॥ ६७ ॥
बहवस्त्वादृशाः सन्ति यत्रेदृग्धार्मिकोत्तमाः ।
कथं भवेत् पुनर्दैन्यः प्रहितस्तत्र नो गुरुः ॥ ६८ ॥
सूरयः प्राहुरादेशः संघस्याधेय एव नः ।
अशिवोपशमः कार्यं तदत्रस्थैर्विधास्यते ॥ ६९ ॥
वयं तु नागमिष्यामोऽत्रत्यसंघाननुज्ञया ।
संघमुख्य इमे देव्यौ तयोरनुमतिर्नच ॥ ७० ॥
अमूभ्यामुपदिष्टो यः पुरा कमठजल्पितः ।
अस्ति मंत्राधिराजाख्यः श्रीपार्श्वस्य प्रभोः क्रमः ॥ ७१ ॥
श्रीशांतिनाथपार्श्वस्वप्रभुस्मृतिपवित्रितम् ।
गर्भितं तेन मंत्रेण सर्वाशिवनिषेधिना ॥ ७२ ॥
श्रीशांतिस्तवनाभिख्यं गृहीत्वा स्तवनं वरम् ।
स्वस्थो गच्छ निजं स्थानमशिवं प्रशमिष्यति ॥ ७३ ॥
इत्यादेशं च संप्राप्य तथैव कृतवान्मुदा ।
प्राप्तस्तक्षशिलायां स स्तवं संघस्य चार्पयत् ॥ ७४ ॥
तस्य चायालगोऽपालं पठनः स्तवनं मुदा ।
दिनैः कतिपयैरेव प्रशांतोयमुपद्रवः ॥ ७५ ॥
ततोपि कुत्रापि यायातः प्रणश्य जन[illegible] ।
गते वर्षत्रये भग्ना तुरुष्कैः सा महापुरी ॥ ७६ ॥
अद्यापि तत्र बिंबानि पित्तलादममयानि च ।
तद्भूगृहेषु संतीति श्रूयते वृद्धजनश्रुतिः ॥ ७७ ॥
ततः प्रभृति संघस्य क्षुद्रोपद्रवनाशकः ।
स्तवः प्रवर्ततेऽद्यापि शांति शांत्यादि[illegible] ॥ ७८ ॥
मंत्राधिराजनामाभूतस्य मंत्रः प्रसिद्धिभूः ।
[illegible] ॥ ७९ ॥
सूरिः श्रीमानतुंगाख्यः [illegible] ।
[illegible] ॥ ८० ॥
[illegible] ।
[illegible] ॥ ८१ ॥

[illegible]

इत्थं श्रीमन्मानदेवप्रभूणां
वृत्तं चित्तस्थैर्यकृन्मादृशानाम् ।
विद्याभ्यासैकाग्र्यहृद्ध्यानमन्यद्
व्यासंगानां यच्छतादुच्छिदं च ॥ ८२ ॥
श्रीचंद्रप्रभसूरिपट्टसरसीहंसप्रभः श्रीप्रभा-
चंद्रः सूरिरनेन चेतसि कृते श्रीरामलक्ष्मीभुवा ।
श्रीपूर्वर्षिचरित्ररोहणगिरौ प्रद्युम्नसूरीक्षितः
शृंगोऽसावगमत्त्रयोदश इह श्रीमानदेवाश्रयः ॥ ८३ ॥
सर्वज्ञचिंतनवशादिव तन्मयत्व-
मासादयन् जयति जैनमुनिः स एषः ।
प्रद्युम्नसूरिरपि भूरिमतिः कवीना-
मर्थेषु काव्यविषयेषु विचक्षणो यः ॥ ८४ ॥

ग्रं० ८८ अ १६३ उस ३२०२ ॥

इति श्रीमानदेवसूरिप्रबन्धः

---

श्रीसिद्धर्षिसूरिप्रबन्धः

श्रीसिद्धर्षिः श्रियो देयाद्धियामध्यानधामभूः ।
निर्ग्रंथग्रंथतामापुर्यद्ग्रंथाः सांप्रतं भुवि ॥ १ ॥
श्रीसिद्धर्षिप्रभोः पांतु वाचः परिपचेलिमाः ।
अनाद्यविद्यासंस्कारा यदुपास्ते भिदेलिमाः ॥ २ ॥
सुप्रभुः पूर्वजो यस्य सुप्रभः प्रतिभावनाम् ।
बंधुर्बंधुरभाग्यश्रीर्यस्य माघः कवीश्वरः ॥ ३ ॥
चरितं कीर्त्तयिष्यामि तस्य त्रस्यजडाशयम् ।
भूभृच्चक्रचमत्कारि वारिताखिलकल्मषम् ॥ ४ ॥
अजर्जरश्रियां धाम वेषालक्ष्यजरज्जरः ।
अस्ति गुर्जरदेशोऽन्यसज्जराजन्यदुर्जरः ॥ ५ ॥
तत्र श्रीमालमित्यस्ति पुरं मुखमिव क्षितेः ।
चैत्योपरिस्थकुंभालिर्यत्र चूडामणीयते ॥ ६ ॥
प्रासादा यत्र दृश्यंते मत्तवारणराजिताः ।
राजमार्गाश्च शोभंते मत्तवारणराजिताः ॥ ७ ॥
जैनालयाश्च संत्यत्र नवंधूपगमं श्रिताः ।
महर्षयश्च निःसंगानवंधूपगमं श्रिताः ॥ ८ ॥

---

*H.* भाग्यस्य. २ *D* मन्दवारण.

तत्रास्ति हास्तिका स्वीयापहस्तितरिपुव्रजः ।
नृपः श्रीवर्मलाताख्यः शत्रुमर्मभिदाक्षमः ॥ ९ ॥
तस्य सुप्रभदेवोस्ति मंत्री मित्रं जगत्यपि ।
सर्वव्यापारमुद्राभृन्मुद्राकृद्दुर्जनानने ॥ १० ॥
देवार्यौशनसौर्यस्य नीतिरीतिमुदीक्ष्य तौ ।
अवलंब्य स्थितौ विष्णुपदं कर्तुं तपःकिल ॥ ११ ॥
तस्य पुत्रावुभावंसाविव विश्वभरक्षमौ ।
आद्यो दत्तः स्फुरद्वृत्तो द्वितीयश्च शुभंकरः ॥ १२ ॥
दत्तवित्तोनुजीविभ्यो दत्तचित्तसुधर्मधीः ।
अप्रवृत्तः कुकृत्येषु तत्र सुत्रामवत् श्रिया ॥ १३ ॥
हर्म्यकोटिस्फुरत्कोटिध्वजजालान्तरस्थिताः ।
जलजन्मतयेव श्रीर्यस्मादासीदनिर्गमा ॥ १४ ॥
तस्य श्रीभोजभूपालबालमित्रं कृतीश्वरः ।
श्रीमाघो नंदनो ब्राह्मीस्यंदनः शीलचंदनः ॥ १५ ॥
ऐदंयुगीनलोकस्य सारसारस्वतायितम् ।
शिशुपालवधः काव्यं प्रशस्तिर्यस्य शाश्वती ॥ १६ ॥
श्रीमाघोस्ताघधीः श्लाघ्यः प्रशस्यः कस्य नाभवत् ।
चित्तजाड्यहरा यस्य काव्यगंगोर्मिविप्रुषः ॥ १७ ॥
तथा शुभंकरश्रेष्ठी विश्वविश्वप्रियंकरः ।
यस्य दानाद्भुतैर्गीतैर्हर्यश्वो हर्षभूरभूत् ॥ १८ ॥
तस्याभूद्गेहिनी लक्ष्मीर्लक्ष्मीर्लक्ष्मीपतेरिव ।
यया सत्यापिताः सत्यः सीताद्या विश्वविश्रुताः ॥ १९ ॥
नंदनो नंदनोत्तंसः कल्पद्रुम इवामरः ।
यथेच्छादानतोऽर्थिभ्यः प्रथितः सिद्धनामतः ॥ २० ॥
अनुरूपकुलां कन्यां धन्यां पित्रा विवाहितः ।
भुंक्ते वैषयिकं सौख्यं दोगुंदग इवामरः ॥ २१ ॥
दुरोदरभरोदारो दाराचारपराङ्मुखः ।
अन्यदासोऽभवत्कर्म दुर्जयं विदुषामपि ॥ २२ ॥
पितृमातृगुरुस्निग्धबंधुमित्रैर्निवारितः ।
अपि नैव न्यवर्तिष्ट दुर्वारं व्यसनं यतः ॥ २३ ॥

अगूढातिप्ररूढेऽस्मिन्नहर्न्निशमसौऽवशः ।
तदेकचित्तधूर्त्तानां सदाचारादभूद्बहिः ॥ २४ ॥
सपिपासोशनायाति शीतोष्माच्च विमर्शतः ।
योगीव लीनचित्तोऽत्र न्यन्नस्यत्साधुवाक्यतः ॥ २५ ॥
निशीथातिक्रमे रात्रावपि स्वकगृहागमी ।
वध्वा प्रतीक्ष्य एकस्यास्तया नित्यं प्रतीक्ष्यते ॥ २६ ॥
अन्यदा रात्रिजागर्यानिर्यातवपुरुद्यमाम् ।
गृहव्यापारकृत्येषु विलीनांगस्थितिं ततः ॥ २७ ॥
ईदक्क् ज्ञातेयसंबंधवशकर्कशवाग्भरम् ।
श्वश्रूरश्रूणि मुंचंती वधूं प्राह सगद्गदम् ॥ २८ ॥
मयि सत्यां पराभूतिं कस्ते कुर्याच्चतः स्वयम् ।
विधत्ते कुविकल्पैस्त्वं गृहकर्मसरालसा ॥ २९ ॥
श्वशुरोपि च ते व्यग्रो यदा राजकुलादिह ।
आगंता च ततो देवावसरादावसज्जिते ॥ ३० ॥
मामेवाक्रोक्ष्यति त्वं तत्तथ्यं मम निवेदय ।
यथा द्राग्भवदीयार्त्तिप्रतीकारं करोम्यहम् ॥ ३१ ॥
सा न किंचिदिति प्रोच्य श्वश्रूनिर्बंधतोऽवदत् ।
युष्मत्पुत्रोऽर्द्धरात्रातिक्रमेऽभ्येति करोमि किम् ॥ ३२ ॥
श्रुत्वेत्याह तदा श्वश्रूः किं नाग्रेऽजल्पि मे पुरः ।
सुतं स्वं बोधयिष्यामि वचनैः कर्कशप्रियैः ॥ ३३ ॥
अद्य स्वपिहि वत्से त्वं निश्चिताहं तु जागरम् ।
कुर्वे सर्वं भलिष्यामि नात्र कार्याधृतिस्त्वया ॥ ३४ ॥
ओमित्यथ स्नुषाप्रोक्ते रात्रौ तद्द्वारि तस्थुषी ।
विनिद्रा पश्चिमे यामे रात्रेः पुत्रः समागमत् ॥ ३५ ॥
द्वारं द्वारमिति प्रौढस्वरोऽसौ यावदूचिवान् ।
इयद्रात्रौ क आगंता मातावादीदिति स्फुटम् ॥ ३६ ॥
सिद्ध(ः)सिद्ध इति प्रोक्ते तेन सा कृतकक्रुधा ।
प्राह सिद्धं न जानेऽहमप्रस्तावविहारिणम् ॥ ३७ ॥
अधुनाहं क यामीति सिद्धेनोक्ते जनन्यपि ।
अन्यदा शीघ्रमायाति यथास्मात्कर्कशं जगौ ॥ ३८ ॥
एतावत्यां निशि द्वारं विवृत्तं यत्र पश्यसि ।
तत्र यायाः समुद्घाटद्वारा सर्वोपि किं निशा ॥ ३९ ॥
भवत्वेवमिति प्रोक्ते सिद्धस्तत्सान्निधीय च ।
पश्यन्ननावृतद्वारो द्वारेगादनगारिणाम् ॥ ४० ॥

---

१ H. प्ररूढोऽस्मि०…सौवसः । तदाकचित्तधू०

सदाप्यनावृतद्वारं शालायां पश्यति स सः ।
मुनीन् विविधचर्यासु स्थितान्निष्पुण्यदुर्लभान् ॥ ४१ ॥
कांश्चिद्वैरात्रिकं कालं विनिद्रस्य गुरोः पुरः ।
प्रवेदयत उत्साहात्कांश्चित्स्वाध्यायरंगिणः ॥ ४२ ॥
उत्कटिकासनान् कांश्चित् कांश्चिद्गोदोहिकासनान् ।
वीरासनस्थितान् कांश्चित्सोऽपश्यन्मुनिपुंगवान् ॥ ४३ ॥
अचिंतयच्छमसुधानिर्झरे निर्जरा इव ।
सुस्नातशीतला एते तृष्णाभीता मुमुक्षवः ॥ ४४ ॥
मादृशा व्यसनासक्ता अभक्ताः स्वगुरुष्वपि ।
मनोरथद्रुहस्तेषां विपरीतविहारिणः ॥ ४५ ॥
धिग्जन्मेदमिहामुत्र दुर्यशो दुर्गतिप्रदम् ।
तस्मात्सुकृतिनी वेला यत्रैते दृष्टिगोचराः ॥ ४६ ॥
अमीषां दर्शनात्कोपिन्याप्युपकृतं मयि ।
जनन्या क्षीरमुत्तप्तमपि पित्तं प्रणाशयेत् ॥ ४७ ॥
ध्यायन्नित्यग्रतस्तस्थौ नमस्तेभ्यश्चकार सः ।
प्रदत्तधर्मलाभाशीर्निर्ग्रंथः प्रभुराह च ॥ ४८ ॥
को भवानिति तैः प्रोक्ते प्रकटं प्राह साहसी ।
शुभंकरात्मजः सिद्धो चूतान्मात्रा निषेधितः ॥ ४९ ॥
उद्घाटद्वारि यायास्त्वमोकसीयन्महानिशि ।
इयंती वाचना दत्ता प्रावृतद्वारि संगतः ॥ ५० ॥
अतःप्रभृति पूज्यानां चरणौ शरणौ मम ।
प्राप्ते प्रवहणे को हि निस्तितीर्षति नांबुधिम् ॥ ५१ ॥
उपयोगं श्रुते दत्त्वा योग्यताहृष्टमानसाः ।
प्रभावकं भविष्यंतं परिज्ञायाथ तेऽवदन् ॥ ५२ ॥
अस्मद्वेषं विना नैवास्मत्पार्श्वे स्थीयतेतराम् ।
सदा स्वेच्छाविहाराणां दुर्ग्रहः स भवादृशाम् ॥ ५३ ॥
धार्यं ब्रह्मव्रतं घोरं दुष्करं कातरैर्नरैः ।
कापोतिका तथा वृत्तिः समुदानापराभिधा ॥ ५४ ॥
दारुणः केशलोचोऽथ सर्वांगीणव्यथाकरः ।
सिकतापिंडवच्चायं निरास्वादश्च संयमः ॥ ५५ ॥
उच्चावचानि वाक्यानि नीचानां ग्रामकंटकाः ।
सोढव्या दशनैश्चर्वणीया लोहमया यवाः ॥ ५६ ॥
उग्रं षष्ठाष्टमाद्यं तत्तपः कार्यं सुदुष्करम् ।
स्वाद्यास्वाद्येषु लब्धेषु रागद्वेषौ न पारणे ॥ ५७ ॥

१ H. ब्धान्याः सुगु॰ २ D॰ मूलद्रु॰ ३ D यासानां.

इत्याकर्ण्यावदत्सिद्धो मत्सद्व्यसनस्थिताः ।
छिन्नकर्णोष्ठनासादिबाहुपादयुगा नराः ॥ ५८ ॥
क्षुधाकरालिताभिक्षा चौर्यादेर्वृत्तिधारिणः ।
अप्राप्तशयनस्थानाः पराभूता निजैरपि ॥ ५९ ॥
नाथ किं तदवस्थाया अपि किं दुष्करो भवेत् ।
संयमो विश्ववंद्यस्तन्मूर्ध्नि देहि करं मम ॥ ६० ॥
यद्दत्तं न गृह्णीमो वयं तस्मात्स्थिरो भव ।
दिनमेकं यथा विज्ञापयामः पैतृकं तव ॥ ६१ ॥
ततः प्रमाणमादेश इत्युक्त्वा तत्र सुस्थिते ।
परं हर्षं दधौ सूरिः सुविनेयस्य लाभतः ॥ ६२ ॥
इतः शुभंकरश्रेष्ठी प्रातः पुत्रं समाह्वयत् ।
शब्दादाने च संभ्रांतः पश्यन् पत्नीं नताननाम् ॥ ६३ ॥
अद्य रात्रे कथं नागात्सिद्ध इत्युदिता सती ।
लज्जानम्रावदद् द्यूती शिक्षितोऽथ सुतो ययौ ॥ ६४ ॥
श्रेष्ठी दध्यौ महेलाः स्युरुत्तानधिषणा ध्रुवम् ।
न कर्कशवचोयोग्ये व्यसनी शिक्ष्यते शनैः ॥ ६५ ॥
ईषत्करं ततः प्राह प्रिये भव्यं त्वया कृतम् ।
वयं किं प्रवदामोऽत्र वणिजां नोचितं ह्यदः ॥ ६६ ॥
गृहाद्बहिश्च निर्याय प्रयासांगीकृतः स्थितः ।
व्यलोकयत्पुरं सर्वमहो मोहः पितुः सुते ॥ ६७ ॥
इतश्चरित्रिशालायामसावुपशमोर्मिभिः ।
आप्लुतोऽपूर्वसंस्थानं ततोऽवादि च तेन सः ॥ ६८ ॥
यद्येवं शमिसामीप्यस्थितिं पश्यामि ते सुतः ।
अमृतेनेव सिच्येत नंदनानन्दनस्थिते ॥ ६९ ॥
द्यूतव्यसनिनां साध्वाचारातीतकुवेषिणाम् ।
संगतो मम हृद्दुःखहेतुः केतुरिव ग्रहः ॥ ७० ॥
आगच्छ वत्स सोत्कंठा तव माता प्रतीक्षते ।
किंचिन्मद्वचनैर्दूना संतप्ता निर्गमाच्च ॥ ७१ ॥
स प्राह तात पर्याप्तं गेहागमनकर्मणि ।
मम लीनं गुरोः पादारविंदे हृदयं ध्रुवम् ॥ ७२ ॥
जैनदीक्षाधरो मार्गे मार्गे निष्प्रतिकर्मतः ।
आचरिष्यामि तन्मोहो भवद्भिर्मा विधीयताम् ॥ ७३ ॥
याया अपावृतद्वारे वेश्मनीत्यंबिकावचः ।
शमिसंनिध्यवस्थानं मतं नस्तद्भूद्वचः ॥ ७४ ॥

---

१ H. स्थितिः,

यावज्जीवं हि विद्धे यद्यहं तत्कुलीनता । -
अक्षता स्यादिदं चित्ते सम्यकात विचिंतय ॥ ७५ ॥
अथाह संभ्रमाच्छ्रेष्ठी किमिदं वस्तु चिन्तितम् ।
असंख्यख्वजविज्ञेयं घनं कः सार्थयिष्यति ॥ ७६ ॥
विलस त्वं यथा सौख्यं विदेहि निजयेच्छया ।
अविमुंचन्सदाचारं सतां श्लाघ्यो भविष्यसि ॥ ७७ ॥
एकपुत्रा तवांबा च निरपत्या वधूस्तथा ।
गतिस्तयोस्त्वमेवासीर्जीर्णे माजीगणस्तु माम् ॥ ७८ ॥
पित्रेत्थमुदिते प्राह सिद्धः सिद्धशमस्थितिः ।
संपूर्णे लोभिवाणीभिस्तत्र मे श्रुतिरश्रुतिः ॥ ७९ ॥
ब्रह्मणीव मनो लीनं ममातो गुरुपादयोः ।
निपत्य ब्रूहि दीक्षां(हि) पुत्रस्य मम यच्छत ॥ ८० ॥
इति निर्बंधतस्तस्य तथा चक्रे शुभंकरः ।
गुरुः प्राद्गात्परिव्रज्यां तस्य पुण्ये स्वरोदये ॥ ८१ ॥
दिनैः कतिपयैर्मासमाने तपसि निर्मिते ।
शुभे लग्ने पंचमहाव्रतारोपणपर्वणि ॥ ८२ ॥
दिग्बंधं श्रावयामास पूर्वतो गच्छ संततिम् ।
सत्प्रभुः शृणु वत्स त्वं श्रीमान् वज्रप्रभुः पुरा ॥ ८३ ॥
तच्छिष्यवज्रसेनस्याभूद्विनेयचतुष्टयी ।
नागेंद्रो निर्वृतिश्चंद्रः ख्यातो विद्याधरस्तथा ॥ ८४ ॥
आसीन्निर्वृत्तिगच्छे च सुराचार्यो धियां निधिः ।
तद्विनेयश्च गर्गर्षिरहं दीक्षागुरुस्तव ॥ ८५ ॥
शीलांगानां सहस्राणि त्वयाष्टादश निर्भरम् ।
वोढव्यानि विविश्राममाभिजात्यफलं ह्यदः ॥ ८६ ॥
ओमिति प्रतिपद्याथ तप उग्रं चरन्नसौ ।
अध्येता वर्त्तमानानां सिद्धान्तानामजायत ॥ ८७ ॥
स चोपदेशमालाया वृत्तिं बालावबोधिनीम् ।
विदधेऽवहितप्रज्ञः सर्वज्ञ इव गीर्भरैः ॥ ८८ ॥
सूरिर्दाक्षिण्यचंद्राख्यो गुरुभ्रातास्ति तस्य सः ।
कथां कुवलयमालां चक्रे शृंगारनिर्भराम् ॥ ८९ ॥
किंचित्सिद्धकृतग्रंथसोत्प्रासः सोवदत्तदा ।
लिखितैः किं नवोग्रंथस्तदवस्थागमाक्षरैः ॥ ९० ॥
शास्त्रं श्रीसमरादित्यचरितं कीर्त्यते भुवि ।
यद्रसोर्मिप्लुता जीवाः क्षुत्तृड्याद्यं न जानते ॥ ९१ ॥

---

१ H. अति० D omits पुत्रस्य…स्यद.

अथोत्पत्तिरसाधिक्यसारा किंचित्कथापि मे ।
अहो ते लेखकस्येव ग्रंथः पुस्तकपूरणः ॥ ९२ ॥
अथ सिद्धकविः प्राह मनो दूनोपि(षि) नो खरम् ।
वयोतिक्रांतपाठानामीदृशी कविता भवेत् ॥ ९३ ॥
का स्पर्द्धा समरादित्यकवित्वे पूर्वसूरिणा ।
खद्योतस्येव सूर्येण मादृग्मंदमतेरिह ॥ ९४ ॥
इत्थमुद्वेजितस्वांतस्तेनासौ निर्ममे बुधः ।
अन्यदुर्बोधसंबद्धां प्रस्तावाष्टकसंभृताम् ॥ ९५ ॥
रम्यामुपमितभवप्रपंचाख्यां महाकथाम् ।
सुबोधकथितां विद्वदुत्तमांगविधूननीम् ॥ ९६ ॥
ग्रंथाव्याख्यानयोग्यं यदेनं चक्रे शमाश्रयम् ।
अतः प्रभृति संघोऽत्र व्याख्यातृविरुदं ददौ ॥ ९७ ॥
दर्शिताथास्य तेनाथ हसितुः स ततोऽवदत् ।
ईदृक् कवित्वमाधेयं त्वद्गुणाय मयोदितम् ॥ ९८ ॥
ततो व्यचिंतयत्सिद्धो ज्ञायते यदपीह न ।
तेनाप्यज्ञानता तस्मादध्येतव्यं ध्रुवं मया ॥ ९९ ॥
तर्कग्रंथा मयाधीताः स्वपरेपीह ये स्थिताः ।
बौद्धप्रमाणशास्त्राणि न स्युस्तद्देशमन्तरा ॥ १०० ॥
आपप्रच्छे गुरुं सम्यग्विनीतवचनैस्ततः ।
प्रान्तरस्थितदेशेषु गमनायोन्मनायितः ॥ १०१ ॥
निमित्तमवलोक्याथ श्रौतेन विधिना ततः ।
सवात्सल्यमुवाचाथ नाथप्राथमकल्पिकम् ॥ १०२ ॥
असंतोषः शुभोऽध्याये वत्स किंचिद्वदामि तु ।
स त्वमत्र न सत्वानां समये प्रमये धिया[1] ॥ १०३ ॥
भ्रांतं चेतः कदापि स्याद्धेत्वाभासैस्तदीयकैः ।
अर्थी तदागमश्रेणेः स्वसिद्धांतपराङ्मुखः ॥ १०४ ॥
उपार्जितस्य पुण्यस्य नाशं त्वं प्राप्स्यसि ध्रुवम् ।
निमित्तत इदं मन्ये तस्मान्मात्रोद्यमी भव ॥ १०५ ॥
अथ चेदवलेपस्ते गमने न निवर्त्तते ।
तथापि मम पार्श्वं त्वमागा वाचा ममैकदा ॥ १०६ ॥
रजोहरणमस्माकं व्रतांगं नः समर्प्पये ।
इत्युक्त्वा मौनमातिष्ठद्गुरुं चित्तव्यथाधरः ॥ १०७ ॥
प्राह सिद्धः श्रुती च्छादयित्वा शांतं हि कल्मषम् ।
अमंगलं प्रतिहतमकृतज्ञः क ईदृशः ॥ १०८ ॥

---

१ H. P. प्रथन्या. २ धियां.

चक्षुरुद्घाटितं येन मम ज्ञानमयं मुदा ।
पुनस्तद्धयामयेत्कोहि धूमायितपरोक्तिभिः ॥ १०९ ॥
अंत्यं वचः कथं नाथ मयि पूज्यैरुदाहृतम् ।
कः कुलीनो निजगुरुक्रमयुग्मं परित्यजेत् ॥ ११० ॥
मनः कदापि गुप्येत चेद्धत्तूरभ्रमादिव ।
तथापि प्रभुपादानामादेशं विदधे ध्रुवम् ॥ १११ ॥
इत्युदित्वा प्रणम्याथ स जगाम यथेप्सितम् ।
महाबोधाभिधं बौद्धपुरमव्यक्तवेषभृत् ॥ ११२ ॥
कुशाग्रीयमतेस्तस्याक्लेशेनापि प्रबोधतः ।
विद्वद्दुर्भेदशास्त्राणि तेषामासीच्चमत्कृतिः ॥ ११३ ॥
तस्यांगीकरणे मंत्रस्तेषामासीद्दुरासदः ।
तमस्युद्योतको रत्नमाप्य माध्यस्थ्यमाश्रयेत् ॥ ११४ ॥
तादृग्वचःप्रपंचैस्तैर्वर्द्धकैर्गर्द्धकैरपि ।
तं विप्रलंभयामासुर्मीनवद्धीवरा रसात् ॥ ११५ ॥
शनैर्भ्रांतमनोवृत्तिर्बभूवासौ यथातथा ।
तदीयदीक्षामादत्त जैनमार्गेतिनिस्पृहः ॥ ११६ ॥
अन्यदा तैर्गुरुत्वेऽसौ स्थाप्यमानोऽवदन्ननु ।
एकवेलं मया पूर्वं संवीक्ष्या गुरवो ध्रुवम् ॥ ११७ ॥
इति प्रतिश्रुतं यस्मात्तदग्रे तत्प्रतिश्रवम् ।
सत्यसंधस्त्यजेत्सत्कस्तत्र प्रहिणुताथ माम् ॥ ११८ ॥
इति सत्यप्रतिज्ञत्वमतिचारु च सौगते ।
मन्यमानास्ततः प्रैषुः स चागाद्गुरुसंनिधौ ॥ ११९ ॥
गत्वाथोपाश्रये सिंहासनस्थं वीक्ष्य तं प्रभुम् ।
ऊर्ध्वस्थानशुभा यूयमित्युक्त्वा मौनमास्थितः ॥ १२० ॥
गर्गस्वामी व्यमृक्षच्च संजज्ञे तदिदं कुलम् ।
अनिमित्तस्य जैनीवाग् नान्यथा भवति ध्रुवम् ॥ १२१ ॥
अस्माकं ग्रहवैषम्यमिदं जज्ञे यदीदृशः ।
सुविनेयो महाविद्वान् परशास्त्रप्रलंभितः ॥ १२२ ॥
तदुपायेन केनापि बोध्योऽसौ यदि भोत्स्यते ।
तदस्माकं प्रियं भाग्यैरुदितं किं बहूक्तिभिः ॥ १२३ ॥
ध्यात्वेत्युत्थाय गुरुभिस्तं निवेश्यासनेऽर्पिता ।
चैत्यवंदनसूत्रस्य वृत्तिर्ललितविस्तरा ॥ १२४ ॥
ऊचुश्च यावदायामः कृत्वा चैत्यनतिं वयम् ।
ग्रंथस्तावदयं वीक्ष्य इत्युक्त्वा तेऽगमन् बहिः ॥ १२५ ॥

---

१ H. सचेतनः D. त्वं मतीरुते.

ततः सिद्धश्च तं ग्रंथं वीक्ष्यमाणो महामतिः ।
व्यमृशत्किमकार्यं तन्मयारब्धमचिन्तितम् ॥ १२६ ॥
कोऽन्य एवंविधो मादृगविचारितकारकः ।
स्वार्थभ्रंशैः पराख्यानैर्मणिं काचेन हारयेत् ॥ १२७ ॥
मदोपकारी स श्रीमान् हरिभद्रप्रभुर्यतः ।
मदर्थमेव येनासौ ग्रंथोऽपि निरमाप्यत ॥ १२८ ॥
आचार्यो हरिभद्रो मे धर्मबोधकरो गुरुः ।
प्रस्तावे भावतो हंत स एवाद्य निवेशितः ॥ १२९ ॥
अनागतं परिज्ञाय चैत्यवंदनसंश्रया ।
मदर्थं निर्मिता येन वृत्तिर्ललितविस्तरा ॥ १३० ॥
विषं विनिर्धूय कुवासनामयं व्यचीचरद्यः कृपया मदाशये ।
अचिंत्यवीर्येण सुवासनासुधां नमोस्तु तस्मै हरिभद्रसूरये ॥१३१॥
किं कर्त्ता च मया शिष्याभासेनाथ गुरुर्मम ।
विज्ञायैतन्निमित्तेनोपकर्त्तुं त्वाह्वयन्मिषात् ॥ १३२ ॥
तदंघ्रिरजसा मौलिं पावयिष्येऽधुनानिशम् ।
आगः स्वं कथयिष्यामि गुरुः स्यान्न ह्यनीदृशः ॥ १३३ ॥
तथागतमतिभ्रांतिर्गता मे ग्रंथतोऽमुतः ।
कोद्रवस्य यथा शल्याघाततो मदनभ्रमः ॥ १३४ ॥
एवं चिंतयतस्तस्य गुरुर्बाह्यभुवस्ततः ।
आगतस्तद्दृशं पश्यन् पुस्तकस्थं मुदं दधौ ॥ १३५ ॥
नैषेधिकीमहाशब्दं श्रुत्वोर्ध्वः संभ्रमादभूत् ।
प्रणम्य रूक्षयामास शिरसा तत्पदद्वयम् ॥ १३६ ॥
उवाच किंनिमित्तोयं मोहस्तव मयि प्रभो ।
कारयिष्यंति चैत्यानि पश्चात्किं मादृशोऽधमाः ॥ १३७ ॥
उन्मीलादूषकास्फोटस्फुटवेदनविह्वहः ।
स्वादविभ्राश्चला दन्ताः कुशिष्याश्च गताशुभाः ॥ १३८ ॥
आहूतो मिलनव्याजाद्बोधायैव ध्रुवं प्रभो ।
हारिभद्रस्तथा ग्रंथो भवता विदधे करे ॥ १३९ ॥
भग्नभ्रमः कुशास्त्रेषु प्रभुं विज्ञपये ततः ।
स्वस्यांतेवासिपाशस्य पृष्ठे हस्तं प्रदेहि मे ॥ १४० ॥
देवगुर्वाद्यवज्ञोत्थमहापापस्य मे तथा ।
प्रायश्चित्तं प्रयच्छाद्य दुर्गतिच्छिद् कृपां कुरु ॥ १४१ ॥
अथोवाच प्रभुस्तत्र करुणाशरणाशयः ।
आनंदाश्रुपरिश्रुत्या परिक्लिन्नोत्तरीयकः ॥ १४२ ॥

मा खेदं वत्स कार्षीस्त्वं को वनीवध्यते नवा ।
पानशौण्डैरिवाभ्यस्तकुतर्कमदविह्वलैः ॥ १४३ ॥
नाहं त्वां धूर्त्तितं मन्ये यद्वचो विस्मृतं न मे ।
मदेन विकलः कोऽपि त्वां विना प्राक्श्रुतं स्मरेत् ॥ १४४ ॥
वेषादिधारणं तेषां विश्वासायापि संभवेत् ।
अतिभ्रांतिं च नात्राहं मानये तव मानसे ॥ १४५ ॥
प्रख्यातवक्तृकप्रज्ञा ज्ञातशास्त्रार्थमर्मकः ।
कः शिष्यस्त्वादृशो गच्छेऽतुच्छे मच्चित्तविभ्रमः ॥ १४६ ॥
इत्युक्तिभिस्तमानंद्य प्रायश्चित्तं तदा गुरुः ।
प्रददेऽस्य निजे पट्टे तथा प्रातिष्ठिपच्च तम् ॥ १४७ ॥
स्वयं तु भूत्वा निस्संगस्तुंगदुंगभुवं तदा ।
हित्वा प्राच्यर्षिचीर्णाय तपसेऽरण्यमाश्रयत् ॥ १४८ ॥
कायोत्सर्गी कदाप्यस्थादुपसर्गसहिष्णुधीः ।
कदापि निर्निमेषाक्षः प्रतिमाभ्यासमाददे ॥ १४९ ॥
कदाचित्पारणे प्रांताहारधारितशंवरम् ।
कदाचिन्मासिकाद्यैश्च तपोभिः कर्म सोक्षिपत् ॥ १५० ॥
एवं प्रकारमास्थाय चारित्रं दुश्चरं तदा ।
आयुरंते विधायाथानशनं स्वर्ययौ सुधीः ॥ १५१ ॥
इतश्च सिद्धव्याख्याता विख्यातः सर्वतोमुखे ।
पांडित्ये पंडितंमन्यपरशासनजित्वरः ॥ १५२ ॥
समस्तशासनोद्योतं कुर्वन्सूर्य इव स्फुटम् ।
विशेषतोऽवदानैस्तु कृतनिर्वृतिनिर्वृतिः ॥ १५३ ॥
असंख्यतीर्थयात्रादिमहोत्साहैः प्रभावना ।
कारयद्धार्मिकैः सिद्धो वचःसिद्धिं परां दधौ ॥ १५४ ॥
श्रीमत्सुप्रभदेवनिर्मलकुलालंकारचूडामणिः ।
श्रीमन्माघकवीश्वरस्य सहजप्रेक्षापरीक्षानिधिः ।
तद्वृत्तं परिचिन्त्य कुग्रहपरिष्वंगं कथंचित्कलिः
प्रागल्भ्यादपि संगतं त्यजत भो लोकद्वये सिद्धये ॥ १५५ ॥
श्रीचंद्रप्रभसूरिपट्टसरसीहंसप्रभः श्रीप्रभा-
चंद्रः सूरिरनेन चेतसि कृते श्रीरामलक्ष्मीभुवा ।
श्रीपूर्वर्षिचरित्ररोहणगिरौ सिद्धर्षिवृत्तात्यया
श्रीप्रद्युम्नमुनींदुना विशदितः शृंगो जगत्संख्यया ॥ १५६ ॥

१५७। ग्रं १६० उभयं ३३८०।

इति श्रीसिद्धर्षिप्रबन्धः.

---

१ D. P. [illegible]. २ II. P. [illegible]

श्रीवीरप्रबन्धः

आंतरारिपुविध्वंसी दुष्कर्मगजयूथहृत् ।
अष्टापदोदयद्वर्णश्रीवीरः स्वान्वयः श्रिये ॥ १ ॥
श्रीधीरगणिस्वामिपादाः पांतु यदादरात् ।
कषायादिरिपुव्रातो भवेन्नागमनक्षमः ॥ २ ॥
विबुधा विबुधा यस्योपदेशैरमृताश्रवैः ।
स्वान्ययोरुपकाराय तस्य वृत्तं प्रतन्यते ॥ ३ ॥
पुरं श्रीमालमित्यस्ति गभस्तिरपहस्तितः ।
यदुद्यानद्रुमैः पूर्वपश्चिमावाश्रयद्गिरी ॥ ४ ॥
मंदतामरसत्वं च यत्र बिभ्रति नो जनाः ।
मंदतामरसत्वं च दधते न सरांस्यपि ॥ ५ ॥
श्रीधूमराजवंशीयः कुमुदामोदिमंडलः ।
राजात्र देवराजोस्ति तरंगितनयोदधिः ॥ ६ ॥
वणिक् प्राग्वहरस्तत्र शिवनागाभिधः सुधिः ।
यन्मंत्रैर्ह्रियतेऽत्युग्रद्विजिव्हप्रभवं विषम् ॥ ७ ॥
दृढानुरागी श्रीजैनधर्मे श्रीधरणाभिधम् ।
आराध्य स नागेंद्रं तद्भक्तेरतुषच्च सः ॥ ८ ॥
कलिकुंडक्रमं तस्य सर्वसिद्धिकरं ददौ ।
विषापहारकं सद्यो जपहोमादिकैर्विना ॥ ९ ॥
यः पूत्कारकरस्पर्शैरष्टानामपि संहरेत् ।
विषं नागकुलानां स मंत्रो निष्पुण्यदुर्लभः ॥ १० ॥
स्तवनं स तदा चक्रे तत्संदर्भप्रभावपरिपूतम् ।
स्मरणादपि दुरितहरं ख्यातं धरणोरगेंद्राख्यम् ॥ ११ ॥
तस्य पूर्णलतान्वर्था कांता धर्मद्रुमाश्रिता ।
कुलकंदा वचःपत्रा यशःपुष्पा महःफला ॥ १२ ॥
स्वस्तिवीरस्तयोः पुत्रो रत्नदीप इव स्फुरन् ।
अक्षयार्चिस्तमोहंता दिवसः प्रकटप्रभः ॥ १३ ॥
यस्य कोटिध्वजव्याजाद्वैजयंत्य इवोर्जिताः ।
सुमनस्त्वेन गीर्वाणान् जित्वा वीरः कथं न सः ॥ १४ ॥
स सप्तोद्वाहितः कन्याः सप्तानां व्यवहारिणाम् ।
सप्ताब्धीनामिवामूल्यरत्नौघैर्मंडिताः श्रियः ॥ १५ ॥
श्रीवीरं वंदितुं वीरः श्रीमत्सत्यपुरेऽन्यदा ।
मृते पितरि वैराग्याद्याति पर्वसु सर्वदा ॥ १६ ॥

---

१ H. रारिहरि॰ २ D सः वशोनिः.

अन्यदा तस्करैर्गच्छन् विद्रोतुमयशस्करैः ।
अवेध्यतारवान् शुष्कपत्रैः कारस्करैरिव ॥ १७ ॥
प्रणश्य च तदा शालः श्रेष्ठिनो गृहमागमत् ।
अधृतेश्चागमन्माता गृहद्वारे जनश्रुतेः ॥ १८ ॥
वीरः कुत्र तथा पृष्टे नर्मणा सोऽप्यभाषत ।
चौरैर्वीरो मृषावीरः प्रहतः सत्ववर्जितः ॥ १९ ॥
इत्याकर्ण्य तदंबा च तत्रैवास्थादजीविता ।
अहो अतुच्छं वात्सल्यं मातुर्वाक्यपथातिगम् ॥ २
पितुर्भर्तुः कलाचार्यमित्रयोरुपकारिणः ।
भवेत्कथंचिदानृण्यं जनन्या न कथंचन ॥ २१ ॥
तदा च चौरसंघाताद्वीरो वीरप्रसादतः ।
स्वक्षेत्रेणाक्षतेनागात् शालभादिव कर्पुकः ॥ २२ ॥
दृष्ट्वा स्वांबां गतप्राणां विसरन्निजसंकटम् ।
किमभूदित्यवपृच्छन् यथावृत्तं तदाशृणोत् ॥ २३ ॥
अनुतप्तः प्रियावंधुवीरेणाभिदधे तदा ।
अस्थिभंगं कथं नर्म कृतं मङ्गाग्यदूपकम् ॥ २४ ॥
स प्राह कोऽपि नर्मोक्त्या किं मातेव विपद्यते ।
शल्यं विल्वकवन्मेऽभूदित्याजन्माप्यनिर्गमम् ॥ २५ ॥
वीरः प्राहाथ वैराग्याज्जनन्या मम च स्फुटम् ।
कीदृग्दूरतरं स्नेहसंबंधे पश्यतान्तरम् ॥ २६ ॥
हास्येन मन्मृतिं श्रुत्वा माता सत्येन संस्थिता ।
सत्येपि निधने तस्या वयं किंचिन्मुचोपि न ॥ २७ ॥
उक्त्वेति कोटिमेकैकां कलत्रेभ्यः प्रदाय सः ।
शेषः श्रीसंघपूजासु चैत्यौघे चाव्ययद्धनम् ॥ २८ ॥
परिग्रहपरित्यागं कृत्वा गार्हस्थ एव सन् ।
गत्वा सत्यपुरे श्रीमद्वीरमाराधयन्मुदा ॥ २९ ॥
उपवासान् स (त) दा चाष्ट कृत्वा पारणकं व्यधात् ।
समस्तविकृतित्यागादहो अस्य महत्तपः ॥ ३० ॥
प्रासुकाहारभोजी च स चतुर्विधपौषधी ।
पुरबाह्ये श्मशानादौ कायोऽत्सर्गं निशि व्यधात् ॥ ३१ ॥
दिव्यमानुषतैरश्चोपसर्गेषु समासहिः ।
तप्यमानस्तपस्तीव्रमभवत्तीर्थसन्निभः ॥ ३२ ॥
निजक्रियानुमानेन गुरोरुत्कंठितः सदा ।
एकचित्तो महावीरपादान्ध्यायत्यमंदधीः ॥ ३३ ॥

---

1 H. सा०

प्रदोषसमयेऽन्येद्युः प्रतिमार्थं बहिर्भुवि ।
गच्छन्दूरात्समायांतमायांतं जंगमं शिवम् ॥ ३४ ॥
चारित्रमिव मूर्त्तिस्थं मथुरायाः समागतम् ।
सवर्षशतदेशीयमपश्यद्विमलं गणिम् ॥ ३५ ॥
क्षितिपीठलुठन्मूर्द्धा सर्वाभिगमपूर्वकम् ।
ववंदे वंदितस्तेन धर्मलाभाशिषा च सः ॥ ३६ ॥
अकाले नगराद्बाह्ये धर्मशील क गम्यते ।
इत्युक्ते प्रांतभूमीषु व्युत्सर्गार्थेति सोऽवदत् ॥ ३७ ॥
गणिः प्राहातिथिस्तेऽहमंगविद्योपदेशतः ।
मिलित्वा ते स्वकालाय यामि शत्रुंजये गिरौ ॥ ३८ ॥
वीरोऽवदथश्रेयो दिनं मे यद्भवादृशाः ।
प्रसादमसमं कृत्वोत्कंठते किल मादृशाम् ॥ ३९ ॥
निशां सफलयाम्यद्य तत्पूज्यवरिवस्यया ।
चिंतामणिं करप्राप्तं कः कुण्ठोप्यवमन्यते ॥ ४० ॥
इत्युक्त्वा दर्शयन् स्वीयोपाश्रयं तस्य सद्गुरोः ।
शुश्रूषां च स्वयं चक्रे देहविश्रामणादिकाम् ॥ ४१ ॥
ततश्चाह मुनीशोंग विद्यां त्वमशठः पठ ।
प्रभावकश्रुतज्ञानाद्भवितासि मते यथा ॥ ४२ ॥
वीरः प्राह गृहस्थानां कथं सिद्धांतवाचना ।
नाधीतं पुनरायाति वृद्धत्वाद्विदधे किमु ॥ ४३ ॥
अथाह गुरुरभ्यन्यो भवांतरगतावहम् ।
अंगविद्या महाविद्या तवायाता स्वयंवरा ॥ ४४ ॥
तदर्थं ज्ञापयिष्यामि शीघ्रं तत्पुस्तकं पुनः ।
थारापद्रपुरे[1] श्रीमान्नाभेयस्य जिनेशितुः ॥ ४५ ॥
चैत्यस्य शुकनाशेऽस्ति तं गृहीत्वा च वाचये ।
इत्युक्त्वादात् परिव्रज्यां गुरुर्वीरस्य सादरम् ॥ ४६ ॥
दिशन् ग्रंथस्य तस्यार्थं दिनत्रयमवास्थितः ।
ततो जगाम स श्रीमान् विमलो विमलेऽचले ॥ ४७ ॥
तत्र श्रीवृषभं नत्वा तदेकध्यानमानसः ।
संन्यासात्रिदिवं प्राप पापमातंगकेसरी ॥ ४८ ॥
ततो गुरुनियोगेन वीरस्तत्र पुरे ययौ ।
स्थाने च तत्समादिष्टे श्राद्धेभ्यः प्राप पुस्तकम् ॥ ४९ ॥
अधीता तेन तत्रांगविद्या च गणिविद्यया ।
तस्याः प्रसादतः सोऽभूदुग्रशक्तिर्महातपाः ॥ ५० ॥

१ D. धारा०

अभूदथ परीवारस्तस्य प्राचीनपुण्यतः ।
अबुद्धबोधने सैष नियमं चाग्रहीत्तदा ॥ ५१ ॥
विजहीर्षुर्गणिर्वीरोऽणहिल्लपुरसंमुखम् ।
आजगाम स्थिराग्रामे विरूपानाथसंश्रिते ॥ ५२ ॥
स चात्र वलभीनाथापराख्यो व्यंतराधिपः ।
रात्रौ देवगृहे सुप्तं हन्ति मर्त्यं महारुषा ॥ ५३ ॥
तद्बोधाय महामातृपीठांतर्गणिविद्यया ।
अर्द्धतुर्यकरोन्मानकुंडं कृत्वा महोदयः ॥ ५४ ॥
तत्रस्थैः स निषिद्धोऽपि महाशक्तिभयाच्चतः ।
अस्मादस्थानमीदक्षभयानामक्षतव्रतः ॥ ५५ ॥
झंझादिवातवह्निध्यानवजानन् सुराद्रिवत् ।
कायोत्सर्गस्थितः काये निष्प्रकंपो मनस्यपि ॥ ५६ ॥
उद्यत्किलकिलाशब्दैर्भीतिं बाह्ये स्वयं वदन् ।
आययौ वलभीनाथ आतंकं विदधज्जने ॥ ५७ ॥
व्यकार्षीद्धस्तिनः पूर्वं जंगमानिव पर्वतान् ।
तमाश्रितान् सुरेंद्रेण सह वैरभयादिव ॥ ५८ ॥
तस्य रेखा न लंघंते मर्यादां सागरा इव ।
उन्नतावनतैः शुंडादंडैरुड्डामरा अपि ॥ ५९ ॥
ततः प्रसर्पतः सर्पान् सदर्प्पानैक्षयत्तराम् ।
दृष्टिनिर्यद्विषज्वालान्भस्मीभूतान्यदेहिनः ॥ ६० ॥
तां रेखामनतिक्रम्य स्थितांस्तान्वीक्ष्य निर्जरः ।
विलक्ष्य इव दध्यौ स महिमास्य जनातिगः ॥ ६१ ॥
ततो राक्षसरूपाणि भैरवाणि चकार सः ।
क्षोभाय तस्य नाभूवन्प्रतिकूलानि तान्यपि ॥ ६२ ॥
अनुकूलैरथारंभि मुमुक्षोर्विप्रलंभनम् ।
मातापिताकलत्राणि क्रंदंति समयैक्षयत् ॥ ६३ ॥
तत्वज्ञस्तान्यवाज्ञासीन्मोहविध्वंसकोन्नतेः ।
वीरे कुंभोद्भवेऽमुत्र दक्षिणां दिशमाश्रिते ॥ ६४ ॥
कुर्मावेपि सुराचाल्यः सत्ववीरतपोनिधिः ।
द्रष्टुं पूर्वाचलं प्राप्ते कौतुकादिव भास्करे ॥ ६५ ॥
प्रत्यक्षीभूय गीर्वाण उवाचासौ तपोनिधिम् ।
अखर्वपर्वताध्वन्यध्वन्यवध्वस्तवाक्रमम् ? ॥ ६६ ॥
पूर्वं सुरनरेशानां मानभंगो मया दधे ।
त्वां विना नैव केनापि भक्तौ मे स्खलनं कृतम् ॥ ६७ ॥

---

१ P omits णि क्रंदंति ... सुरा० २ D. स्यकोन्मति. ३ D कजयार्यं च चलित्वा वपिसुरा० ?

पूर्वास्थडकरीपुर्यामागतोऽहं शिवालये।
भीमेश्वराख्ये तल्लिंगमप्रणम्यैव च स्थितः ॥ ६८ ॥
चरणौ तु जलाधारे न्यस्य सुप्तश्च तत्क्षणे।
तत्रागत्य नृपोऽपृच्छन्मां स विस्मयमानसः ॥ ६९ ॥
नमसि त्वं न किं देवमज्ञानाच्छकितोऽथवा।
तदावोचमहं राजन् हेतुं ते कथये स्फुटम् ॥ ७० ॥
शिवोयं शक्तिसंबद्धो मां दृष्ट्वा लज्जया नतः।
भविष्यति यतो लज्जा पुंसः पुंसोऽग्रतोभवेत् ॥ ७१ ॥
एवं स्थितेपि देवेस्मिन्नमति प्राकृतो जनः।
पशूपमे जने तस्य का व्रीडास्था ममापि च ॥ ७२ ॥
चित्ते कौतुकमत्रास्ति मत्प्रणामात्तदास्य चेत्।
उत्पातः कोपि जायेत तत्र दोषोपमोपि मे ॥ ७३ ॥
इत्युक्त्वा विरते मय्यब्रवीद्भूमिपतिस्ततः।
वैदेशिका भवन्त्यत्र स्फारवाक्यक्रमाः सदा ॥ ७४ ॥
चर्मदेहः पुमान् देवसाम्यं स्वस्येह मन्यते।
हास्यं स चेतनानां तद्बालानां विप्रलंभनम् ॥ ७५ ॥
या काचिदस्ति ते शक्तिस्तां प्रयुंक्ष्व न ते पुनः।
दोषोऽणुरपि कार्येऽत्र नगरं साक्षि वर्त्तताम् ॥ ७६ ॥
श्रुत्वेति प्रणतिं यावत्कुर्वे संगत्य संनिधौ।
आट्टकृत्य तावत् पुस्फोट लिंगं लोकस्य पश्यतः ॥ ७७ ॥
अथाहमवदं भीतिसंभ्रमभ्रान्तलोचनम्।
भूपालं बालवत्कंठरोधाव्यक्तस्वरं तदा ॥ ७८ ॥
मदुत्तेजनदंभेन त्वया वैरं प्रसाधितम्।
लिंगेऽस्मिन्नर्चनक्लेशैर्दूनेन चिरकालतः ॥ ७९ ॥
श्रुत्वेति पादयोर्मौलिं मीलयित्वानुनीतिभूः।
राजा सपरिवारोऽयमाह देवस्त्वमेव नः ॥ ८० ॥
तीर्थं त्वयैव दत्तं स्यादन्यथोच्छिन्नमेव तत्।
शिवस्त्वमेव देहस्थः पाषाण इतरः पुनः ॥ ८१ ॥
एवमुक्तो योगपट्टेनावेष्ट्यमिदं न्वहम्।
संबद्धद्विदलं तत्र लिंगमद्यापि पूज्यते ॥ ८२ ॥
महाबोधे ततो बौद्धविहारशतपंचकम्।
तान् विजित्य मया भग्नं तत्र सामर्थ्यतो निजात् ॥ ८३ ॥
तथा मम प्रतिज्ञास्ति संमुखं विजये ध्रुवम्।
महाकालाख्यया शंभुभीत्या मे कोणके स्थितः ॥ ८४ ॥
सोमेश्वरजयार्थं च चलित्वागममत्र च।

सोऽत्रागत्यामिलद्गीतो मम ब्राह्मणरूपतः ॥ ८५ ॥
प्राहेदं दारुणं क्षेत्रं पवित्रं दत्तमत्र च ।
महोदयाय तद्याचे दातुमीशो भवान्यदि ॥ ८६ ॥
मयोचेहं क्षमो दाने मार्गणानां यथेप्सितम् ।
घटमूटकटंकानां लक्षै राज्यान्नहेमसु ॥ ८७ ॥
ततोऽसौ ब्राह्मणोऽवोचन्मम किंचिद्ददस्व तत् ।
याचस्वेति मदुक्ते च स प्राह श्रूयतां ततः ॥ ८८ ॥
अत्र क्षेत्रे स्थिरो भूत्वावतिष्ठस्व महाबल ।
श्रुत्वेति ज्ञानतो यावदीक्षे तावत्स शंकरः ॥ ८९ ॥
आतंकात्सोमनाथाख्यं छलितुं मां समाययौ ।
वामनो बलिभूपालमिव वृद्धद्विजच्छलात् ॥ ९० ॥
दंडं कमपि मे देहि यथा सत्यः प्रतिश्रवः ।
मम स्यादन्यथात्रापि स्थितस्तेसि व्यथावहः ॥ ९१ ॥
अथ स प्राह नाहंयुस्त्वय्यहं तद्वचः शृणु ।
मद्यात्रा तस्य पूर्णास्याद्यस्तामद्य न पश्यति ॥ ९२ ॥
अन्यथार्द्धकला सा स्यादित्युक्त्वा स्वाश्रयं गतः ।
वर्त्ततेऽद्यापि तत्ताद्दग्मद्वचः कोपि लंघयेत् ॥ ९३ ॥
ततः प्रभृत्यसौ ग्रामः स्थिरमित्याख्ययाभवत् ।
मम शंभोश्च वाचां हि स्थिरता नहि दुर्लभा ॥ ९४ ॥
इति न स्खलिता शक्तिर्मम मर्त्यैः सुरैरपि ।
त्वं तु श्वेतांबराकारो देवं मत्तोपि शक्तिमान् ॥ ९५ ॥
नावमंतुमहं शक्तः समीक्षे दूरतः स्थितः ।
रेखाकुंडं ज्वलत्वार[1] ? यदिदं शंकितः पुमान् ॥ ९६ ॥
तुष्टस्तव तपःशक्तेः वांछितं प्रार्थय द्रुतम् ।
अक्षेपात्पूरयिष्ये तत्कल्पवृक्ष इव ध्रुवम् ॥ ९७ ॥
पारयित्वा ततो वीरः परमेष्ठिनमस्कृतेः ।
जगादनादरो अत्र सर्वसंगमुचो वयम् ॥ ९८ ॥
तथापि किंचिन्मद्भक्तेर्गृहाणेत्युदितामुना ।
मुनिराह वधं रक्ष तवाप्यायुर्विनश्वरम् ॥ ९९ ॥
दुर्गतौ पतने हेतुर्मौलोयं प्राणिनां वधः ।
तथाख्यातैः पुरावृत्तैर्हर्षो मे नास्त्यहंकृतैः ॥ १०० ॥
महादानेषु सामर्थ्यमात्मनश्च त्वयोदितम् ।
जीवाभयप्रदानं च सर्वेभ्योप्युत्तमं पुनः ॥ १०१ ॥
हर्षादाह स तथ्यं ते वचो जानेऽहमप्यदः ।
स्वेच्छाचारी परीवारो मम तस्य प्रियं त्विदम् ॥ १०२ ॥

1 P. ज्वार ? H omits

त्वद्वचोभिः सुधासारसारैरित्यतिहर्षितः ।
प्रासादजगतीमध्ये जीवानां रक्षये वधम् ॥ १०३ ॥
श्रीवीरोप्याह भूयात्तद्राज्ञा ज्ञातमिदं वचः ।
आचंद्रकालिकं वृत्तमावयोः पुण्यहेतवे ॥ १०४ ॥
अणहिल्लपुरे चासीच्चक्रवर्त्ती च नूतनः ।
श्रीमान् चामुंडराजाख्यस्तत्रापि समये नृपः ॥ १०५ ॥
आज्ञापथदिदं च श्रीविरूपानाथ एव तत् ।
प्रधानैस्तैर्नृपस्याथ हर्षात्तत्राययौ च सः ॥ १०६ ॥
सत्कर्मणि चिकीर्षोत्र कस्य नो महतेत्यसौ ।
विज्ञाय जीवरक्षायै तच्छासनमचीकरत् ॥ १०७ ॥
आहूतश्च ततो राज्ञा पुनरप्याययौ तदा ।
अणहिल्लपुरं धीरस्तत्रावोधानवोधयत् ॥ १०८ ॥
आचार्यत्वप्रतिष्ठास्य विदधे परमर्षिभिः ।
सूरिभिर्वर्द्धमानाख्यैः संघाध्यक्षं महोत्सवात् ॥ १०९ ॥
तत्र श्रीवल्लभीनाथः श्रीवीरप्रभुभक्तितः ।
प्रत्यक्षीभूय धर्माख्यां शृणोत्यस्याग्रतः स्थितः ॥ ११० ॥
परं क्रीडाप्रियत्वेन नरं प्रेक्ष्य सलक्षणम् ।
अवतीर्यास्य देहे च क्रीडते पीडयाविना ॥ १११ ॥
श्रीमान् वीरोपि तद्दृष्ट्वावादीदेवं न सांप्रतम् ।
व्यंतराधीश ते केलिं मनुष्या असहिष्णवः ॥ ११२ ॥
एवं निववृते चासौ प्रभुणा स निषेधितः ।
तथाह मम तोषस्य फलं किमपि नाथ वः ॥ ११३ ॥
उवाच पुनरानंदात्तव सामर्थ्यमस्ति किम् ।
अष्टापदाचले गंतुं श्रीजिनभवनोन्नते ॥ ११४ ॥
स देवः प्राह शक्तिर्नो गन्तुं नावस्थितौ पुनः ।
तत्र सन्ति यतः सूरे व्यंतरेन्द्रा महाबलाः ॥ ११५ ॥
अवस्थातुं न शक्नोमि तत्तेजः सोढुमक्षमः ।
याममेकं त्वयस्थास्ये यद्यस्ति कौतुकं तव ॥ ११६ ॥
अधिकं तु क्षणं मयि त्वमवस्थास्यसेऽत्र चेत् ।
तत्रैव भवानथागंता हन्तुं ध्रुवं स्वदः ॥ ११७ ॥
मुनौ तत्प्रतिपन्नाने धवलं धवल ततः ।
विकृत्यारोहयत्तं च यानवैक्रियमग्रतम् ॥ ११८ ॥
क्षणेनैव ययौ तत्र गिरिशृंगे स ऊर्ध्वगः ।
सुपादुकात्याननात चैत्यद्वारे ततो मुनिम ॥ ११९ ॥

---

1 D ...

द्वारपांचालिकाजानुपार्श्वात्यशिखरांतरे।
तस्थौ निलीय तत्रस्थदेवज्योतिरसासहिः॥ १२०॥
गव्यूतत्रितयोच्छ्रायं योजनायामविस्तरम्।
चतुर्द्वारं महाचैत्यमाद्यचक्रिविधापितम्॥ १२१॥
दृष्ट्वा प्रमाणवर्णैश्च प्रतिमास्ता यदोदितैः।
एकैकस्मान्नमस्काराच्छुत्वा स प्राणमन्मुदा॥ १२२॥
प्रभावनाविधित्सायै तदभिज्ञानमानयत्।
पंचशाक्षतान् तस्मादग्रहीन्नाकिढौकितान्॥ १२३॥
निशायाः प्रथमे यामे चलितस्तीर्थयात्रया।
प्राग्वत्स पुनरायाच्च द्वितीये घटिकाधिके॥ १२४॥
सौरभामोदतः शालेरक्षतानामुपाश्रयः।
विमानमिव साधर्मे सुमनःसंवृतो बभौ॥ १२५॥
पृष्टे मुनिभिराहाथ गुरुरष्टापदाचले।
वंदयध्वं मुदा देवान् श्राद्धाग्रे कथयंश्च तम्॥ १२६॥
चैत्ये च मिलितः संघः श्रीमान्भूमिपतेः स च।
आख्यापयन्महाश्चर्यं कौतुकादाययौ स च॥ १२७॥
तेनाकार्यानुयुक्तोऽथाभिज्ञानं पुनराह च।
चतुर्विंशतिसंख्यानां स्वभावाख्यानतोऽर्हताम्॥ १२८॥
तथाहि–वेधउला बेसामलावेरसुप्पलवन्त।
मरगयवन्नाविन्नजिणसोलसकंपणवन्ता॥ १२९॥
नियनियमाणि हिंकारवियभरहिजिनयणाणंद।
तेमईंभाविहिं वंदियारावउनुवीसजिणंद॥ १३०॥
राजाह स्वेष्टदेवानां स्वरूपकथने वरा।
नास्ति प्रतीतिरस्माकमन्यत्किमपि कथ्यताम्॥ १३१॥
अक्षतान् दर्शयामास तैः सामान्यगुणोदयान्।
वर्णैः सौरभविस्तारैरपूर्वान्मानवव्रजे॥ १३२॥
ते द्वादशांगुलायामा अंगुलं पिंडविस्तरे।
अवेधंत स्ववर्णेन महीपालेन ते ततः॥ १३३॥
पूर्वं तुरुष्कमंगस्य तेऽभूवंस्तदुपाश्रये।
अपूज्यंत च संघेनाष्टापदप्रतिबिंबवत्॥ १३४॥
एवं चातिशयैः सम्यक् सामान्यजनदुस्तरैः।
श्रीमान् वीरगणिः सूरिर्विश्वपूज्यस्तदाभवत्॥ १३५॥
अन्यदा मंत्रिणं वीरं रहः प्राह महीपतिः।
पूर्वादिष्क्रमाख्याय्याद्राज्यं पालयतो मम॥ १३६॥

1 P D निसा०

समनोमंडलाश्रेयो वचःसिद्धिकुलालयः ।
वीरो गुरुश्च मंत्री च ममार्त्तीन्दुविधुन्तुदः ॥ १३७ ॥
एकश्चिताज्वरोऽस्माकं महाबाधानिबंधनम् ।
श्रुत्वा प्रतिविधेहीदं कस्याग्रे नास्य कथ्यते ॥ १३८ ॥
अथाह वीरमंत्रीश स्वामिन्नादिश्यतां मम ।
क्रियते भृत्यलेशेन किं मयान्यद्धीशितुः ॥ १३९ ॥
राजाह मम शुद्धान्तकान्तानां संभवे सति ।
स्रावो भवति गर्भस्य तत्र प्रतिविधिं कुरु ॥ १४० ॥
इत्यादिष्टो महामात्यः श्रीमद्वीरप्रभोः पुरः ।
व्यजिज्ञपत्ततः सूरिमूरीकृत्य स चाब्रवीत् ॥ १४१ ॥
अभिमंत्रितवासैर्मे क्रियतामभिषेचनम् ।
अवरोधपुरंध्रीणां प्रजायंते सुता यथा ॥ १४२ ॥
एवं च विहिते मंत्रिप्रभुणा वचने गुरोः ।
श्रीमद्वल्लभराजाद्या नरेंद्रस्याभवन् सुताः ॥ १४३ ॥
अष्टादशशतीदेशे विहरन्नन्यदा प्रभुः ।
आगाडुंबरिणी ग्रास्ये[1] ग्राम्येतरनरान्विते ॥ १४४ ॥
विशुद्धोपाश्रये तत्र स्थितो गत्वा निशागमे ।
व्युत्सर्गाय वहिःप्रेतवनमाशिश्रिये मुदा ॥ १४५ ॥
परमारवराम्नायसद्रत्नाकरहीरकः ।
रुद्राभिधः स तं दृष्ट्वा नमश्चक्रेऽतिभक्तितः ॥ १४६ ॥
उवाच च मुने मास्थाः श्वपदाव्रजसंकुले ।
श्मशाने ग्राममध्येन आगच्छ प्रासुकाश्रये ॥ १४७ ॥
तिष्ठ सौख्यात्तदाकर्ण्य मुनिः प्राह गुरोः सदा ।
कायोत्सर्गो वहिः पृथ्व्यां कुर्वंति प्रभवस्ततः ॥ १४८ ॥
आधेयानाधृती राजपुत्रः श्रुत्वेति सोगमत् ।
निजं धाम ततस्तस्या जंबूपायनमागमत् ॥ १४९ ॥
स सिस्वादयिषुर्जंबूफलान्यत्रोटयत्तदा ।
वृंतं तत्र कृमिं दृष्ट्वा शंकया धूनयन् शिरः ॥ १५० ॥
जगाद कृमयः सूक्ष्माः फलेष्वपि यदा भवेत् ।
अदृष्टं किमिव स्वाद्यं निशादौ हि विवेकिना ॥ १५१ ॥
आहूय ब्राह्मणैः पृष्टैः प्रायश्चित्तं प्रदेशितम् ।
विशुद्धये द्विजन्मभ्यो देयः स्वर्णमयः कृमिः ॥ १५२ ॥
दध्यौ श्रुत्वेति संकल्प्य द्वितीयोपि कृमिर्मया ।
हंतव्यो नावगच्छामि ततो धर्ममसुं हृदि ॥ १५३ ॥

---

1 D. ग्रामे

पृष्टव्यश्च विचारोऽयं कस्यापि शमिनो मुनेः ।
प्रातर्जैनमुनिं ग्राममध्यमागतमानमत् ॥ १५४ ॥
ततः पप्रच्छ संदेहं गुरुं विस्तरतोऽवदत् ।
जीवाः सर्वत्र तिष्ठंति द्विधा स्थावरजंगमाः ॥ १५५ ॥
स्थावरास्ते धरानीरवह्निवातमहीरुहाः ।
जंगमाश्च परिज्ञेयास्ते द्वित्रिचतुरिंद्रियाः ॥ १५६ ॥
पंचेंद्रियाः सुरास्तिर्यङ्नरनैरयिका अपि ।
गजमीनमयूराद्याः स्थलनीलांबरोपमाः ॥ १५७ ॥
वनस्पतिस्तथा जीवाधारो मूलफलादिके ।
उत्पद्यंते विपद्यंते यज्जीवास्तत्र भूरिशः ॥ १५८ ॥
धर्मः कृपैव जीवानां विवेकस्थ विचारय ।
इति संयमिनो वाचं स श्रुत्वा प्रत्यबुध्यत ॥ १५९ ॥
सर्वं हित्वाग्रहीद्दीक्षामक्षीणश्रेयसे स च ।
शास्त्रेष्वधीतपूर्वी च जैनागममवाचयत् ॥ १६० ॥
महाविद्वान् स गीतार्थक्रियाज्ञानद्वयेप्यभूत् ।
प्रदीप इव दीपेन गुरुणा समदीधितिः ॥ १६१ ॥
श्रुतज्ञानात्परिज्ञाय स्वायुःपर्यंतमन्यदा ।
गच्छभारं च शिष्येद्दो भद्रे श्रीवीरसूरयः ॥ १६२ ॥
श्रीचंद्रसूरिरित्याख्या पूर्वकं ते न्यवेशयन् ।
स्वयं तु योगरोधेन तस्थुर्निष्कंपसंवराः ॥ १६३ ॥
हित्वा देहं जरत्केंद्रमिव दिव्यभुवं ययुः ।
श्रीवीरप्रभवो बोधशक्तेराधारतां गताः ॥ १६४ ॥
वसुवह्निनिधौ जन्म ९३८ व्रतं व्योमवसुग्रहे ॥ ९८० ॥
इंदुनंदग्रहे ९९१ वर्षेऽवसानमभवत्प्रभोः ॥ १६५ ॥
गार्हस्थ्यं समभूत्तस्य त्रिंशन्यास्त्रिंशते समाः ।
एकादशाब्दोऽथायुस्त्रिणंवाशाब्दमभूत् ॥ १६६ ॥
श्रीवीरसूरेर्विदितं चरित्रं कर्णायनंसं कुरुतात्र संतः ।
[illegible] श्रीजिनबोधितःश्रीमंथा मानंदनुणप्रबोधा ॥ १६७ ॥
श्रीचंद्रप्रभसूरिपट्टसरसीहंसः प्रभ. श्रीप्रभा-
चंद्रः सूरिरनेन चेतसि कृते [illegible] ।
श्रीपूर्णर्षिगणेन्दुवंशतिलके श्रीवीरस्य सूरेः प्रभोः
श्रीमद्यशुर्वीकृता [illegible] ॥ १६८ ॥
[illegible] श्रीरिनसुनौ
[illegible] ।

कवित्वक्षोदाद्यामृतरुचिसखित्वं च मनुते ।
शुभध्यानोपायं परिहृतमदादिः स जयतु ॥ १६९ ॥
ग्रं० १६९ अ० ५ उभयं ३५११ ॥
इति श्रीवीरगणिप्रबंधः ।

---

अथ श्रीशांतिसूरिप्रबंधः.

पातु वो वादिवेतालः कालो दुर्मंत्रवादिनाम् ।
शांतिसूरिः प्रभुः श्रीमान् प्रसिद्धः सर्वसिद्धिदः ॥ १ ॥
व्याचिख्यासां तदाख्याने दधे तद्भक्तिभावितः ।
अनूरुः सूरसेवालः किं न व्योमाध्वजांघिकः ॥ २ ॥
अस्ति श्रीगूर्जरो देशः कैलासाद्रिनिभः श्रिया ।
धनदाधिष्ठितश्चारुमानसामानसंगमः ॥ ३ ॥
अणहिल्लपुरं तत्र नगरं नगरप्रभम् ।
वचःप्रभुद्विजिह्वानां यत्र सद्वचनामृतैः ॥ ४ ॥
श्रीभीमस्तत्र राजासीद्धृतराष्ट्रभवद्विषन् ।
सदाभासार्जुनश्रीको लोकोत्तरपराक्रमः ॥ ५ ॥
श्रीचंद्रगच्छविस्तारिशुक्तिमुक्ताफलस्थितिः ।
थारापद्र इति ख्यातो गच्छः स्वच्छधियांनिधिः ॥ ६ ॥
सच्चारित्रश्रियां पात्रं सूरयो गुणभूरयः ।
श्रीमद्विजयसिंहाख्या विख्याताः संति विष्टपे ॥ ७ ॥
श्रीमत्संपकचैत्यस्य प्रत्यासन्नाश्रयस्थिताः ।
भव्यलोकारविंदानां बोधं विदधतेऽर्कवत् ॥ ८ ॥
तथा-श्रीपत्तनप्रतीचीनोऽलघुरप्यलघुस्थितिः ।
उन्नतायुरितिग्राम उन्नतायुर्जनस्थितिः ॥ ९ ॥
तत्रास्ति धनदेवाख्यः श्रेष्ठी श्रीमालवंशभूः ।
अर्हद्गुरुपदद्वंद्वसेवामधुकरः कृती ॥ १० ॥
धनश्रीरिव मूर्तिस्था धनश्रीस्तस्य गेहिनी ।
तत्पुत्रो भीमनामाभूत्सीमा प्रज्ञाप्रभावताम् ॥ ११ ॥
कंबुकंठच्छत्रमौलिराजानुभुजविस्तरः ।
छत्रपद्मध्वजास्तीर्णपाणिपादसरोरुहः ॥ १२ ॥
सर्वलक्षणसंपूर्णः पुण्यैर्नैपुण्यशेवधिः ।
विज्ञातो गुरुभिः संघभारधौरेयतानिधिः ॥ १३ ॥
अलंचक्रुर्विहारेण ग्राममग्राम्यबुद्धयः ।
तत्ते वितंद्रविज्ञानविज्ञातशुभसंभवाः ॥ १४ ॥

---

१ D द्वारा P थारापद्रि० २ H प्रतीचीतो.

श्रीनाभेयं प्रणम्याथ चैत्ये तस्य गृहं ययुः ।
अर्थयांचक्रिरे भीमं धनदेवसमीपतः ॥ १५ ॥
कृतपुण्योऽसि मत्पुत्रश्चेत्पूज्यार्थप्रसाधकः ।
इत्युक्त्वा प्रददौ पुत्रममुत्रेह च शर्मणे ॥ १६ ॥
एवं तैस्तदनुज्ञातैरदीक्ष्यत शुभे दिने ।
भीमो मिथ्यादृशां भीम उदग्रप्रतिभाबलः ॥ १७ ॥
शांतिरित्यभिधा तस्य विधेयस्य व्यधीयत ।
स कलाः सकलाः प्राप पूर्वसंकेतिता इव ॥ १८ ॥
समस्तशास्त्रपाथोधिपारदृश्वाऽभूत्क्रमात् ।
विचिंत्येति निजे पट्टे प्रभवस्तं न्यवेशयन् ॥ १९ ॥
स्वगच्छभारं विन्यस्य तत्र प्रायोपवेशनात् ।
प्रेत्यार्थं साधयामासुस्तेऽथ संसृतिसंहृतौ ॥ २० ॥
अणहिल्लपुरे श्रीमद्भीमभूपालसंसदि ।
शांतिसूरेः कवींद्रोऽभूद्वादिचक्रीति विश्रुतः ॥ २१ ॥
अन्यदावंध्रिदेशीयः सिद्धसारस्वतः कविः ।
ख्यातोऽभूद्धनपालाख्यः प्रचेतस इवापरः ॥ २२ ॥
स गोरसे द्व्यहातीते साधुभिर्जीवदर्शनात् ।
यैर्बोध्यत तत्पूज्यश्रीमहेन्द्रा गुरोर्गिरा ॥ २३ ॥
गृहीतदृढसम्पर्कः कथां तिलकमञ्जरीम् ।
कृत्वा व्यजिज्ञपत् पूज्यान् क एनां शोधयिष्यति ॥ २४ ॥
विचार्य तैः समादिष्टं संति श्रीशांतिसूरयः ।
कथांते शोधयिष्यंति सोऽथ पत्तनमागमत् ॥ २५ ॥
तदा च सूरयः सूरितत्त्वस्मरणतत्पराः ।
देवतावसरे ध्यानलीना आसन्मठांतरे ॥ २६ ॥
प्रतीक्ष्याणां प्रतीक्षायामुपयुक्तः कवीश्वरः ।
नूतनाध्ययनं शिष्यमेकमद्भुतमब्रवीत् ॥ २७ ॥
तथाहि—खचरागमने खचरो हृष्टः खचरेणांकितपत्रधरः ।
खचरखरं खचरश्चरति खचरमुखि खचरं पश्य ॥ २८ ॥
इदं व्याख्याहि चेद्वेत्सि तत्तु पंडितमंडनः ।
इत्याकर्ण्य स च व्याख्यादिदं वृत्तमखण्डितः ॥ २९ ॥
श्रुत्वेति न कथयिष्यामी प्राह इष्ट इदं कियत् ।
श्रीशांत्याचार्यपादानां प्रभावो वर्णनीयते ॥ ३० ॥
उपन्यासं प्रतिज्ञायामस्य सर्वज्ञजीवयोः ।
कर्मोन्मर्मोऽपरोऽन्यध्वनिना विदधे च सः ॥ ३१ ॥

[illegible]

सिंहासनमलंचक्रे गुरुभिस्तावदाशु तैः ।
अपरो मातृकापाठोचितशिष्यस्तथोच्यत ॥ ३२ ॥
इदानीं किं कृतं वत्स स्तंभावष्टंभिना त्वया ।
स प्राहानेन यत्प्रोक्तं तत्सर्वमवधारितम् ॥ ३३ ॥
वदेति प्रभुभिः प्रोक्ते निस्वानध्वानधीरगीः ।
उज्ज्ञग्राहातिकुग्राहव्यूहसंहरणाग्रहः ॥ ३४ ॥
श्रुत्वेति धनपालोपि चमत्कारातिपूरितः ।
उवाच भारती किं नु प्राप्ता बालर्षिरूपतः ॥ ३५ ॥
प्रेषयध्वं मया सार्धममुमेव धियां निधिम् ।
गुरुसंदेहसंदोहशैलदंभोलिविभ्रमम् ॥ ३६ ॥
अथ ते सूरयः प्रोचुः कालोऽस्य पठितुं ततः ।
क्लिष्टप्रमाणशास्त्राणि परग्रंथेष्वधीतिनः ॥ ३७ ॥
पात्रं चेच्छास्त्रपाथोधिर्वादिकल्लोलितं भवेत् ।
इत्याशानस्ततो नायमध्यायाद्व्यतिरिच्यते ॥ ३८ ॥
सिद्धसारस्वतो विद्वानथोचे प्रभुभिर्ध्रुवम् ।
देशः शृंगारणीयोऽयं मालवः स्वक्रमांबुजैः ॥ ३९ ॥
इत्याकर्ण्य प्रभुः प्रोचे चेन्निर्बंधोऽयमत्र वः ।
आपृष्टव्यः सदा संघः प्रधानाचार्यसंगतः ॥ ४० ॥
ततस्तदनुमत्या तेऽवंतिदेशे व्यजीहरन् ।
कृताः श्रीभीमभूपालप्रधानैः सपरिच्छदैः ॥ ४१ ॥
पथि संचरतां तेषां निशि संगत्य भारती ।
आदेशं प्रददे वाचा प्रसादातिशयस्पृशा ॥ ४२ ॥
स्वस्य दर्शननिष्णाता ऊर्ध्वे हस्ते त्वया कृते ।
चतुरंगसभाध्यक्षं विद्रविष्यंति वादिनः ॥ ४३ ॥
सक्रोशं योजनं धारानगरीतः समागमत् ।
तस्य तत्र गतस्य श्रीभोजो हर्षेण संमुखः ॥ ४४ ॥
एकैकवादिविजये पणः संविदधे तदा ।
मदीया वादिनः केन जय्या इत्यभिमंत्रितः ॥ ४५ ॥
लक्षं लक्षं प्रदास्यामि विजये वादिनं प्रति ।
गूर्जरस्य बलं वीक्ष्यं श्वेतभिक्षोर्मया ध्रुवम् ॥ ४६ ॥
विश्वदर्शनवादींद्रान् स राजः पर्षदि स्थितः ।
जिग्ये चतुरशीतिं च स्वस्वाभ्युपगमस्थितान् ॥ ४७ ॥
अजैषीदूर्ध्वहस्तेन प्रत्येकं प्रतिवासरम् ।
अनायासादसौ सारवक्ता न्यायैकनिष्ठधीः ॥ ४८ ॥

1 D. P. पाथोधे.

लक्षांस्तत्संख्यया दत्वा द्रव्यस्याथ महीपतिः ।
तत आह्वास्त तत्कालं सिद्धसारस्वतं कविम् ॥ ४९ ॥
ततोऽनुययुस्ते तं स भीतो द्रव्यव्ययादतः ।
पंचकोटिव्ययप्राप्तौ वादिपंचशतीजये ॥ ५० ॥
किंनामामुष्य जैनर्षेर्धनपालस्ततोऽब्रवीत् ।
शांतिरित्यभिधा सूरेरस्य शुद्धेति भूपतिः ॥ ५१ ॥
शांतिनाम्ना प्रसिद्धोऽस्ति वेतालो वादिनां पुनः ।
ततो वादं निषेध्यासौ संमान्यातः प्रहीयते ॥ ५२ ॥
तत्कथाशोधकत्वेन नामुमत्र विसृजये ।
अन्यथा मत्सभां जित्वा को यात्यक्षतविग्रहः ॥ ५३ ॥
स्युः पंचदशलक्षेण सहस्रा गुर्जरावनेः ।
षण्णवत्यंकेऽथ तज्जये लक्षद्वादशकं ततः ॥ ५४ ॥
तथा षष्टिसहस्राश्च मया दत्तास्ततोऽधुना ।
कथा शोधयितव्यानु धनपालधियां निधेः ॥ ५५ ॥
पर्यालोच्येति तेनाथ स्थापिताः शांतिसूरयः ।
लक्षैर्द्वादशभिस्तत्र देवो चैत्यान्यचीकरत् ॥ ५६ ॥
अवशिष्टाश्चतुःषष्टिः सहस्रा भूपदत्ततः ।
धारापद्राभिधग्रामे प्रहिताः प्रभुभिस्तदा ॥ ५७ ॥
तत्रत्यादिप्रभोश्चैत्ये मूलनायकधामतः ।
तैर्देवकुलिकाकारि सशालश्च रथो महान् ॥ ५८ ॥
कथा च धनपालस्य तैरशोध्यत निस्तुषम् ।
वादिवेतालबिरुदं सूरीणां प्रददे नृपः ॥ ५९ ॥
कवीश्वरानुयातास्ते गुर्जरेशपराध्र्यधीः ।
प्रत्यागत्याथ ते प्रापुः पत्तनं श्रीनिकेतनम् ॥ ६० ॥
तस्मिंश्च तत्र वास्तव्यजिनदेवस्य धीमतः ।
श्रेष्ठिनस्तनयः पद्मनामा दष्टो महाहिना ॥ ६१ ॥
मांत्रिकैः सर्वपक्षीयैर्मन्त्रतन्त्रविजृम्भिभिः ।
अस्पर्धं प्रतिकारेषु कृतेष्वपि न जीवितः ॥ ६२ ॥
ततः उत्पाद्य गर्तायां निक्षिप्तः स्वजनैः स्म ।
सर्वदृष्टविषाभावात् पुनरुज्जीवनाशया ॥ ६३ ॥
इति विज्ञापितः श्रेष्ठिजिनदेवेन [illegible] ।
संक्षेपेण [illegible] गुरुस्ते [illegible] ॥ ६४ ॥

[illegible]

दृष्टं दर्शयतास्माकं प्रकाश्य क्षितिमध्यतः।
जिनदेवस्तदाकर्ण्य श्मशाने तैः समं ययौ ॥ ६५ ॥
भुवमुत्खाय तस्मिंश्च दर्शिते गुरवोऽमृतम्।
तत्त्वं स्मृत्वास्पृशन् देहं दृष्टश्चासौ समुत्थितः ॥ ६६ ॥
गुरुपादौ नमस्कृत्य पद्मः पद्मनिभाननः।
प्राहाहं गुरवः स स्वजनाः कथमिहागमन् ॥ ६७ ॥
प्राग्वृत्ते कथिते सद्यो जिनदेवेन हर्षितः।
उत्सवाद्गुरुभिः सार्धं स स्वं निलयमागमत् ॥ ६८ ॥
तत्पित्राभ्यर्थिताः पूज्या निजमाश्रममाययुः।
गुरुर्वेश्मागतश्चोपकर्ता प्राप्येत केन सः ॥ ६९ ॥
अथ प्रमाणशास्त्राणि शिष्यान् द्वात्रिंशतं तदा।
अध्यापयंति श्रीशांतिसूरयश्चैत्यसंश्रिताः ॥ ७० ॥
सूरिः श्रीमुनिचंद्राख्यः श्रीनड्डूलपुरादगात्।
अणहिल्लपुरे चैत्यपरिपाटीविधित्सया ॥ ७१ ॥
संपत्संपत्तिरम्यश्रीसंपर्कश्रीजिनालये।
नत्वा श्रीवृषभं सूरिवृषभं प्राणमत्ततः ॥ ७२ ॥
प्रमेया दुःपरिच्छेद्या बौद्धतर्कसमुद्भवाः।
तेनावधारिताः सर्वेऽन्यप्रज्ञानवगाहिताः ॥ ७३ ॥
अपुस्तकः स ऊर्ध्वस्थो दिनानां च दशाशृणोत्।
तत्रागत्य तदाध्यायध्यानधीरमनस्तदा ॥ ७४ ॥
बहुशः कथ्यमानेपि प्रमेये दुर्घटेऽन्यदा।
छात्रेष्वनधिगच्छत्सु पूज्या निर्वेदमागमन् ॥ ७५ ॥
भस्मनि हुतमित्युक्त्वा गुरवोऽत्र निशश्वसुः।
तदा श्रीमुनिचंद्राख्यः सूरिः पूज्यान् व्यजिज्ञपत् ॥ ७६ ॥
सपुस्तकाः पाठका ये मध्यप्रज्ञावतोन्नताः।
किं वदंति त एवात्र पुरा गुरुपुरस्कृताः ॥ ७७ ॥
अपरो बहिरायातः सर्वथानुपलक्षितः।
सोऽपि किं लभते वक्तुं नवेत्यादिशत प्रभो ॥ ७८ ॥
श्रुत्वेति हृच्चमत्कारि तद्वचः प्रभवोऽवदन्।
प्रज्ञायां पक्षपातो नः शिष्याणां नान्यहेतुषु ॥ ७९ ॥
इतोऽह्नि षोडशेऽतीते यद् व्याख्यातं सुदुर्घटम्।
अस्माभिस्तदभिप्रायाद्यथोक्तं सुविवेचनम् ॥ ८० ॥
निशमय्येत्यसौ प्राहस्तदतीतदिनावधिः।
सर्वेष्वहस्सु यच्चोक्तं तदनूद्य यथातथम् ॥ ८१ ॥

१ P. दिनान्यं॰ D दिनानाच. २ D P. भर्षिते.

सद्यश्च तैर्यदाख्यातं परमाद्यैः सुदुःश्रवम् ।
सर्वानुवादसंवादमवादीद्विशदं ततः ॥ ८२ ॥
श्रीशांतिसूरिभिस्तोपपोपतः परिषस्वजे ।
प्रोचे च संनिवेश्यांके रत्नरेणुवृतं भवान् ॥ ८३ ॥
वत्स प्रमाणशास्त्राणि पठाशठमतिर्मम ।
पार्श्वे नश्वरदेहस्य लाभमत्र गृहाण भोः ॥ ८४ ॥
पुनर्व्यजिज्ञपत्सूरिर्मुनिचंद्रप्रभो कथम् ।
अध्येयं स्थानकाभावे दुष्प्रापं स्थानमत्र यत् ॥ ८५ ॥
ततस्ते टंकशालायाः पश्चाद्भागे समर्पयन् ।
आश्रयार्थं गृहं चारु श्राद्धपार्श्वाद्विभूषणम् ॥ ८६ ॥
षट्दर्शनप्रमाणानां शास्त्राण्यक्लेशतोऽथ सः ।
अध्यैष्ट ज्ञापकज्ञात्रोर्योगो दुर्लभ ईदृशः ॥ ८७ ॥
ततः सुविहितानां हि साधूनामाश्रयाः पुरे ।
बभूवुरत्र संवृत्या सर्वसंघचरित्रिणाम् ॥ ८८ ॥
उत्तराध्ययनग्रंथटीका श्रीशांतिसूरिभिः ।
विदधे वादिनागेंद्रसन्नागदमनी हि सा ॥ ८९ ॥
शिष्येण मुनिचंद्रस्य सूरेः श्रीदेवसूरिणा ।
तन्मध्यत उपन्यस्य स्त्रीनिर्वाणबलादिह ॥ ९० ॥
पुरः श्रीसिद्धराजस्य जितो वादे दिगंबरः ।
तदीयवचसां मिश्रा विद्वद्दुःसाधसाधिका ॥ ९१ ॥
अथान्येद्युर्जिते धर्मे धनपालेन मालवे ।
एक एव महीपीठे कविस्त्वमिति मानिते ॥ ९२ ॥
प्रोक्ते च धनपालेन बुधोऽणहिल्लपत्तने ।
अस्ति श्वेतांबराचार्यः शांतिसूरिः परो न हि ॥ ९३ ॥
दिनैः कियद्भिरभ्यागात्तं द्रष्टुं धर्मकोविदः ।
स्वर्गश्रीगर्वसर्वस्वहरं श्रीपत्तनं पुरम् ॥ ९४ ॥
धारापद्रमहाचैत्यप्रत्यासन्नमठं ततः ।
श्रुत्वागादपराह्णेऽसौ बुधदर्शनकौतुकः ॥ ९५ ॥
तदानीं स प्रभुर्देहे कंडूपीडित औषधम् ।
संमृद्य पिहितद्वाराररेस्तदुचितांशुकः ? ॥ ९६ ॥
संवीक्ष्य कुंचिकाछिद्राज्ज्ञापितं यतिभिर्गुरुम् ।
पृच्छयैव विजेष्येऽमुं धर्मो ध्यात्वेति तं जगौ ॥ ९७ ॥

---

१ H. तद्वक्तव्यं. २ H. दूषणं D. श्वेंद्विदूषणं. ३ H. omits it.
४. P. सना D सनागदमनीसमा. ५ P. स्त.

कस्त्वमत्रोत्तरं सूरिः प्रादाद्देव इति स्फुटम् ।
देवः क इति तत्प्रश्ने त्वहमित्युत्तरं ददौ ॥ ९८ ॥
अहं क इति पृच्छायां श्वेति वाचमवोचत ।
श्वा क एतादृशि प्रश्ने त्वमित्युत्तरमातनोत् ॥ ९९ ॥
पुनस्त्वं क इति प्रश्ने वितीर्णे प्राग्वदुत्तरम् ।
तयोश्चक्रकमेतद्विजज्ञेऽनंतमनंतवत् ॥ १०० ॥
ततश्चमत्कृतः सोऽभूद्वार उद्घाटिते सति ।
सतत्त्वोपप्लवग्रंथाभ्यासोपन्यासमातनोत् ॥ १०१ ॥
वितंडाविरते चात्र श्रीशांत्याचार्य उज्जगौ ।
कृतः सर्वानुवादोऽत्र प्रतिज्ञस्तं विवादिनम् ॥ १०२ ॥
ममार्पय निजं वेषं योगपट्टादिकं तथा ।
अंगचेष्टाः समस्तास्ते विधीयंते यथा तथा ॥ १०३ ॥
तथा कृते च सर्वत्र धर्मो वाद्यतिविस्मितः ।
पादावस्य प्रणम्याह नाहमीशो भवज्जये ॥ १०४ ॥
बुधस्त्वमेव च श्रीमान् धनपालोदितं वचः ।
प्रतीतमेव मच्चित्ते तादृक्किमनृतं वदेत् ॥ १०५ ॥
इत्युक्त्वा प्रययौ स्थानं निजं सनिरहंकृतिः ।
अहंकारश्रियां नामाभिचा रपरमौषधिः ॥ १०६ ॥
अथ द्रविडदेशीयोऽन्यदा वादी समागमत् ।
अव्यक्तं भैरवाशब्दान् हाकारं किमपि ब्रुवन् ॥ १०७ ॥
प्रभवस्तस्य भाषायामभिज्ञा अपि कौतुकात् ।
भित्तिस्थे घोटके हस्तं दत्वाभिदधिरे स्फुटम् ॥ १०८ ॥
वद त्वमन्यदेशीयवादिना सह संगतम् ।
अव्यक्तवादी पशुवद्योगोयं तिर्यगाकृतेः ॥ १०९ ॥
वदतीत्थं प्रभौ सांक्रामिकसारस्वतोत्तरे ।
तुरंगमप्रतिकृतिस्तरलं सोऽवदत्कृशम् ॥ ११० ॥
विकल्पैर्गहनैः कष्टादप्यशक्यानुवादिभिः ।
तथा निरुत्तरः पश्चाकारं स्वं तेन लंभितः ॥ १११ ॥
गते निर्विद्यतेऽस्मिंश्च कांदिशीके जनोऽवदत् ।
अस्मिंस्तपति नास्त्यन्यो वादी वाग्देवतावरात् ॥ ११२
विहारं कुर्वतां तेषां धारापद्रपुरेऽन्यदा ।
देवी श्रीनागिनीव्याख्याक्षणो नित्यं समृच्छति ॥ ११३ ॥
तत्पट्टेवासनिक्षेपमासनायाथ ते व्यधुः ।
देव्या सह गुरोस्तस्य समयोऽयं प्रवर्त्तते ॥ ११४ ॥

---

१ H वि० D P कृतस० २ H ना० ३ D तलणे तृत्यं

अन्यदालसनिक्षेपं वैचित्र्याच्चे विसस्मरुः ।
आसने प्रेषणे चात ऊर्ध्वस्था सा चिरं स्थिता ॥ ११५ ॥
ध्यानस्थानां निशामध्ये सद्यो देवीस्वरूपिणी ।
मध्येमठमुपालंभप्रदानायाययौ तदा ॥ ११६ ॥
उद्योतं सूरयो दृष्ट्वा स्त्रियं चातिरतिस्थिताम् ।
प्रवर्त्तकं मुनिं प्रोचुर्नारी प्राप्तात्र किं मुने ॥ ११७ ॥
वेद्मीदं नेति तेनोक्तोऽवदद्देवी स्वयं तथा ।
वासालाभान्ममाद्यांह्री सन्यथावूर्ध्वसंस्थितेः ॥ ११८ ॥
श्रुतज्ञानमयांगानां भूयाच्चेद्घोऽपि विस्मृतिः ।
आयुः षण्मासशेषं तदभिज्ञानादतः प्रभोः ॥ ११९ ॥
स्वगच्छसंस्थितिं कृत्वा प्रेत्य पथ्यं व्यधत्त तत् ।
ज्ञाते ममोचितं ह्येतत्कालं विज्ञापितं प्रभोः ॥ १२० ॥
इत्युक्त्वांतर्हितायां च देव्यां प्रातर्निजं गणम् ।
संघं च मंत्रयित्वा द्वात्रिंशत्सत्पात्रमध्यतः ॥ १२१ ॥
सुधीश्वरास्त्रयः सूरिपदे तेन निवेशिताः ।
श्रीवीरसूरिः श्रीशालिभद्रसूरिस्तथापरः ॥ १२२ ॥
श्रीसर्वदेवसूरिश्च मूर्त्ता रत्नत्रयीव सा ।
सद्वृत्तालंकृता दीप्यमाना सत्तेजसा बभौ ॥ १२३ ॥
नाभूत् श्रीवीरसूरीणां कथंचित्सूरिसंततिः ।
तेषां राजपुरि[1]ग्रामे श्रीनेमि[2]शाश्वतं वपुः ॥ १२४ ॥
शाखाह्वये पुरे विद्वत्कोटीरपरिवारिते ।
सूरयोऽद्यापि वर्त्तंते संघोद्धारधुरंधराः ॥ १२५ ॥
श्रीशांतिसूरयः श्रीमदुज्जयंताचलं प्रति ।
यशोभिधानसुश्राद्धैस्सुतसोढेन[3] संगताः ॥ १२६ ॥
कृत्वा प्रयाणमल्पैश्च दिनैस्तं गिरिमभ्ययुः ।
श्रीनेमिं हृदये ध्यात्वा चक्रुः प्रायोपवेशनम् ॥ १२७ ॥
धर्मध्यानाग्निनिर्दग्धभवार्तिर्वि[4]ततेऽथ सः ।
अज्ञातक्षुत्तृषानिद्राप्रभृत्यंतप्रतीतयः ॥ १२८ ॥
समाधिना व्यतीत्याथ दिनानां पंचविंशतिम् ।
वैमानिकसुरावासमधिजग्मुर्जगन्नताः ॥ १२९ ॥
श्रीविक्रमसंवत्सरतो वर्षसहस्रे गते स षण्णवतौ ।
शुचिसितनवमीकुजकृत्तिकासु शांतिप्रभोरभूदस्तम् १३०
इत्थं श्रीशांतिसूरेर्वरचरितमिदं वादिवेतालनाम्नः
पूर्वश्रीसिद्धसेनप्रभृतिसुचरितव्रातजातानुकारम् ।

---

१ D. पुरी. २ H. नेमिः ३ D. सुश्रापसुतसाढेन. ४ H. विदते.

अद्य प्राचीनविद्वज्जनपरिणमंतामादधानं श्रिये स्ता-
द्ग्रंथाच्चाचंद्रकालं विबुधजनशतैः सम्यगभ्यस्यमानम्॥१३१॥
श्रीचंद्रप्रभसूरिपट्टसरसीहंसप्रभः श्रीप्रभा-
चंद्रः सूरिरनेन चेतसि कृते श्रीरामलक्ष्मीभुवा।
श्रीपूर्वर्षिचरित्ररोहणगिरौ शृंगोऽगमत्षोडशः
श्रीप्रद्युम्नमुनींदुना विशदिता श्रीशांतिसूरिप्रथा॥ १३२॥

ग्रंथ १३६ अ० ९ उभयं ३६,२४६ अक्षर १७.

इति श्रीवादिवेतालप्रबंधः

---

श्रीमहेन्द्रसूरिप्रबंधः

श्रीमन्महेंद्रसूरिभ्यो नमस्कारं प्रशास्महे।
सत्यंकारमिवागण्यपुण्यपण्यस्थिरीकृतौ॥ १॥
श्रीमतो धनपालस्य सालस्यः को गुणस्तुतौ।
यस्याविचलविश्वासे ब्राह्मी तथ्यवचःक्षमा॥ २॥
श्लाघ्यः स धनपालः स्यात्काल आंतरविद्विषाम्।
यद्बुद्धिरेव सिद्धाज्ञा मिथ्यात्वगरलच्छिदे॥ ३॥
तद्वृत्ते वाचमाधास्ये दास्ये तिष्ठन् गुरुक्रमे।
विधास्ये स्वस्य नैर्मल्यमादास्ये जन्मनः फलम्॥ ४॥
अस्त्यवंत्यभिधो देशो देशोनं? वडवामुखम्।
यस्य येन च संत्यत्र कुलानि नव भोगिनाम्॥ ५॥
आधारः पुरुषार्थानां पुरी धारास्ति यत्पुरः।
दानकल्पद्रुबाहुल्यादसारा सामरावती॥ ६॥
तत्र श्रीभोजराजोऽस्ति राजा निर्व्याजवैभवः।
अवैरं यन्मुखांभोजं भारतीश्रीनिवासयोः॥ ७॥
यद्यशःस्वर्णदीतीरे प्रवृत्तव्योमविद्रवे।
विधिः पूजाविधौ नालिकेरवद्विधुमादधे॥ ८॥
इतश्च मध्यदेशीयसंकाश्यस्थानसंश्रयः।
देवर्षिरस्ति देवर्षिप्रभावो भूमिनिर्जरः॥ ९॥
तस्य श्रीसर्वदेवाख्यः सूनुरन्यूनविक्रमः।
ब्राह्मण्यनिष्ठया यस्य तुष्टाः शिष्टा विशिष्टया॥ १०॥
तस्य पुत्रद्वयं जज्ञे विशेषैरर्चितक्रमम्।
आद्यः श्रीधनपालाख्यो द्वितीयः शोभनः पुनः॥ ११॥
तत्रान्यदाययौ चांद्रगच्छपुष्करभास्करः।
श्रीमहेंद्रप्रभुः पारदृश्वा श्रुतपयोनिधेः॥ १२॥

---

१ H. णमंता. २ H. ३६६४२. ३ D. नदडवा०.

जनानां संशयोच्छेदमादधद् व्याख्यया तया ।
विश्रुतः सर्वदेवेन द्विजराजेन स श्रुतः ॥ १३ ॥
स चास्योपाश्रये पायादुचितं मानितश्च तैः ।
दिनत्रयमहोरात्रं तथैवास्थात्समाधिना ॥ १४ ॥
पप्रच्छ प्रभुरप्येवं परीक्षाहेतवे हिं नः ।
सुधियो यूयमायाथ कार्यं वाप्यस्ति किंचन ॥ १५ ॥
स्वयंभुवः परा मूर्तिः प्राहासौ द्विजसत्तमः ।
महात्मनां हि माहात्म्यवीक्षणे सुकृतार्जनम् ॥ १६ ॥
कार्यं नः किंचिदप्यन्यदस्ति तत्रार्थिनो वयम् ।
रहस्यं वद नाख्येयमितरेषां गुणोदधे ॥ १७ ॥
स्थित्वैकांते प्रभुः प्राह ख्यातं यत्कथनोचितम् ।
इति श्रुत्वा जगादासौ पिता वः पुण्यवानभूत् ॥ १८ ॥
राजपूज्यस्ततो लक्षैर्दानं प्रापदसौ सदा ।
गृहे मम निधेः शंका तृष्णाविलसितं ह्यदः ॥ १९ ॥
तं सर्वज्ञातविज्ञाना यूयं यदि ममोपरि ।
अनुग्रहधियाख्यात परोपकरणोद्यताः ॥ २० ॥
ब्राह्मणः सकुटुंबस्तत्स्वजनैः सह खेलति ।
दानभोगैस्ततः श्रीमत्प्रसीद प्रेक्षयस्व तत् ॥ २१॥ युग्मम्
सूरिर्विमृश्य तत्पार्श्वाल्लाभं शिष्योत्तमस्य सः ।
आह सम्यग्भवत्कार्यं विधास्यामो धियां निधे ॥ २२॥
परं न किं भवान् दाता रहः कथ्यं हि नस्त्वया ।
सामि स्वामिन्समस्तस्य दास्यामि तव निश्चितम् ॥ २३ ॥
अहं स्वरुचि भावत्कवस्तुतोऽर्धं समाददे ।
साक्षिणोऽत्र विधीयंतां द्रव्यव्यतिकरो ह्ययम् ॥ २४ ॥
व्याख्याता वेदवेदांगशास्त्रेषु वितथं कथम् ।
वदाम्यत्र तथाप्यस्तु विश्वासाय प्रभोरिदम् ॥ २५ ॥
साक्षीकृत्य ततस्तत्र स्थितान्मेने गुरुस्तदा ।
हृष्टेन गृहमागत्य पुत्रयोर्जगदे तथा ॥ २६ ॥
शुभेऽह्नि सूरिमाह्वास्तज्ज्ञानाज्ज्ञात्वा स तद्भुवम् ।
निश्चित्योवाच तद्द्रव्यं ख्यानयित्वाप स द्विजः ॥ २७ ॥
चत्वारिंशत्सुवर्णस्य टंकलक्षा विनिर्ययुः ।
दृष्टेपि निःस्पृहोत्तंसः सूरिः स्वोपाश्रयं ययौ ॥ २८ ॥

१ हितः. २ D. प्राहाख्याते०. P प्राहाख्यात०. ३ H. स. ४ D. P. तंतसू०.

श्रीमतः सर्वदेवस्य महेंद्रस्य प्रभोस्तथा ।
दानग्रहणयोर्वादो वर्षं यावत्तदाभवत् ॥ २९ ॥
अन्यदा सत्यसंधत्वाद्ब्राह्मणः सूरिमाह च ।
देयेद्रव्येऽत्र ते दत्ते स्वगृहं प्रविशाम्यहम् ॥ ३० ॥
सूरिः प्राहातिरुचितं ग्रहीष्ये वचनं मम ।
भवत्विदं ततो मित्रं गृहाण त्वं द्विजोऽवदत् ॥ ३१ ॥
सूरिराह सुतद्वंद्वादेकं नन्दनं मम ।
सत्यप्रतिज्ञता चेत्ते न वा गच्छ गृहं निजम् ॥ ३२ ॥
इतिकर्तव्यतामूढो द्विजः कष्टेन सोऽवदत् ।
प्रदास्यामि ततो वेश्म निजं चिंतातुरो ययौ ॥ ३३ ॥
तत्रानास्तृतखट्वायां सुप्तोऽसौ निद्रया विना ।
दृष्टश्च धनपालेनागतेन नृपसौधतः ॥ ३४ ॥
विषादः किंनिमित्तोऽयं नंदने मयि तिष्ठति ।
यथादिष्टकरे तत्त्वमाख्याहि मम कारणम् ॥ ३५ ॥
ततः प्राह पिता वत्स सत्पुत्रा हि भवादृशाः ।
पित्रादेशविधाने स्युरीदृग्गाढाभिसंधयः ॥ ३६ ॥
ऋणतः पितरं याति नरकादुद्धरत्यथ ।
सद्गतिं च प्रदत्ते यो वेदे प्रोक्तः सुतः स च ॥ ३७ ॥
श्रुतिस्मृतिपुराणानामभ्यासस्य कुलस्य वः ।
फलं तदेव युष्माकं घट्टणादसदुद्धृतिः ॥ ३८ ॥
ततः शृण्ववधानात्त्वं संति जैना महर्षयः ।
महेंद्रसूरयो यैस्ते द्रव्यमीदृक् प्रदर्शितम् ॥ ३९ ॥
यथाभिरुचितं चैषामर्धदेयं प्रतिश्रुतम् ।
ततः पुत्रद्वयादेकं याचंते करवै हि किम् ॥ ४० ॥
संकटादमुतो वत्स त्वयैव ह्यधुना वयम् ।
मोच्यामहे ततस्तेषां शिष्यो मत्कारणाद्भव ॥ ४१ ॥
कोपगर्भं तदाह श्रीधनपालो धियां निधिः ।
तातोक्तं भवता यादृग् नेदृक्कोऽप्युचितं वदेत् ॥ ४२ ॥
संकाश्यस्थानसंकाशा वयं वर्णेषु वर्णिताः ।
चतुर्वेदविदः सांगपारायणभृतः सदा ॥ ४३ ॥
तथा श्रीमुंजराजस्य प्रतिपन्नसुतोऽभवत् ।
श्रीभोजबालसौहार्दभूमिर्भूमिसुरो ह्यहम् ॥ ४४ ॥
तत्पूर्वजानिह स्वीयान् पुत्रो भूत्वा प्रपातये ।
श्वभ्रे पतितशूद्राणां दीक्षया शावगीतया ॥ ४५ ॥

१ D P. दाना०. २ D. देव. ३ D P. ट्ार्भि०

एकस्त्वमृणतो मोच्यः पात्याः सर्वेऽपि पूर्वजाः ।
इमं कुव्यवहारं नादास्ये सज्जननिंदितम् ॥ ४६ ॥
कार्येणानेन नो कार्यं मम स्वरुचितं कुरु ।
तातमित्थवमत्यासुं स तस्मादन्यतो ययौ ॥ ४७ ॥
अश्रुपूरप्लुताक्षोऽसौ निराशो गुरुसंकटे ।
यावदस्ति समायातस्तावदागात् सुतोऽपरः ॥ ४८ ॥
पृष्टस्तेनापि दैन्येऽत्र निमित्तं स तदावदत् ।
धनपालेन कुत्रापि कार्ये प्रतिहता वयम् ॥ ४९ ॥
भवान् बालस्ततः किंतु तत्र प्रतिविधास्यते ।
गच्छ स्वकर्मसोत्कारो भविष्यामः स्वलक्षणैः ॥ ५० ॥
निराशं वाक्यमाकर्ण्य तत्पितुः शोभनोऽवदत् ।
मा तात विह्वलो भूया मयि पुत्रे सति ध्रुवम् ॥ ५१ ॥
धनपालो राजपूज्यः कुटुंबभरणक्षमः ।
निश्चितस्तत्प्रसादेन भवतादिष्टमाचरे ॥ ५२ ॥
वेदस्मृतिश्रुतिस्तोमपारगः पंडितोऽग्रजः ।
कृत्याकृत्येषु निष्णातः स विवेक्तु यथारुचि ॥ ५३ ॥
अहं तु सरलो बाल्यादेतदेव विचारये ।
पित्रादेशविधेरन्यो न धर्मस्तनुजन्मनाम् ॥ ५४ ॥
अत्र कृत्यमकृत्यं वा नैवाहं गणयाम्यतः ।
कूपे क्षिप निषादानां मामर्पय यथारुचि ॥ ५५ ॥
श्रुत्वेति सर्वदेवश्च तं बाढं परिषस्वजे ।
मामृणान्मोचयित्वा त्वं समुद्धर महामते ॥ ५६ ॥
ततः प्रागुक्तकार्यं तच्छ्रावितोऽसौ सुतोत्तमः ।
अतिहर्षोत्ततः प्राह कार्यमेतत्प्रियं प्रियम् ॥ ५७ ॥
श्रीजैना मुनयः सत्यनिधयस्तपसोज्ज्वलाः ।
तत्संनिधाववस्थानं सद्भाग्यैरेव लभ्यते ॥ ५८ ॥
जीवानुकंपया धर्मः स च तत्रैव तिष्ठति ।
चिह्नं यत्सत्यधर्मस्य ज्ञानमीदृक्प्रतीतिदम् ॥ ५९ ॥
कः स्थास्यति गृहावासे विषये विकिला(रा)कुले ।
इदं कार्यमिदं कार्यमिति चिंतार्तिजर्जरे ॥ ६० ॥
बिभेत्युभयथा बंधुवल्लभाया धनश्रियः ।
असंतुष्टधियस्तिष्ठत्स्वपि भाग्येषु वस्तुषु ॥ ६१ ॥
ममापीदृग्गतिः कन्यासंबंधे भाविनि ध्रुवम् ।
तत्तात मत्प्रिये कार्ये शंकसे किं निषेधतः ॥ ६२ ॥

---

१ D P. सूनुजन्मना

तदुत्तिष्ठ कुरु स्नानं देवार्चनमथ क्रियाम् ।
वैश्वदेवादिकां कृत्वा निर्वृतः कुरु भोजनम् ॥ ६३ ॥
ततो मां तत्र नीत्वा च तेषामंके विनिक्षिप ।
पवित्रय निजं जन्म यथा तत्पदसेवया ॥ ६४ ॥
इत्याकर्ण्य तदा विप्र आनंदाश्रुपरिप्लुतः ।
उत्तस्थौ गाढमाश्लिष्य मूर्ध्नि चुम्बितवान् सुतम् ॥ ६५ ॥
ततः सर्वाः क्रियाः कृत्वा भोजनानंतरं द्विजः ।
प्रायाच्छोभनदेवेन सहाचार्यप्रतिश्रये ॥ ६६ ॥
अंकमारोपयामास स तेषां वल्लभं सुतम् ।
यावान् भाति विंभातव्यः पूज्यैस्तावानयं सुतः ॥ ६७ ॥
सूरयस्तमनुज्ञाप्यादीक्षयंस्तं सुतं मुदा ।
तद्दिनांतः शुभे लग्ने शुभग्रहनिरीक्षिते ॥ ६८ ॥
ते विजह्रुः प्रभाते चापभ्राजनविशंकिताः ।
अणहिल्लपुरं प्रापुर्विहरंतो भुवं शनैः ॥ ६९ ॥
इतश्च धनपालेन सर्वदेवः पृथक्कृतः ।
विकर्मकृन्निधिद्रव्यात्पुत्रं विक्रीतवानिति ॥ ७० ॥
अदृष्टन्यमुखास्ते च दीक्षापतितशूद्रकाः ।
कौतस्कुताः शमव्याजात् स्त्रीबालादिप्रलंबकाः ॥ ७१ ॥
निर्वास्यते ततो देशादेषां पाषंडमद्भुतम् ।
ध्यात्वा विज्ञाप्य राजानं तच्चक्रे तेन रोषतः ॥ ७२ ॥ युग्मम्
एवं द्वादशवर्षाणि श्रीभोजस्याज्ञया तदा ।
न मालवे विजह्रे तच्छ्रीपीतांबरदर्शनम् ॥ ७३ ॥
स्थितानां गुर्जरे देशे घोरासंघो व्यजिज्ञपत् ।
श्रीमन्महेंद्रसूरीणां यथावृत्तं यथातथम् ॥ ७४ ॥
इतः शोभनदेवश्चाध्यापितः सूरिभिस्तदा ।
विदधे वाचनाचार्यः शक्रेणापि स्तुतो गुणैः ॥ ७५ ॥
अवंतिसंघविज्ञप्तिं श्रुत्वाख्याच्छोभनो विभुः ।
यास्याम्यहं निजभ्रातुः प्रतिबोधाय सत्वरम् ॥ ७६ ॥
दौर्मनस्यमिदं संघे मन्निमित्तं समाययौ ।
अहमेव प्रतीकारं तत्र संधातुमुत्सहे ॥ ७७ ॥
गीतार्थैर्मुनिभिःसार्द्धं प्रभुभिः प्रेष्यताथ सः ।
धारापुरमथायातः प्रयात[1] प्रौढिमद्भुतम् ॥ ७८ ॥
प्राप्ते काले च साधून्स प्रैषीद्गोचरचर्यया ।
श्रीमतो धनपालस्य गृहे परिचिते चिरम् ॥ ७९ ॥

1 H. नियानन्द.

तत्र तावागतौ साधू विद्वदीशस्तदा च सः।
स्नानायोपविवेशाथ स्नेहासक्तवपुर्दृढम् ॥ ८० ॥
व्याहृत्य धर्मलाभं तौ तस्थतुः स्वस्थचेतसौ।
[1]सरत्यस्तीति विदधे धनपालप्रियोच्चरम् ॥ ८१ ॥
प्राह श्रीधनपालश्च किंचिद्देह्यनयोर्ध्रुवम्।
गृह्णाद्यांत्यर्थिनो रिक्ता अधर्मोयं यतो महान् ॥ ८२ ॥
उषितान्नं तया नीतं गृहीतेत्र ततो दधि।
द्वितीयमाहृतं पृष्टं तैरेतत् किमहर्मवम् ॥ ८३ ॥
किं दध्नि पूतराः सन्ति न वा यूयं दयाभृतः।
एतत्र्यहस्थितं लातो नोचेद्गच्छत शीघ्रतः ॥ ८४ ॥
तावूचतुरियं रीतिरस्माकं किमसूयसि।
असूयया महान् दोषः प्रियवाक्यं हि सुंदरम् ॥ ८५ ॥
अथ चेत्पृच्छसि भ्रांतिं विना जीवस्थितिं ध्रुवम्।
गोरसेऽहर्द्वयातीते नासत्यं ज्ञानिनां वचः ॥ ८६ ॥
सुधीनाथस्ततोऽवादीत्तदानादीनवं वचः।
दर्शयत्तं प्रतीत्यै नो दध्नि जीवानमूदृशि ॥ ८७ ॥
[2]पूलिकालक्तकस्याथ ताभ्यां तत्र व्यमोच्यत।
जीवादध्नस्तस्यां ? द्रागेवारुरुहुस्तदा ॥ ८८ ॥
चलंतस्ते हि चक्षुष्या अचक्षुष्याः स्थिताः पुनः।
तद्वर्णास्तद्रसा जीवास्तदा तेनेक्षिताः स्फुटाः ॥ ८९ ॥
मिथ्यात्वस्यावलेपोऽथ तद्वाक्येन विनिर्ययौ।
तदा कृतीश्वरस्याहिनाथमंत्रैर्विषं यथा ॥ ९० ॥
अचिंतयदसौ धर्म एषां जीवदयोज्ज्वलः।
य एष पशुहिंसादिरसौ मिथ्यैव लक्ष्यते ॥ ९१ ॥
उक्तं च तेन—सावच्छ अछि धम्मो जामुणियजिणाणसासणं तुम्हं।
कणगानुराणकणगं ससियपयं अलभमाणाणं ॥ ९२ ॥
विद्वन्नाथस्ततोऽवादीत्को गुरुः कुत आगमः।
भवतां कुत्र वा स्थाने शुद्धे यूयमवस्थिताः ॥ ९३ ॥
श्रुत्वेति वदतस्तौ च श्रूयतामवधानतः।
गूर्जरादेशतः श्रीमन्नायाता वयमत्र भोः ॥ ९४ ॥
श्रीमन्महेंद्रसूरीणां शिष्यः श्रीशोभनो गुरुः।
नाभेयभुवनाभ्यर्णे स्थितोस्ति प्रासुकाश्रये ॥ ९५ ॥

---

1 H. सरत्य. 2 P. नो H. दर्शयंतं...पान् तादृशि. 3 P. पूलि.

इत्युक्त्वा जग्मतुस्तौ च निजं स्थानं महामुनी ।
सुस्नातो भक्तिपूर्वं च सुधीः प्रायादुपाश्रये ॥ ९६ ॥
अथ श्रीशोभनो विज्ञोऽभ्यातस्थौ गुरुबांधवम् ।
आलिलिंगे च तेनासौ सोदरस्नेहमोहतः ॥ ९७ ॥
तेन चार्द्धासने दत्तेऽग्रजेनोपाविशत्तदा ।
ऊचे च पूज्य एव त्वममुं यो धर्ममाश्रयः ॥ ९८ ॥
जिनेंद्रदर्शनं धर्ममूलं भोजनृपाज्ञया ।
यन्निर्वास्य मयोपार्जि नांतस्तस्य महांहसः ॥ ९९ ॥
सर्वदेवः पिता त्वं चानुज एतौ महामती ।
यावेनं सुगुरुं धर्ममाद्रियेथां भवच्छिदे ॥ १०० ॥
वयमत्र पुनर्धर्माभासे धर्मतया श्रिते ।
स्थिता गतिं न जानीमः कामपि प्रेत्य संश्रयाम् ॥ १०१ ॥
तदाख्याहि मदाम्नायो दधिरत्नानुज स्फुटम् ।
धर्मे शर्मकरं मर्ममोच्छेदे विधायिनम् ॥ १०२ ॥
अथ श्रीशोभनो विद्वान् बंधोः स्नेहसरं वहन् ।
उवाच त्वं कुलाधार शृणु धर्मं कृपैव यत् ॥ १०३ ॥
देवधर्मगुरूणां च तत्वान्यवहितः शृणु ।
देवो जिनो महामोहस्मरमुख्यारिजित्वरः ॥ १०४ ॥
स्वयं मुक्तः परान्मोचयितुं सामर्थ्यभूर्भृशम् ।
प्रदाता परमानंदपदस्य भगवान् ध्रुवम् ॥ १०५ ॥
शापानुग्रहकर्तारो मग्ना विषयकर्दमे ।
स्त्रीशस्त्राक्षस्रगाधारा देवताः स्युर्नृपा इव ॥ १०६ ॥
गुरुः शमदमश्रद्धासंयमः श्रेयसां निधिः ।
कर्मनिर्जरणासक्तः सदाचरितसंवरः ॥ १०७ ॥
परिग्रहमहारंभो जीवहिंसाकृतोद्यमः ।
सर्वाभिलाषसंपन्नो ब्रह्महीनः कथं गुरुः ॥ १०८ ॥
सत्याऽस्तेयदयाशौचक्षमाब्रह्मतपःक्रियाः ।
मृदुत्वार्जवसंतोषा धर्मोऽयं जिनभाषितः ॥ १०९ ॥
अवद्यवस्तुदानेन भवेच्च पशुहिंसया ।
अधर्मो धर्मवत्ख्यातो नार्हः कृत्रिमवस्त्रवत् ॥ ११० ॥
समुवाच ततः श्रीमान् धनपालः श्रियांनिधिः ।
प्रतिपन्नो मया जैनधर्मः सद्गतिहेतवे ॥ १११ ॥
ततः श्रीमन्महावीरचैत्यं गत्वा ननाम च ।
वीतरागनमस्कारं श्लोकयुग्मेन सोऽब्रवीत् ॥ ११२ ॥

---

१ P D. भुक्ति. २ H. P संचरिसवाः ।

तथाहि-बलं जगद्ध्विसनरक्षणक्रमं क्षमा च किं संगमके कृतागसि ।
इतीव संचिंत्य विमुच्यमानसं रुषेवरोषैस्तव नाथ निर्ययौ ११३

कतिपयपुरस्वामीकायव्ययैरपि दुर्ग्रहो
मितवितरिता मोहेनासौ पुरानुसृतो मया ।
त्रिभुवनविभुर्बुद्धया (ध्या)राध्योधुना सुपदप्रदः
प्रभुरपि गतस्तत्प्राचीनो दुनोति दिनव्ययः ॥ ११४ ॥

अन्यदा पूर्णिमासंध्यासमये नृपमब्रवीत् ।
जैनदर्शनसंचारहेतवे देशमध्यतः ॥ ११५ ॥
राजंस्तव यशोज्योत्स्ना धवलांवरविस्तरः ।
प्रकटस्तमसोहंता भूयादर्थप्रकाशकः ॥ ११६ ॥
राजा वदन्मया ज्ञातोऽभिसंधिर्मैत्रिते ततः ।
श्वेतांबराश्चरंत्वत्र देशे को दर्शनं द्विषन् ॥ ११७ ॥
ततो धारापुरीसंघसंगत्याज्ञापयत्प्रभोः ।
श्रीमन्महेंद्रसूरेस्तत्त्रायान्मंक्षु सोऽप्यथ ॥ ११८ ॥
क्रमेण धनपालश्च धर्मतत्वविचक्षणः ।
दृढसंपत्कनिष्ठाभिर्ध्वस्तमिथ्यामतिर्बभौ ॥ ११९ ॥
राज्ञा सह महाकालभवनेसोऽन्यदा ययौ ।
तन्मंडपगवाक्षे चोपाविशन्नशिवाग्रतः ॥ १२० ॥
राज्ञाहूतः सच द्वाराग्रतः स्थित्वा झटित्यपि ।
व्यावृत्य त्रिस्ततो भूपः पप्रच्छैनं सविस्मयः ॥ १२१ ॥
सखे किमिदमित्यत्र पृष्टे स प्राह संगभृत् ।
देवोऽस्ति शक्तिसंबद्धो व्रीडया न विलोक्यते ॥ १२२ ॥
राजाह दिवसेष्वेतावत्सु किं तादृशोऽर्चितः ।
भवता प्राह सोहं च बालत्वाल्लज्जितो नहि ॥ १२३ ॥
दिनानीयंति लोकश्च भवंतोऽपीदृशा यतः ।
शुद्धांतांतर्वधूसक्ते त्वय्यपीक्षितुमक्षमः ॥ १२४ ॥
कामसेवापरैः प्राच्यैरपि भूपैर्भवादृशैः ।
चलित्वादर्चनं त्वस्य प्रवर्तितमिहेदृशः ॥ १२५ ॥

यतः-अवरहदेवहं सिरुपुज्जिइ महएवह पुणुलिंगु ।
चलियाजं जि प्रतिष्टइं तंणमन्तदूचगु ॥ १२६ ॥
स्मित्वा दध्यौ च भूपालो हास्यं सत्यसमं हृदः ।
पृच्छाम्यपरमप्यस्मिन्नेतदुत्तरमस्पृहः ॥ १२७ ॥

---

१ P. D. सलेचरो. २ D P. ३ P. संधे.

बहिर्भूंगिरिटेर्मूर्तिं दृष्ट्वा प्राह च कौतुकात्।
एष किं दुर्बलोऽजल्पि सिद्धसारस्वतोऽसि भोः ॥ १२८ ॥
अथाह धनपालोपि सत्योक्तौ भवति क्षणः।
अस्तु वा सत्यकथने को दोषो नस्ततः शृणु ॥ १२९ ॥
तथाहि—दिग्वासा यदि तत्किमस्य धनुषा सास्त्रस्य किं भस्मना
भस्माप्यस्य किमंगना यदि वसा कामं परिद्वेष्टि किम्।
इत्यन्योन्यविरुद्धचेष्टितमहो पश्यन्निजस्वामिनं
भृंगी शुष्कशिरावनद्धमधिकं धत्तेऽस्थिशेषं वपुः ॥ १३० ॥
याज्ञवल्क्यस्मृतिं व्यासो बहिः पार्षदमंडले।
तारं व्याख्याति भूपश्च तत्र शुश्रूषुरासिवान् ॥ १३१ ॥
व्यावृत्त्य स्थितमद्राक्षीद्वयस्यं च ततोऽवदत्।
श्रुतिस्मृतिषु तेऽवज्ञावहितो न शृणोषि यत् ॥ १३२ ॥
सोऽजल्पन्नावगच्छामि तदर्थं व्यस्तलक्षणम्।
प्रत्यक्षेण विरुद्धं हि शृणुयात्को मतिभ्रमी ॥ १३३ ॥
कथ—स्पर्शोऽमेध्यभुजां गवामघहरो वंद्या विसंज्ञा द्रुमाः
स्वर्गश्छागवधाद्धिनोति च पितॄन् विप्रोपभुक्ताशनम्।
आप्ताश्छद्मपराः सुराः शिखिहुतं प्रीणाति देवान् हविः
स्फीतं फल्गु च वल्गु च श्रुतिगिरा को वेत्ति लीलायितम् १३४
अथनिष्पद्यमाने च यज्ञे तत्र महापशोः।
बद्धस्य हंतुमश्रौषीद्दीनारावं महीपतिः ॥ १३५ ॥
अथ किं जल्पतीत्युक्ते कविचक्री ततोऽवदत्।
भाषामेषां विजानामि तत्सत्यं शृणु मद्वचः ॥ १३६ ॥
तथाहि—अर्काहितदलोच्छेदी सत्वोल्लासतनुस्थितिः।
नाम्ना गुणैश्च विष्णुर्यः स कथं वध्यतामजः ॥ १३७ ॥
नाहं स्वर्गफलोपभोगतृषितो नाभ्यर्थितस्त्वं मया
संतुष्टस्तृणभक्षणेन सततं साधो न युक्तं तव।
स्वर्गं यांति यदि त्वया विनिहता यज्ञे ध्रुवं प्राणिनो
यज्ञं किं न करोषि मातृपितृभिः पुत्रैस्तथा बांधवैः ॥ १३८ ॥
श्रीभोजः कुपितस्तस्यापसव्यवचनक्रमैः।
दध्यावमुं हनिष्यामि विब्रुवंतं द्विजब्रुवम् ॥ १३९ ॥
साक्षादस्य हतौ किं चापवादः परमो भवेत्।
रहः कुत्रापि वेलायां वध्योऽसावेष संश्रयः ॥ १४० ॥

---

१ H. गरि० D. भृगिविटे.

तदा चागच्छतो राजपथि स्वं मंदिरं प्रति ।
वृद्धा स्त्री दृक्पथप्राया तटस्था बालिकान्विता ॥ १४१ ॥
नवकृत्वः शिरो धूनयंतीं वृद्धां विलोक्य सः ।
नृपः प्राह किमाहासौ ततोवादीत्कृतीश्वरः ॥ १४२ ॥
किं नंदी किं मुरारिः किमु रतिरमणः किं हरः किं कुबेरः
किंवा विद्याधरोऽसौ किमथ सुरपतिः किं विधुः किं विधाता ।
नायं नायं न चायं न खलु नहि न वा नापि नासौ न चैषः
क्रीडां कर्तुं प्रवृत्तः स्वयमिह हि हंते भूपतिर्भोजदेवः ॥ १४३ ॥
श्रुत्वाथ भूपतिर्दध्यौ नववारोचितान् किमु ।
विकल्पान्नवकृत्वोऽथ तत्रापर्यहरत्ततः ॥ १४४ ॥
ज्ञानिवद्वदिता कोन्य एतं दुर्भाषकं विना ।
निग्रहार्हः स किं श्रीमन्मुंजवर्द्धितविग्रहः ॥ १४५ ॥
कदाचिद्भूपतिर्मित्रं पापर्द्धावाह्वयत्ततः ।
ययौ सखेटकास्तत्र शूकरं च व्यलोकयन् ॥ १४६ ॥
कामं कर्णांतविश्रांतमाकृष्य किल कार्मुकम् ।
वाणं प्राणं दधन् हस्ते व्यमुंचच्चंचदाशयकः ॥ १४७ ॥
पतितोऽसौ किरिर्घोरं घर्घरारावमारसन् ।
प्राहुर्विज्ञाः प्रभुर्योधः पार्श्वे वा नान्य ईदृशः ॥ १४८ ॥
पंडितेशे ततो दृष्टिः श्रीभोजस्यागमत्तदा ।
किंचिद्वदेर्यथेत्युक्ते स प्राह शृणुत प्रभोः ॥ १४९ ॥
तथेद—रसातलं यातु यदत्र पौरुषं क नीतिरेषा शरणो ह्यदोषवान् ।
निहन्यते यद्बलिनापि दुर्बलो हहा महाकष्टमराजकं जगत् १५०
अन्यदा नवरात्रेषु लिंबजागोत्रजार्च्चने ।
राज्ञाथ विहिते हन्यमाने छागशते तथा ॥ १५१ ॥
रक्ताक्षे घातरक्ताक्षे बद्धा खड्गद्विधाकृते ।
एकघातान् सदेशस्थाः प्रशशंसुर्नृपं हतौ ॥ १५२ ॥
धनपालो जगादाथ करुणैकमहोदधिः ।
एतत्कर्मकृतो विज्ञाः प्रशंसाकारिणोऽपि च ॥ १५३ ॥
यतः—पसुवेरुडंविविहसिउं निसुणइसाहुकारु ।
तं जाणइ नरयहहु हह दिन्नउ संचक्काऊ ॥ १५४ ॥
अन्यदा श्रीमहाकाले पवित्रारोहपर्वणि ।
महामहेऽगमद्राजा वयस्यं प्रत्युवाच च ॥ १५५ ॥
सखे त्वदीयदेवानां कदापि न पवित्रकम् ।
अपवित्रास्ततस्ते स्यू राजमित्रं ततोऽवदत् ॥ १५६ ॥

---

१ ले. २ H. निंव.

तथाहि–पवित्रमपवित्रस्य पावित्र्यायाधिरोहति ।
जिनः स्वयं पवित्रः किमन्यैस्तत्र पवित्रकैः ॥ १५७ ॥
अपावित्र्यं शिवे चैतद्भक्तमप्याहृतं यतः ।
लिंगार्चनं तरं याच्यमानाभ्युपगमाद्ध्रुवम् ॥ १५८ ॥
मूर्तिं श्रीकामदेवस्य रतियुक्तां हसन्मुखाम् ।
तालिकायाः प्रदानायोद्दितहस्तां नराधिपः ॥ १५९ ॥
पश्यन् पंडितचंडांशुमाभाषत सकौतुकः ।
किमेष तालिकां दित्सुर्हसन् कथयति स्फुटम् ॥ १६० ॥
धनपालस्ततः सिद्धसारस्वतवशात्तदा ।
अवदत्तथ्यमेवाशु ज्ञानी को हि विलंबते ॥ १६१ ॥
तद्यथा–स एष भुवनत्रयप्रथितसंयमः शंकरो
बिभर्ति वपुषाधुना विरहकातरः कामिनीम् ।
अनेन किल निर्जिता वयमिति प्रियायाः करं
करेण परिताडयन् जयति जातहासः स्मरः ॥ १६२ ॥
अन्यदा नृपतिः प्राह तव सूनृतभाषणे ।
अभिज्ञानं किमप्यस्ति सत्यं कथय तन्मम ॥ १६३ ॥
चतुर्द्वारोपविष्टानां केन द्वारेण निर्गमः ।
स्यादस्माकमिदानीमित्याख्याहि कविवासव ॥ १६४ ॥
ततोऽसौ पत्रकेऽलेखीदक्षराणि महामतिः ।
ततः समुद्रयित्वा च स्थगीवित्तस्य चार्पयत् ॥ १६५ ॥
ध्यायन्निति नृपो द्वारचतुष्कस्येह मध्यतः ।
एकेन केनचिद्द्वारा गतिर्ज्ञाता भविष्यति ॥ १६६ ॥
ज्ञानिनोऽप्यस्य वचनमत्र मिथ्या करिष्यते ।
ततो गते गृहं मित्रे भुक्त्वाह्नानं समागमत् ॥ १६७ ॥
मंडपोपरिभागे च छिद्रं प्राप्यंत यन्त्रैः ।
तेन छिद्रेण निर्गत्य राजा स्वरुचितो ययौ ॥ १६८ ॥
तन्मध्याद् कवीशं तमाकार्यापृच्छद् द्रुतम् ।
पत्रकं कर्षयित्वा स स्थगीमध्याददर्शयत् ॥ १६९ ॥
तत्र चोपरिभागेन निर्यास्यति नृपो ध्रुवम् ।
इति तथ्यं वचस्तस्य ज्ञात्वा राजा चमत्कृतः ॥ १७० ॥
अन्येद्युः सेतुबंधेन प्राप्तोऽनूपनिर्गमान् ।
प्रशस्तिर्विद्यते यत्र लिखिता श्री[illegible] ॥ १७१ ॥
तत्काव्यानयनार्थं स [illegible] पट्टिका ।
निधार्यांगोलिकौ [illegible] जिन[illegible] ॥ १७२ ॥

१ P. हि मन्त्र०. २ P. H. वन्न.

प्रशस्त्युपरितो बाढं विन्यस्याथ पुनस्ततः ।
उत्पाद्यापरतैलाक्षपट्टिकासु च मीलिताः ॥ १७३ ॥
ततोऽप्युद्धृत्य पत्राल्पमक्षराण्यालिखन्नयाः ।
तानि रक्षःकुलानीव षंडवृत्तान्यतोऽभवन् ॥ १७४ ॥
राज्ञालोक्यंत तान्यत्राविशदर्थानि किं पुनः ।
इट्टे शाकफलानीव खंडितान्यरसान्यपुः? ॥ १७५ ॥
पूरयंति निजैः प्रज्ञाविशेषैस्ते महाधियः ।
परं राज्ञश्चमत्कारकरी कस्यापि नैव वाक् ॥ १७६ ॥
द्विपदी त्रिपदी चैका तन्मध्यादर्प्पिता ततः ।
श्रीमतो धनपालस्य बालस्य कविताविधौ ॥ १७७॥
तथाहि-हरशिरसि शिरांसि यानि रेजुर्हरिहरितानि लुठंति गृध्रपादैः
तद्यथा-स्नाता तिष्ठति कुन्तलेश्वरसुता वारोंगराजस्वसु-
र्घूतेनाद्य जिता निशा कमलया देवी प्रसाद्याद्य च ।
इत्यंतःपुरचारिवारवनिताविज्ञापनानंतरं
वचनानंतरं विद्वान् ते समस्ये अपूरयत् ॥ १७८ ॥
तथाहि—अयि खलु विषमः पुराकृतानां ।
विलसति जन्तुषु कर्म्मणां विपाकः ॥ १७९ ॥
तद्यथा-स्मृत्वा पूर्वसुरं विधाय बहुशो रूपाणि भूपोऽभजत्
कीरविद्वान् हसन्नाह जैनोचितमिदं वचः ॥ १८० ॥
तेषां मते परीपाकः कर्मणां हि प्रकथ्यते ।
समस्यापूरणं ह्येतत्सौवीरामोदमेदुरम् ॥ १८१ ॥
कवींद्रः प्राह कीरस्य रागः स्याद्वद मे ध्रुवः ।
मलिनांगस्य सत्यं तु सूर्यः प्रकटयिष्यति ॥ १८२ ॥
द्वापंचाशत्पले फाले शुद्धे चेन्मम मानुषम् ।
अत्रेदशाक्षराण्येवावश्यमीदृक्प्रतिश्रये ॥ १८३ ॥
कौतुकादथ भूपालस्तत्तथैव व्यधापयत् ।
राजा मित्रं ततः फाले शुद्धः शुद्धयशोनिधिः ॥ १८४ ॥
प्रतीत एव राजात्र सत्ये को नाम मत्सरी ।
अथान्येद्युरपृच्छत्तं सुधीशं भोजभूपतिः ॥ १८५ ॥
जैना जलाश्रयद्वारं सुकृतं किं न मन्यते ।
ततोऽवदत्स तत्रापि सूनृतं सूनृतव्रतः ॥ १८६ ॥
तथाहि-सत्यं वप्रेषु शीतं शशिकरधवलं वारि पीत्वा यथेच्छं
विच्छिन्नाशेषतृष्णाः प्रहसितमनसः प्राणिसार्था भवंति ।

---

१ P लाक.

शोषं नीते जलौघे दिनकरकिरणैर्यात्यनंता विनाशं
तेनोदासीनभावं भजति यतिजनः कूपवप्रादिकार्ये ॥ १८७ ॥
राजाह सत्यमेवेदं धर्मसत्यो जिनाश्रयः ।
व्यवहारस्थितानां तु रुच्यो नैव कथंचन ॥ १८८ ॥
ततो राजसखा प्राह पित्राहमपि पाठितः ।
किंचिज्ज्ञात्वा मयाश्रावि का कथा त्वबुधे जने ॥ १८९ ॥
त्याज्या हिंसा नरकपदवी नानृतं भाषणीयं
स्तेयं हेयं विषयविरतिः सर्वसंगान्निवृत्तिः ।
जैनो धर्म्मो यदि न रुचितः पापपंकावृतेभ्य-
स्तत्किं न्यूनो घृतमवगतं किंप्रमोद्यति नो चेत् ॥ १९० ॥
धनपालस्ततः सप्तक्षेत्र्यां वित्तं व्ययेत्सुधीः ।
आदौ तेषां पुनश्चैत्यं संसारोत्तारकारणम् ॥ १९१ ॥
विमृश्येति प्रभोर्नाभिसूनोः प्रासादमातनोत् ।
विंबस्यात्र प्रतिष्ठां च श्रीमहेंद्रप्रभुर्दधौ ॥ १९२ ॥
सर्वज्ञपुरतस्तत्रोपविश्य स्तुतिमादधे ।
जयजंतु कप्पेत्यादि गाथापंचशतामिमाम् ॥ १९३ ॥
एकदा नृपतिः स्मार्त्तकथाविस्तरनिस्तुषः ।
वयस्यमवदज्जैनकथां श्रावय कामपि ॥ १९४ ॥
द्वादशाथ सहस्राणि ग्रंथमानेन तां ततः ।
परिपूर्य ततो विद्वत्समूहैरवधारिताम् ॥ १९५ ॥
यथार्थो काच दोपस्योद्धारा तिलकमंजरी ।
रसेन कवितारूपचक्षुर्नैर्मल्यदायिनी ॥ १९६ ॥
विद्वज्जनास्यकर्पूरपूराभां वर्णसंभृताम् ।
सुधीर्विरचयांचक्रे कथां नवरसप्रथाम् ॥ १९७ ॥ त्रिभिर्विशेषकम्
रसां नवपरां कोटिं प्रापिताः कविचक्रिणा ।
कथायां तत्समासौ च तद्ध्याने परिवर्तते ॥ १९८ ॥
स्वयूथ्यानामिवामीषां प्रस्तावं ते दधुर्भृशम् ।
रसानां सततः षण्णामास्वादमबुधज्जनः ॥ १९९ ॥
दुहित्रा च ततः पृष्टं तातग्रंथः समापि किम् ।
अहो स्पर्द्धा पितृध्याने सुतामानेथ चिंतकृत् ॥ २०० ॥
अथासौ गूर्जराधीशकोविदेंद्रशिरोमणिः ।
वादिवेतालबिरुदं श्रीशांत्याचार्यमाह्वयत् ॥ २०१ ॥

१ H यात्यनी०. २ P D प्रमेन्द्र. ३ P D व्यंतनु. ४ H दधिरा. ५ J नम्य. ६ P प्रामारक०.

अशोधयदिमां चासावुत्सूत्राणां प्ररूपणात् ।
शब्दसाहित्यदोषास्तु सिद्धसारस्वतेषु किम् ॥ २०२ ॥
तस्यां व्याख्यायमानायां स्थालं हैममवोचयत् ।
भूपालः पुस्तकस्याधो रससंग्रहहेतवे ॥ २०३ ॥
तत्र तद्रसपीयूषं पूर्वमाहृतवान् नृपः ।
आधिव्याधिसमुच्छेदहेतुमक्षयतृप्तिदम् ॥ २०४ ॥
संपूर्णायां च तस्यां स प्राह पृच्छामि किंचन ।
तथा त्वामर्थये किंच तेन धारय मे रुषम् ॥ २०५ ॥
पूर्वमेव कथारंभे शिवः पात्वेत्यैमंगलम् ।
चतुःस्थानपरावर्त्तं तथा कुरुत सद्गिरा ॥ २०६ ॥
धारासंज्ञामयोध्यायां महाकालस्य नाम च ।
स्थाने शक्रावतारस्य शंकरं वृषभस्य च ॥ २०७ ॥
श्रीमेघवाहनाख्यायां मम नामकथा ततः ।
आनंदसुंदरा विश्वे जीयादाचंद्रकालिकम् ॥ २०८ ॥
सुधीः प्राह महाराजन् शुभं प्रत्युपताशुभम् ।
परावर्ते कृतेऽमुष्मिन् सूनृतं मद्वचः शृणु ॥ २०९ ॥
पयःपात्रे यथा पूर्णे श्रोत्रियस्य करस्थिते ।
अपावित्र्यं भवेत्तत्र मद्यस्यैकेन विंदुना ॥ २१० ॥
एवमेषां विनिमये कृते पावित्र्यहानितः ।
कुलमेते ध्रुवं राज्यं राष्ट्रं च क्षीयतेतराम् ॥ २११ ॥
शेषे सेवाविशेषं ये न जानंति द्विजिह्वताम् ।
यांतो हीनकुलाः किं ते न लज्जंते मनीषिणाम् ॥ २१२ ॥
अथ राजा रुषा पूर्णः पुस्तकं तच्च्यधादसौ ।
अंगारशकटीवह्नौ जाड्यात्पूर्वं पुरस्कृते ॥ २१३ ॥
ततो रोषाद्भणासौ गाथामेकां नृपं प्रति ।
पुनर्नानेन वीक्ष्यामीत्यभिसंधिः कठोरगीः ॥ २१४ ॥
साचेय-मालविडसि किमन्नं मन्नसिकन्नेण निच्चहतंसि ।
धनपालंपि न मुंचसि पुच्छामि सवंचणं कत्तो ॥ २१५ ॥
अथ वेश्म निजं गत्वा दौर्मनस्येन पूरितः ।
अवाङ्मुखः स सुष्वाप तदा नास्तृततल्पके ॥ २१६ ॥
न स्नानं देवपूजा न भुंक्ते वार्तापि न स्मृता ।
वचनं नैव निद्रापि पंडितस्य तदाभवत् ॥ २१७ ॥

---

१ D शादिश. २ H हि. ३ PH पान्वेल? ४ H स्याया. ५ H वृत्ते.

मूर्त्तयेव सरस्वत्या नवहायनबालया ।
दुहित्रा मन्युहेतुं स पृष्टस्तथ्यं यथाह तत् ॥ २१८ ॥
उत्तिष्ठ तात चेद्दाक्षा पुस्तकं पावके हुतम् ।
अक्षयं हृदयं मेस्ति सकलां ते ब्रुवे कथाम् ॥ २१९ ॥
स्नानं देवार्चनं भक्तिं कुरु शीघ्रं यथा तव ।
कथापीठं ददे हृष्टस्ततः सर्वं चकार सः ॥ २२० ॥
कथा च सकला तेन शुश्रुवेऽत्र सुतामुखात् ।
कदाचिन्न श्रुतं यावत्तावन्नास्याः समाययौ ॥ २२१ ॥
सहस्रत्रितयं तस्याः कथाया अत्रुटत्तदा ।
अन्यत्संबंधसंबद्धं सर्वं न्यस्तं च पुस्तके ॥ २२२ ॥
अथापमानपूर्णोयमुच्चचाल ततः पुरः ।
मानाद्विनाकृताः संतः संतिष्ठंते न कर्हिचित् ॥ २२३ ॥
पश्चिमां दिशमाश्रित्य परिस्पंदं विनाचलत् ।
प्राप सत्यपुरं नाम पुरं पौरजनोत्तरम् ॥ २२४ ॥
तत्र श्रीमन्महावीर चैत्ये नित्ये पदे इव ।
दृष्टे स परमानन्दमाससाद विदांवरः ॥ २२५ ॥
नमस्कृत्य स्तुतिं तत्र विरोधाभाससंस्कृताम् ।
चकार प्राकृतां देव निम्मलेत्यादि सास्ति च ॥ २२६ ॥
दिनैः कतिपयैर्भोजः भूजानिस्तमजूहवत् ।
नास्तीति ज्ञातवृत्तांतः किंचित्खेदवशोऽभवत् ॥ २२७ ॥
आर्हं चेच्चिंत्यते चित्ते कद्वदोष्णासु यात्वसौ ।
परस्तत्सदृशो नान्यस्तथ्यवाग् भारतीनिभः ॥ २२८ ॥
ईदृक्पुरुषसंसर्गे मंदभाग्या वयं ननु ।
देशं तस्य कथं हंसवासपुण्यं विजृंभते ॥ २२९ ॥
इत्यस्य खिद्यमानस्य चकोरस्य कुहूष्विव ।
प्रायाद्धर्माभिधः कौलो विद्वांस्तद्वृत्तमुच्यते ॥ २३० ॥
तद्यथा[1] आधारोनंतगोत्राणां पुरुषोत्तमसंश्रयः ।
आकरोऽनेकरत्नानां लाटदेशोऽस्ति वार्द्धिवत् ॥ २३१ ॥
यत्र मेकलकन्योर्मिनिचयो दर्शनाज्जनम् ।
पवित्रयेत्तदस्ति श्रीभृगुकच्छाख्यया पुरम् ॥ २३२ ॥
तत्रास्ति वेदवेदांगपारगो वाडवाग्रणीः ।
सूरदेव इति ख्यातो वेधा इव शरीरवान् ॥ २३३ ॥
सतीशिरोमणिस्तस्य कांता कांतनयस्थितिः ।
सावित्रीत्याख्यया ख्यातिपात्रं दानेश्वरेषु या ॥ २३४ ॥

1 D P पाठ. 2 D वे.

तयोरुभावभूतां च पित्राशानिलयौ सुतौ ।
धर्मः शर्म्मश्च दुहिता गोमतीत्यभिधा तथा ॥ २३५ ॥
धर्मः स्वनामतो वामः शठत्वादनयस्थितिः ।
पितुः संतापकृज्जज्ञे सूर्यस्येव शनैश्चरः ॥ २३६ ॥
स पित्रोक्तो धनं वत्स जीविकायै समर्जय ।
मुधा न लभ्यते धान्यं तत्ते जठरपूरकम् ॥ २३७ ॥
निष्कलत्वात्ततो नीचसंसर्गात्पाठवैरतः ।
सर्वोपायपरिभ्रष्टोऽभूदिक्षुक्षेत्ररक्षकः ॥ २३८ ॥
तत्र श्रीक्षेत्रपालोस्ति न्यग्रोधाधः सदैवतः ।
तदर्चानिरतो धर्मः सदासीद्भक्तिबंधुरः ॥ २३९ ॥
स च स्वस्वामिनो गेहे गतः क्वचन पर्वणि ।
भुंक्ष्वात्रेति तदुक्तः सन् प्रोवाच प्रकटाक्षरम् ॥ २४० ॥
न वल्भे क्षेत्रपालार्चां विनाहं प्रलयेपि हि ।
क्षेत्रं ययौ ततोऽभ्यर्च्य तमूर्ध्वो यावदास्थितः ॥ २४१ ॥
तावदैक्षिष्ट नग्नां स योगिनीं तद्वृतेर्बहिः ।
क्षेत्रपालप्रसादेन शक्तिं मूर्तिमतीमिव ॥ २४२ ॥
तया चेक्षुलतामेकां प्रार्थितेनातिभक्तिना ।
तद्युग्मं रससर्वस्वपूर्णं तस्याः समार्प्यत ॥ २४३ ॥
तदास्वादप्रमोदेन सप्रसादाथ सावदत् ।
किं त्वं घृणायसे वत्स नवासोप्यवदत्ततः ॥ २४४ ॥
न घृणाये महामाये सा ततः पुनराह च ।
व्यादेहि वचनं तेन तच्चक्रे सादरं वचः ॥ २४५ ॥
सा च तद्रसगंडूषं सुधावत्तन्मुखेऽक्षिपत् ।
हस्तं तन्मस्तके प्रादादायातस्य वृतेर्बहिः ॥ २४६ ॥
तिरोधत्त क्षणेनैव सा देवी च गिरां ततः ।
विमुच्य स च तत्सर्वं तस्मान्निरगमद्भुतम् ॥ २४७ ॥
शनैर्गच्छन् पुरः प्राप पूर्वगंगातटं ततः ।
अचिंतितमवादीच्च काव्यं सारस्वतोदयात् ॥ २४८ ॥
तथाहि—एते मेकलकन्यकाप्रणयिनः पातालमूलस्पृशः
संत्रासं जनयंति विंध्यभिदुरा वारां प्रवाहाः पुरः ।
हेलोद्वर्त्तितनर्तितप्रतिहतव्यावर्त्तितप्रेरित-
त्यक्तस्वीकृतनिह्नुतप्रकटितप्रोद्भूततीरद्रुमाः ॥ २४९ ॥

---

१ H ब्रुद. २ H. त्ले. ३ H. विदित.

तत उत्तीर्य नावासौ नगरांतः समागमत् ।
निजावासं जनन्या च स्नेहादस्पर्शि हस्तयोः ॥ २५० ॥
अद्योत्सूरे कथं प्रागा इति पित्रोदितस्तथा ।
लसता सोऽनुजेनापि शिरसा हृदि पस्पृशे ॥ २५१ ॥
जामिर्गद्गदशब्दात्तं भ्रातर्भ्रातः पुनःपुनः ।
सर्वानप्यवमन्यासौ रूक्षाक्षरमथोऽवदत् ॥ २५२ ॥
मातर्मा स्पृश मास्पृश त्वमपि मे मा तात तृप्तिं कृथाः
भ्रातः किं भजसे वृथा भगिनि किं निःकारणं रोदिषि ।
निःशंकं मदिरां पिबंति नृपलं खादंति ये निर्दया
चंडालीमपि यांति निर्घृणतया ते हन्त कौला वयम् ॥ २५३॥
इत्युक्त्वा निर्ययौ गेहात्त्यक्त्वा स्वस्नेहमंजसा ।
अवंतिदेशसारां स धारां प्राप पुरीं ततः ॥ २५४ ॥
स राजमंदिरद्वारि पत्रालंबं प्रदत्तवान् ।
काव्यान्यमूनि चालेखीत्तत्र मानाद्रिमूर्द्धगः ॥ २५५ ॥
तद्यथा—शंभुर्गौडमहामहीप्रकटके[2] धारानगर्यां द्विजो
विष्णुर्भट्टिभ्रमंडले[1] पशुपतिः श्रीकन्यकुब्जे जितः ।
येनान्येऽपि जडीकृताः कतिपये जैन्यानिले[3] वादिनः
सोऽयं द्वारि समागतः क्षितिपते धर्मः स्वयं तिष्ठति ॥२५६॥
यः कोपि पंडितंमन्यः पृथिव्यां दर्शनेष्वपि ।
तर्कलक्षणसाहित्योपनिषत्सु वदत्वसौ ॥ २५७ ॥
अथ श्रीभोजभूपालपुरः संगत्य पर्षदम् ।
तृणाय मन्यमानोऽसौ साहंकारां गिरं जगौ ॥ २५८ ॥
गलत्विदानीं चिरकालसेवितो मनीषिणामप्रतिमल्लतामदः ।
उपस्थिता सेयमपूर्वरूपिणी तपोधनाकारधरा सरस्वती ॥ २५९ ॥
क्षितिप तव समक्षं बाहुरुर्ध्वीकृतो मे
वदतु वदतु वादी विद्यते यस्य शक्तिः ।
मयि वदति वितंडावादजल्पप्रवीणे
जलधिवलयमध्ये नास्ति कश्चिद्विपश्चित् ॥ २६० ॥
हेमाद्रेर्बलवत्प्रमाणपटुता तार्क्ष्यस्य पक्षो दृढः
शैलानां प्रतिवादिता दिविषदां[4] पात्रावलंबग्रहः ।
देवास्यैव[5] सरस्वतीविलसितं किंवा बहु ब्रूमहे
धर्मे संचरति क्षितौ कविबुधख्यातिग्रहाणां यदि ॥ २६१ ॥

---

१ D. भ्रजेना. २ D. कपटके. ३ H P जल्पानिले. ४ H विपदां पात्रा°
५ H. देशास्य च...विशसित.

बृहस्पतिस्तिष्ठतु मंदबुद्धिः पुरंदरः किं कुरुते वराकः ।
मयि स्थिते वादिनि वादिसिंहे नैवाक्षरं वेत्ति महेश्वरोऽपि ॥२६२॥
आचार्योऽहं कविरहमहं वादिराट् पंडितोऽहं
दैवज्ञोऽहं भिषगहमहं मांत्रिकस्तांत्रिकोहम् ।
राजन्नस्यां जलधिपरिखामेखलायामिलाया-
माज्ञासिद्धः किमिह बहुना सिद्धसारस्वतोऽहम् ॥२६३॥
इत्याडंबरकाव्यानि तस्य श्रुत्वा महाधियः ।
अर्वाग्दृशोऽभवन् सर्वे भूपालो व्यमृशत्ततः ॥ २६४ ॥
पुंसा तेन विना पर्षच्छून्येव प्रतिभासते ।
स कथं पुनरागंता य एवमपमानितः ॥ २६५ ॥
पुनः प्राप्यः कथंचित्स्यात्तदा प्रतिविधास्यते ।
एवं विचिंत्य सर्वत्राप्रैषीद्विश्वास्यपूरुषान् ॥ २६६ ॥
शोधितः सर्वदेशेषु तेषामेके तमाप्नुवन् ।
मरुमंडलमध्यस्थे पुरे सत्यपुराभिधे ॥ २६७ ॥
तैश्च वैनयिकीभिः स वाणीभिस्तत्र सांत्वितः ।
औदासीन्ये स्थितः प्राह नायास्ये तीर्थसेव्यहम् ॥ २६८ ॥
तैर्विज्ञप्ते यथावृत्ते भूपः पुनरचीकथत् ।
ततोदासीनताभासं [1]वचोसावखरप्रियम् ॥ २६९ ॥
श्रीमुंजस्य महीभर्तुः प्रतिपन्नसुतो भवान् ।
ज्येष्ठोऽहं तु कनिष्ठोसि तत्किं गण्यं लघोर्वचः ॥ २७० ॥
पुरा ज्यायान्महाराजस्त्वामुत्संगोपवेशितम् ।
प्राहेति विरुदं तेऽस्तु श्रीकूर्चालसरस्वती ॥ २७१ ॥
त्यक्त्वा वयं त्वया वृद्धा राज्यमासाद्य भाग्यतः ।
जये पराजये वाप्यवंतिदेशः स्थलं तव ॥ २७२ ॥
ततो मत्प्रियहेतोस्त्वमागच्छ गच्छ माथवा ।
जित्वा धारां स्वयं कौलः परदेशी प्रयास्यति ॥ २७३ ॥
तत्ते रूपं विरूपं वा जानासि स्वयमेव तत् ।
अतःपरं प्रवक्तुं न सांप्रतं नहि युज्यते ॥ २७४ ॥
प्राकृतोऽपि स्वयं ज्ञानं कुरुते नेतरत्पुनः ।
किं पुनस्त्वं महाविद्वांस्तद्यथारुचितं कुरु ॥ २७५ ॥
धनपाल इति श्रुत्वा स्वभूमेः पक्षपाततः ।
तरसागात्ततो ज्ञात्वा राजाभिमुखमागमत् ॥ २७६ ॥
दृष्टे च पादचारेण भूपं संगम्य धीनिधिम् ।
दृढमाश्लिष्य चावादीत्क्षमस्वाविनयं मम ॥ २७७ ॥

---

१ P D सर्वज्ञो० २ P भाम वचो सा. II. भाव याचो नावस्वर०

धनपालस्ततः साश्रुरवादीद्ब्राह्मणोऽप्यहम् ।
निःस्पृहो जैनर्लिंगश्चावश्यं तद्व्रतसस्पृहः ॥ २७८ ॥
मयि मोहो महाराज विलंबयति मामिह ।
भवेन्मानापमानो हि नह्युदासीनचेतसि ॥ २७९ ॥
अथ राजाह मे खेदो नाणुरप्यस्त्यसौ तव ।
त्वयि जीवति भोजस्य सभा यत्परिभूयते ॥ २८० ॥
पराभवस्तवैवायमितिश्रुत्वा कृतिप्रभुः ।
प्राह मा खिद्यतां भिक्षुरक्लेशाज्जेष्यते प्रगे ॥ २८१ ॥
श्रुत्वेति हृदये तुष्टो ययौ श्रीभोजभूपतिः ।
विद्वानपि निजं वेश्म वेषं त्यक्त्वा पुनर्ययौ ॥ २८२ ॥
सन्मार्जनातिगे गेहे शशकाखुकृतैर्बिलैः ।
दृश्यनिःसंख्यवल्मीकदुर्गमे प्राविशत्ततः ॥ २८३ ॥
राजा सौधे गतः प्रातः पृष्टो भूपेन वेश्मनः ।
शुद्धिं विद्वत्प्रभुः प्राह श्रूयतां सूनृतं वचः ॥ २८४ ॥
तच्चेद–पृथुकार्तस्वरपात्रं भूषितनिःशेषपरिजनं देव ।
विलसत्करेणुगहनं संप्रति सममावयोः सदनम् ॥ २८५ ॥
राज्ञा धर्म्मस्तदाहूत आस्थाने स्वःसभोपमे ।
श्रूयतां धनपालोऽयमाययौ वादिदर्पहृत् ॥ २८६ ॥
धर्मोऽघच्छित्तपं विज्ञं पूर्वं परिचितं तदा ।
दृष्ट्वा काव्यमदोऽवादीत्तदावर्जनगर्भितम् ॥ २८७ ॥
श्रीछित्तपे कर्दमराजशिष्ये सभ्ये सभाभर्तरि भोजराजे ।
सारस्वते स्रोतसि मे प्लवंतां पलालकल्पा धनपालवाचः ॥ २८८ ॥
धनपेति नृपस्यामंत्रणे मे मम तद्गिरः ।
आलवाचः प्लवंतां हि सिद्धसारस्वते हरे? ॥ २८९ ॥
इति भूपालमित्रेण शब्दखंडनया तया ।
अस्यैव प्रतिपक्षार्थेऽक्षरैस्तैरेव जल्पितः ॥ २९० ॥
समस्यामर्पयामास सिद्धसारस्वतः कविः ।
धर्मस्तां च पुपूरेऽसौ वारानष्टोत्तरं शतम् ॥ २९१ ॥
तासामेकापि निर्दोषा न विद्वच्चित्तहारिणी ।
पुपूरे चांत्यवेलायामित्थं तेन मनीषिणा ॥ २९२ ॥
इयं व्योमांभोधेस्तटमिव जवात्प्राप्य पतनं
निशांतो विश्लिष्टा घनघटितकाष्ठा विघटते ॥ २९३ ॥

इति समस्या.

---

१ H लिंगत्वा. २ P विरत्युक्त. ३ H समाजं. ४ D. एलो. ५ D. रुं H. क्रुते? ६ P. शिशानौ D शिशोनौविश्लिष्यद्.

वणिग्वक्राक्रंदत्विषिं शकुनिकोलाहलगणे ।
निराधारास्तारास्तदनु च निमज्जंति मणयः ॥ २९४ ॥
अतिश्रुतिकटुत्वेन चंद्रास्तवर्णनेन च ।
न्यूनोक्तिदूषणाच्चापि साम्यैर्नैषापि मानिता ॥ २९५ ॥
ततो वज्रं समस्यायाः पतत्विति च सोऽवदत् ।
विलक्षो जयभग्नाशः स मिथ्याडंबरः कविः ॥ २९६ ॥
ततः श्रीधनपालेनापूरि विद्वन्मनोहरा ।
अनायासात्समस्येयं यतोऽस्यैतत्कियत्किल ॥ २९७ ॥
असावप्यामूलत्रुटितकरसंतानतनिकः
प्रयात्यस्तं स्रस्तासितपट इव श्वेतकिरणः ॥ २९८ ॥
भग्नो मग्नः पराभूतिवारिधौ बोधितस्ततः ।
तरंडाद्धर्म्मं उद्दध्रे कवींद्रेणेति गाथया ॥ २९९ ॥
आसंसारं क इव पुणवेहिं पइदि यहृगहियसारोवि ।
अजवि अभिन्नमुद्दोव्वजयइ वायापरिप्फंदो ॥ ३०० ॥
ततः श्रीभोजराजोऽपि कृतीशानुमतस्तदा ।
यच्छ धर्म्मस्य वित्तस्य लक्षं तेनेत्यवाद्यत ॥ ३०१ ॥
तद्यथा–ब्रह्मांडोदरकोटरं कियदिदं तत्रापि मृद्गोलकं
पृथ्वीमंडलसंज्ञकं कुपतयस्तत्राप्यमी कोटिशः ।
तत्रैके गुरुगर्वगद्गदगिरो विश्राणयंत्यर्थिनां
हा हा हंत वयं तु वज्रकठिनास्तानेव याचेमहि ॥ ३०२ ॥
न ग्रहीष्ये ततो वित्तमसारकमशाश्वतम् ।
अभिमाने हृते जीवे पुरुषः शवसंनिभः ॥ ३०३ ॥
स आह कविरेकोऽपि धनपालो धियां निधिः ।
इति प्रतीतं मच्चित्ते बुधो नास्ति नु निश्चितम् ॥ ३०४ ॥
सविस्मयं ततः प्राह सिद्धसारस्वतः कविः ।
नास्तीति नोच्यते विद्वन् रत्नगर्भा वसुंधरा ॥ ३०५ ॥
अणहिल्लपुरे श्रीमान् शान्तिसूरिः कृतीप्रभुः ।
जैनः ख्यातस्त्रिभुवने बुधस्त्वमवलोकय ॥ ३०६ ॥
स्नेहाद्विसर्जितो राज्ञा वादीशेनाप्यसौ ततः ।
विजये तस्य भग्नाशो व्यमृशन्मानसांतरा ॥ ३०७ ॥
अद्य पूर्वं न केनापि स्खलितं वचनं मम ।
ईदृग्मम वचो हंता साक्षाद्ब्राह्मी ननु द्विजः ॥ ३०८ ॥

१ H कदनविधि. २ H P. वरी.

प्रयाणं सुंदरं तस्माद्बुधालोकमिषादतः ।
ध्यात्वेति गूर्जरं देशं प्रति प्रस्थानमातनोत् ॥ ३०९ ॥
प्रातः संसदि भूपालस्तमाह्वस्त विशारदम् ।
नास्तीति च परिज्ञाते धनपालः कविर्जगौ ॥ ३१० ॥
धर्मो जयति नाधर्म्म इत्यलीकीकृतं वचः ।
इदं तु सत्यतां नीतं धर्मस्य त्वरिता गतिः ॥ ३११ ॥
राजा प्राह यथा जीवं विनांगेऽवयवान्विते ।
सत्यपि स्यान्न सामर्थ्यमुत्तरेऽपि परागतेः ॥ ३१२ ॥
तद्वदेकं विना मित्रं धनपालं कृतिप्रभुम् ।
मूके च धर्म्मसंवादे सभा तेन विनाकृता ॥ ३१३ ॥
तस्मात्स एव मत्पार्श्वे शृंगारयतु सर्वदा ।
श्रुत्वेति धनपालोऽपि तुष्टः सन्मानतः प्रभोः ॥ ३१४ ॥
यथा स पत्तनं प्राप्तो जितः श्रीशांतिसूरिभिः ।
बुद्धास्ते मानितास्तेन तज्ज्ञेयं तच्चरित्रतः ॥ ३१५ ॥
इतश्च शोभनो विद्वान् सर्वग्रंथमहोदधिः ।
यमकान्विततीर्थेशस्तुतिं चक्रेऽतिभक्तितः ॥ ३१६ ॥
तदेकध्यानतः श्राद्धगृहे त्रिर्भिक्षया ययौ ।
पृष्टः श्राविकया किंतु विरागे हेतुरत्र कः ॥ ३१७ ॥
स प्राह चित्तव्याक्षेपान्न जाने स्वगतागते ।
श्राविकः स्यात्परिज्ञाते गुरुभिः पृष्ट एष तत् ॥ ३१८ ॥
स प्राह न स्तुतिध्यानाज्जानेऽपश्यदहो गुरुः ।
तत्काव्यान्यथ हर्षेण प्राशंसत्तं चमत्कृतः ॥ ३१९ ॥
तदीयदृष्टसंगेन तत्क्षणं शोभनो ज्वरात् ।
आससाद परं लोकं संघस्याभाग्यतः कृती ॥ ३२० ॥
तासां जिनस्तुतीनां च सिद्धः सारस्वतः कविः ।
टीकां चकार सौंदर्यस्नेहं चित्ते वहन् दृढम् ॥ ३२१ ॥
आयुरंतं परिज्ञाय कोविदेशोऽन्यदा नृपम् ।
आपृच्छत परं लोकं साधितुं गुरुसंनिधौ ॥ ३२२ ॥
श्रीमन्महेंद्रसूरीणां पादांभोजपुरस्सरम् ।
तनुं समलिखद्देहिधर्मे एव स्थितः सदा ॥ ३२३ ॥
उग्रेण तपसा शुद्धदेहः क्षिप्तांतरद्विषन् ।
सम्यक्त्वं निरतीचारं पालयन्नालये गुरोः ॥ ३२४ ॥

१ P गतौ. २ D किंचात्रि. P किंत्वत्रिगगा.

तिष्ठन्निर्याप्यमानस्य स्थविरैः श्रुतपारगैः ।
अन्ते देहं परित्यज्य श्रीसौधर्म्ममशिश्रयत् ॥ ३२५ ॥ युग्मम् ।
गुरवोऽपि तदा तस्य दृष्ट्वा छेकत्वमद्भुतम् ।
लोकद्वयेऽपि संन्यासपूर्वं तेऽपि दिवं ययौ ॥ ३२६ ॥
श्रीमन्महेंद्रगुरुदीक्षितशोभनस्य
प्रज्ञाधनस्य धनपालकवेश्च वृत्तम् ।
श्रीजैनधर्म्मदृढवासनया लभंतां
भव्यास्तमस्ततिहरं ननु बोधिरत्नम् ॥ ३२७ ॥
श्रीचंद्रप्रभसूरिपट्टसरसीहंसप्रभुः श्रीप्रभा-
चंद्रः सूरिरनेन चेतसि कृते श्रीरामलक्ष्मीभुवा ।
श्रीपूर्वर्षिचरित्ररोहणगिरौ वृत्तं महेंद्रप्रभोः
श्रीप्रद्युम्नमुनींदुना विशदितः शृंगो मुनींदुप्रम ॥ ३२८ ॥
श्रीदेवानंदसूरिर्दिशतु मदमसौ लक्षणाद्येन हैमा-
दुद्धृत्यप्राज्ञहेतोर्विहितमभिनवं सिद्धसारस्वताख्यम् ।
शाब्दं शस्त्रं यदीयान्वयकनकगिरिस्थानकल्पद्रुमश्च
श्रीमान्प्रद्युम्नसूरिर्विवदयति गिरं नः पदार्थे प्रदाता ॥ ३२९॥

इति श्रीमहेंद्रप्रभसूरिप्रबंधः ॥ ग्रंथ ३६१ अ० २६ उभय ४००८.[1]

---

श्रीसूराचार्यप्रबन्ध. ॥

सूराचार्यः श्रिये श्रीमान् सुमनःसंघपूजितः ।
यत्प्रज्ञया सुराचार्यो मात्राधिकतया जितः ॥ १ ॥
सूराचार्यप्रभोरत्र ब्रूमः किं गुणगौरवम् ।
येन श्रीभोजराजस्य सभा प्रतिभया जिता ॥ २ ॥[2]
चरित्रं चित्रकृत्तस्य सुधीहृद्भित्तिषु स्थितम् ।
ज्ञात्वा वर्णोज्ज्वलं व्याख्यायते स्थैर्याय चेतसः ॥ ३ ॥
अणहिल्लपुरं नाम गुर्जरावनिमंडलम् ।
अस्ति प्रशस्तिवत्पूर्वं भूपालनयपद्धतेः ॥ ४ ॥
प्रतापाक्रांतराजन्यचक्रं चक्रेश्वरोपमः ।
श्रीभीमभूपतिस्तत्राभवद्दुःशासनार्दनः ॥ ५ ॥
शास्त्रशिक्षागुरोर्द्रोणाचार्यः सत्याक्षतव्रतः ।
अस्ति क्षात्रकुलोत्पन्नो नरेंद्रस्यास्य मातुलः ॥ ६ ॥
तस्य संग्रामसिंहाख्यभ्रातुः पुत्रो महीपतिः ।
महीपाल इति ख्यातः प्रज्ञाविजितवाक्पतिः ॥ ७ ॥

---

१ H. उभय ४०८८. २ H. omits sts २–३.

तत्त्वातेऽस्तं गते दैवाद्बाल्य एव प्रभोः पुरः ।
तन्माता भ्रातृपुत्रं स्वं प्रशाधीति प्रभुं जगौ ॥ ८ ॥
निमित्तातिशयाज्ज्ञात्वा तं शासनविभूषकम् ।
आददाज्जगृहुर्भ्रातृजायां संतोषवाग्भरैः ॥ ९ ॥
शब्दशास्त्रप्रमाणानि साहित्यागमसंहिताः ।
अमिलन्स्वयमेवास्य साक्षिमात्रे गुरौ स्थिते ॥ १० ॥
स्नेहादेव गुरोः पार्श्वममुञ्चन् जगृहे व्रतम् ।
स्वपट्टे स्थापयन्मंक्षु तादृशा नोचितीतिगाः ॥ ११ ॥
वार्त्तमानिकशास्त्रांभोरुहाभासनभानुमान् ।
जनाज्ञानतमश्छेदी सूराचार्यः स विश्रुतः ॥ १२ ॥
अथ श्रीभोजराजस्य वाग्देवीकुलसद्मनः ।
कलासिंधुमहासिंधोर्विद्वल्लीलामहौकसः ॥ १३ ॥
प्रधाना आजग्मिवांसः श्रीभीमनृपपर्षदम् ।
गाथामेकामजल्पच्च निजनाथगुणोद्धुताम् ॥ १४ ॥ युग्मम् ।
तथाहि-हेलानिद्दलियगइंदकुंभपडियपयावपसरस्स ।
सीहस्समयणसमं निदिग्गहो नेयसंधाणं ॥ १५ ॥
हेलया तदवज्ञाय तेषां सन्मानमादधे ।
आवासभुक्तिवृत्त्याद्यैर्भूपस्थानं च ते ययुः ॥ १६ ॥
गतेषु तेषु भूपालः स्वप्रधानानिहादिशत् ।
शोध्यः प्रत्युत्तरार्थाय विपश्चित्कश्चिदद्भुतः ॥ १७ ॥
स्वस्वमत्यनुमानेन प्रत्यार्याः कविभिः कृताः ।
न चमत्कारिणी राज्ञस्तासामेकापि चाभवत् ॥ १८ ॥
सर्वदर्शनिशालासु चतुष्के चत्वरे त्रिके ।
हर्म्यचैत्येषु गच्छन्ति ततः प्रेक्षाकुतूहलात् ॥ १९ ॥
श्रीमद्गोविंदसूरीणां चैत्ये ते चान्यदाययुः ।
तदा पर्वणि कुत्रापि तत्रासीत्प्रेक्षणक्षणः ॥ २० ॥
अंगहारप्रकारैश्च त्रिपताकादिहस्तकैः ।
तत्र नर्नर्ति लास्येन तांडवेन च नर्तकी ॥ २१ ॥
आतोद्यतालसंवादसंपन्नविषमासनैः ।
श्रांताश्लक्ष्णोपलस्तंभं स्पर्शे म्रक्षणवन्मृदुम् ॥ २२ ॥
आश्लिश्लेष नटीस्वेदहृतये पवनार्थिनी ।
तत्काठिन्यप्रकर्षस्य द्रावणायेव निर्भरम् ॥ २३ ॥ युग्मम ।

१ H त्ता गिरः. २ D. सत्तम.

व्यजिज्ञपन् विशिष्टाश्च श्रीगोविंदाय सूरये ।
इमामीदृगवस्थानां वर्णयस्त्वं प्रभो स्फुटम् ॥ २४ ॥
सूराचार्यं च तत्रस्थं तदुत्कीर्तनहेतवे ।
तं तदा दिदिशुः पूज्यास्तत्क्षणाच्चाथ सोऽब्रवीत् ॥ २५ ॥

तद्यथा–यत्कंकणाभरणकोमलबाहुवल्लि-
संगात्कुरंगकदृशोर्नवयौवनायाः ।
न स्विद्यसि प्रचलसि प्रविकंपसे त्वं
तत्सत्यमेव दृषदा ननु निर्मितोऽसि ॥ २६ ॥

तत्कालं ते नृपायेदं गत्वा हृष्टा व्यजिज्ञपत् ।
गोविंदाचार्यपार्श्वेऽस्ति कविः प्रत्युत्तरक्षमः ॥ २७ ॥
भूपालः प्राह सौहार्दभूमिः सूरिरसौ हि नः ।
समानयत सन्मान्यं सकवित्वं गुरुं ततः ॥ २८ ॥
आदेशानंतरं ते श्रीगोविंदस्याश्रयं ययुः ।
आजूहवंस्ततःसोपि भूपसंसदमाययौ ॥ २९ ॥
सूराचार्यं च पार्श्वेऽस्य दृष्ट्वा भूपःप्रमोदभूः ।
मन्मातुलस्य पुत्रोऽसौ संभाव्यं सर्वमत्र तत् ॥ ३० ॥
आशीर्वादोपविष्टस्य सूरिर्भूपार्हे आसने
श्रीभोजप्रहितां गाथां विद्वद्भिः श्रावितस्ततः ॥ ३१ ॥
तदनंतरमेवाथ सूराचार्य उवाच च ।
कोऽवकाशो विलंबस्य तादृक्पुण्योदये सति ॥ ३२ ॥

तथाहि–अंधय सुयाणकालो भीमोपुहवीमिम्मिमह विहिणा ।
जेण सयंपि न गणिअं का गणणा तुज्झ इक्कस्स ॥ ३३ ॥

इत्यर्थं भीमभूपालः श्रुत्वा रोमांचकंचुकी ।
धाराधिपप्रधानानां हृतं प्राजीघ्यत्करे ॥ ३४ ॥
श्रीभोजस्तां प्रवाच्य विममर्शेति चेतसि ।
ईदृग्विभवो देशः स कथं परिभूयते ॥ ३५ ॥
सूरिः श्रीभीमराजेन सन्मान्येन व्यसृज्यत ।
किं कुर्यात् त्वयि पार्श्वस्थे श्रीभोजे विदुषां निधिः ॥ ३६ ॥
अन्यदा गुरुभिः शिष्योऽध्यापनेऽसौ न्ययोज्यत ।
कारयति गुणा पद्मप्रतिष्ठां पुष्पाहृतेः ॥ ३७ ॥
कुशाग्रीयमतिः शास्त्रसूक्ष्याणि पाठ्यन्नसौ ।
तथा शिक्षाणि शालत्वेऽन्तः पुरुषाणि ते यथा ॥ ३८ ॥
शाकुण्यपथमा प्रतापाद्वेलाविंशन न ।
शिशिरसुमः स्तरशिष्याणां कुशास्त्रागमसत्त्वम् ॥ ३९ ॥

ततस्तान् शिक्षयन्नेकां रजोहरणदंडिकाम् ।
नित्यं भनक्ति कोपारिस्ताडशानपि गंजयेत् ॥ ४० ॥
एकदा त्ववलेपोऽपि स्वजातीयसहायताम् ।
कर्तुमन्नाययौ स्वीयानुपदीनोतको भवेत्? ॥ ४१ ॥
वैयावृत्त्याकरं स्वीयं खिन्नस्तन्नित्यभंगतः ।
आदिशद्दंडिकालोहा कार्यास्माकं रजोहृतौ ॥ ४२ ॥
छात्रा वित्रासमापन्नाः खिन्नचित्ततनूभृतः ।
उपाध्यायात्कथंचित्ते वासरं निरयापयन् ॥ ४३ ॥
आवश्यकविधेः शास्त्रगुणनाच्चानु ते ततः ।
अर्द्धरात्रिककालस्यावसरेऽपि विनिद्रकाः ॥ ४४ ॥
ज्येष्ठप्रभुक्रमांभोजसेवाहेवाकिनस्ततः ।
नत्वा व्यजिज्ञपन्विश्रमयंतश्चरणद्वयम् ॥ ४५ ॥
शरण्यं शरणायाता अश्रांतस्रवदश्रवः ।
शिरोभेदस्मृते भीता उपाध्यायस्य चेष्टितम् ॥ ४६ ॥

त्रिभिर्विशेषकम्.

श्रुत्वा प्रभुभिरादिष्टं वत्साः स्वच्छाशयस्य तु ।
एष वोऽह्नाय पाठाय त्वरते नतु वैरतः ॥ ४७ ॥
यद्योमयदंडस्य सोर्थी तद्धि विरुध्यते ।
शिक्षिष्यते तथायं वो नाचरेद्विद्रवं यथा ॥ ४८ ॥
इत्थमाश्वासितास्ते च स्वस्वस्थानेष्वसूषुपन् ।
सूराचार्योऽपि तत्रागाच्छुश्रूषाहेतवे प्रभोः ॥ ४९ ॥
ददे कृतककोपात्तैर्वंदने नानुवंदना ।
अप्रसादे ततो हेतुं पप्रच्छाह प्रभुः पुनः ॥ ५० ॥
लोहदंडो यमस्यैवायुधं नहि चरित्रिणाम् ।
घटते हिंस्रवस्तु स्यात्तथैव तु परिग्रहे ॥ ५१ ॥
आद्योऽपि कोऽप्युपाध्यायः पाठको न शिशुव्रजे ।
अहो ते स्फुरिता प्रज्ञा पुंसां हृदयभेदिनी ॥ ५२ ॥
श्रुत्वेति व्यमृशच्छात्रवर्गादयमुपद्रवः ।
उत्तस्थे च प्रभोरग्रेऽवादीत्सविनयं वचः ॥ ५३ ॥
पूज्यहस्तसरोजेन मौलौ किं व्यलसन्मम ।
एवं निस्त्रिंशता शंका मयि यूयं व्यधत्त किम् ॥ ५४ ॥
काष्ठदंडिकया देहे प्रहारो दीयते यथा ।
न तथा लोहदंडेन ज्ञापनैव विधीयते ॥ ५५ ॥

---

१ D. 'मोनको'. निस्पृहता.

मद्गुणा यद्यमीषां स्युरिति चिंता ममाभवत् ।
घृतपूर्णाश्चपलकैर्न स्युः सत्यमिदं वचः ॥ ५६ ॥
अथ ज्येष्ठप्रभुः प्राह सर्वेषां गुणसंहतिः ।
कोऽप्यंशेनापि नास्त्यत्र को मदस्तद्गुणेषु भो ॥ ५७ ॥
इत्याकर्ण्य ततः सूराचार्यप्राज्यमतिस्थितिः ।
प्राह नाहं कुतोहं को गर्वो ऽनतिशयस्य मे ॥ ५८ ॥
अभिसंधिर्ममायं तु चेन्मया पाठिता अमी ।
व्यहृत्य परदेशेषु जायंते वादिजित्वराः ॥ ५९ ॥
पूज्यानां किरणा भूत्वा जनजाड्यहृतौ ननु ।
युष्माकं सोऽपि शृंगार उन्नतिर्जिनशासने ॥ ६० ॥
गुरवः प्राहुरुत्तानमते बालेषु का कथा ।
किमागच्छसि लग्नस्त्वं कृतभोजसभाजयः ॥ ६१ ॥
श्रुत्वेत्याह स चादेशः प्रमाणं प्रभुसंमितः ।
आदास्ये विकृतीः सर्वाः कृत्वादेशममुं प्रभोः ॥ ६२ ॥
इत्युक्त्वा निजसंस्तारेऽक्षिपत्सेक्षणं ततः ।
सामर्षः सूरिशार्दूलः शार्दूलः अस्तफालवत् ॥ ६३ ॥
प्रातः कृत्वा त्ववादीत्सोऽनध्यायोद्यास्तु पाठने ।
शिशुत्वाज्जहृषुः शिष्या महोत्सव इवागते ॥ ६४ ॥
मध्याह्ने शुद्धमाहारमानीय यतिमंडले ।
मिलिते सूरसूरिं तमाह्वाययत सद्गुरुः ॥ ६५ ॥
आययौ परिविष्टे स गृह्णाति विकृतिं नहि ।
अनुनीतोऽपि गीतार्थैः पूज्यैरप्युदिते दृढम् ॥ ६६ ॥
अमुश्चन्नाग्रहं संघे नाप्युक्ते इदमभ्यधात् ।
मम प्रतिश्रवो हंता नाश्रवो मोच्यतां पुनः ॥ ६७ ॥
भणिष्यथाथ चेत्किंचित्तन्ममानशनं ध्रुवम् ।
ततः संवाहयामास गीतार्थैः सह साधुभिः ॥ ६८ ॥
तत उत्संगमारोप्य शिशिक्षे तैरसौ सुधीः ।
परदेशे विहर्ता च वत्स भूयात्सचेतनः ॥ ६९ ॥
शास्त्रं वंशो जातिप्रज्ञाकुलमा(लानणु)संयमाः ।
संति जयिनश्च यमा नियमास्तथापि यौवनमविश्वास्यम् ॥७०॥
इति पूज्योपदेशश्रीशृंगारैः स तरंगितः ।
मानयन् स्वान्यदेशीयलब्धवर्णास्तपस्विनः ॥ ७१ ॥
ततः श्रीभीमभूपालपृच्छायै राजसंसदम् ।
संप्राप गुर्वनुज्ञातो राज्ञां ज्ञातः पुरापि यः ॥ ७२ ॥

---

१ H. मृद्गु०. २ H. मृतपू० ३ H. ननिशायस्य.

सुवर्णमणिमाणिक्यमये पीठे च भूपतिः ।
न्यवेशयद्बुधं बंधुं हेमात्यसौरभाद्भुतम् ॥ ७३ ॥
तदा च मालवाधीशविशिष्टा पुनराययुः ।
स्वरूपं निजनाथस्य भूपालाय व्यजिज्ञपन् ॥ ७४ ॥
देव त्वद्विदुषां प्रज्ञाप्रातिभै रंजितो नृपः ।
श्रीभोजः सम्यगुत्कंठां तेषु धारयते प्रभुः ॥ ७५ ॥
ततः प्रहिणुत प्रेक्षादक्षनाथ प्रसद्य तत् ।
अन्योन्यं कौतुकं विद्वद्भूतां विद्यते यथा ॥ ७६ ॥
राजा प्राह महाविद्वानास्ते मद्बांधवो नवः ।
परदेशे कथं नाम प्रस्थाप्योऽसौ स्वजीववत् ॥ ७७ ॥
प्रतिपत्तिं ममेवास्य चेद्विधत्ते भवत्पतिः ।
प्रवेशादिषु मानं च स्वयं दत्ते तदस्तु तत् ॥ ७८ ॥
सूराचार्योऽपि दध्यौ च तोषाद्भाग्यमिहोदितम् ।
मम पूज्यप्रसादेन यत्तस्याह्वानमागमत् ॥ ७९ ॥
अथाह भूपते धाराधिनाथ कृतिना मया ।
गाथाया कविता दृष्टा तत्रोत्तरमदामहम् ॥ ८० ॥
शमिनां कौतुकं किं न विचित्रे जगति ध्रुवम् ।
श्रीमद्भोजस्य चित्रार्थं गम्यते तदनुज्ञया ॥ ८१ ॥
राजाह तत्र मद्भ्राता त्वं किं तं वर्णयिष्यसि ।
स प्राहाहं मुनिर्भूपं कुतो हेतोः स्तुवे ततः ॥ ८२ ॥
ऊरीकृते प्रधानैश्च तत्र मालवभूपतेः ।
प्रयाणायानुजज्ञे तं विशेशं भीमभूपतिः ॥ ८३ ॥
गजमेकं ततः प्रैपीत्सप्तीनां शतपंचकम् ।
पदातीनां सहस्रं च संबंधौ भक्तिनिर्भरैः ॥ ८४ ॥
शुभे मुहूर्ते नक्षत्रवारग्रहबलान्विते ।
चरे लग्ने ग्रहे क्रूरे तत्रस्थे शुभवीक्षिते ॥ ८५ ॥
गुरुसंघाभ्यनुज्ञातो बहिः प्रस्थानमातनोत् ।
पंचमेऽह्नि प्रयाणं च चक्रे वक्रेश्वराकृतिः ॥ ८६ ॥ युग्मम् ।
ततः प्रयाणकस्तोकमेवासौ गुर्जरावनेः ।
संधिक्षोणिमवाप्याथ ससज्ज स च सज्जयः ॥ ८७ ॥
धाराधिरूढप्रज्ञाभूर्धारापुरमवाप्तवान् ।
प्रधानैश्च प्रतिज्ञातं ज्ञापितः स्वप्रभुस्ततः ॥ ८८ ॥
युतः सर्वर्द्धिसामग्र्या सैन्यमान्यमर्दन्यभूः ।
अवंतिनायकः सज्जयितास्याभिमुखोऽचलत् ॥ ८९ ॥

---

१ D हेमान्यत्. २ D संबद्धौ ३ H प्रयाण क० ४ H Pतत.

दंतावलैः कलेर्विन्ध्य इव पर्यंतपर्वतैः ।
रथैर्ध्वनिप्रथैरभ्रैरदभ्रैरभ्रवद्भ्रमात् ॥ ९० ॥
शोभमानो वराश्वीयैः कल्लोलैरिव वारिधिः ।
पदातिराजभिर्भ्राजद्राजा राजेव तारकैः ॥९१॥ त्रिभिर्विशेषकम्
राजा मान्योपरोधेन व्रताचारव्यतिक्रमे ।
प्रायश्चित्तं चिकीर्षुश्चित्ते सूरिरारूढवान्गजम् ॥ ९२ ॥
दृग्गोचरे करिस्कंधात्तावुत्तीर्य स्थितौ भुवि ।
राजा च मुनिराजश्च मिलितौ भ्रातराविव ॥ ९३ ॥
देशागतमहाविद्वदुचितं नृपकोशतः ।
प्रवालकमयं पट्टं तदध्यक्षः समानयत् ॥ ९४ ॥
नियुक्तैश्चाथ तैः स्थूलवेष्टनेभ्यो विवेष्ट्य च ।
कंबिकाहस्तमानेन दैर्घ्यविस्तारयोः समः ॥ ९५ ॥
अष्टांगुलोच्छ्रयः सूर्यबिंबवत्तेजसा दृशाम् ।
दुर्दशः शुद्धभूपीठे व्यमुंचत नृपाज्ञया ॥ ९६ ॥
अत्राध्वमिति भूपालानुज्ञाताः प्रत्यलेखयन् ।
ते रजोहरणाग्नि(त्र)स्त्वं तत्रोपविविशुस्ततः ॥ ९७ ॥
अथ श्रीभोज आह स्मो रणलोमालिपिच्छकान् ।
किंतु प्रमार्जितं रेणु जीवा चात्र न संति किम् ॥ ९८ ॥
उपविष्टस्ततः सूरिः कंपमानशरीरकः ।
राज्ञा पृष्टः कथं कंपो जज्ञेऽथ प्राह सोऽप्यथ ॥ ९९ ॥
राजपत्नीविकाशाश्रिहस्तान् वीक्ष्य बिभेम्यहम् ।
राज्ञोचेऽसौ स्थिती राज्ञां सप्रहासौ व्रतस्थितिः ॥ १०० ॥
अस्त्वेवमिति राज्ञोक्ते सजैनीमाशिषं ददौ ।
भूपालायोत्तरस्थैर्यहर्षिताय कलानिधिः ॥ १०१ ॥

हुत्वा मंत्री विधाता लवणमुडुगणं साध्य तेजः कृशानौ
धात्रीपात्रं विमोच्य द्विजनिनदमहामंत्रघोषेण यावत् ।
आदायैंदुं घरट्टं कृपति मुहुरुषा शाकिनी ताम्रचूड-
ध्वानं तावज्जयत्वं वसुमति सुमनोमंडले भोजराज ॥ १०२ ॥

परस्परं प्रशंसाभिर्निर्गस्यकमपि क्षणम् ।
राज्ञा स्वमंदिरं प्राप सूरिः पुर्यंतरीयिवान् ॥ १०३ ॥
मध्येनगरि तत्रास्ति विहारोहारवक्षिते ।
जनाह्निष्टाय तत्रायात्सूराचार्यः कलानिधिः ॥ १०४ ॥
सुवर्णमणिमाणिक्यपूजाभिः प्रसरत्प्रभाः ।
प्रतिमा वीतरागाणां ववंदे भक्तिनिर्भरम् ॥ १०५ ॥

---

१ D P मर्त्यो. २ D P. नाक.

लुठत्पाठाकपाठास्तिकर्म्मठा शठपंडिते (?) ।
प्रणष्टवठरे प्रायान्मठे निष्ठितकल्मषः ॥ १०६ ॥
तत्र चूडसरस्वत्याचार्योऽनार्यतमोर्यमा ।
अस्ति प्रशस्तिर्यस्यास्ति विश्वविद्वन्मुखे सदा ॥ १०७ ॥
सर्वाभिगमपूर्वं च प्राणतस्तैः प्रभुर्मुदा ।
तच्छिष्याः प्रणमंतामुं सौवागतिकवाणयः ॥ १०८ ॥
तैस्तथातिथयो नैव गोचरे प्रहितास्तथा ।
आनीय शुद्धमाहारं भोजिता भक्तिपूर्वकम् ॥ १०९ ॥
साधर्म्मिकनृपश्राद्धकुशलप्रश्नकेलिभिः ।
अपराह्णेऽभवत्तेषां परितोषभराल्लघुः ॥ ११० ॥
अवलेपश्च भूपस्य प्रभूतातिशयादभूत् ।
तदा कदाचिदंभोजादपि कीटः प्रजायते ॥ १११ ॥
असौ षडपि संमील्य दर्शनानि तदा भणन् ।
भवद्भिर्भ्राम्यते लोकः पृथगाचारसंस्थितैः ॥ ११२ ॥
तस्मात्सर्वेऽपि संगत्य दर्शनस्य मनीषिणः ।
कुरुध्वमेकमेवेदं संदिहाम यथा नहि ॥ ११३ ॥
विज्ञप्तं मंत्रिमुख्यैस्तु भूपः प्राच्योऽपि कोऽपि नः ।
समर्थोऽपि विधातासीदीदक्षस्येह कर्म्मणः ॥ ११४ ॥
भूपतिं प्राह किं कोऽपि परमारान्वये पुरा ।
आसीत्स्वशक्तितो भोक्ता सगौडं दक्षिणापथम् ॥ ११५ ॥
तूष्णीकेष्विति विश्रुत्य तेषु भूपो निजैर्नरैः ।
समर्पिडयदेकत्र वाटके तान् पशूनिव ॥ ११६ ॥
सहस्रसंख्यया तत्र पुंसः स्त्रीरपि चानयत् ।
भोक्तुं नादाच्च सर्वेषामेकमत्या चिकीर्षया ॥ ११७ ॥
अनादिसिद्धशास्त्रौघप्रमाणैश्च निजैर्निजैः ।
गतिरेकः कथं तेषां धान्येष्वेको यथा रसः ॥ ११८ ॥
क्षुधाबाधापरीणामादैकमत्यं त्वजायत ।
जीवो निजः कथं रक्ष्य इति चिंतामहाज्वरे ॥ ११९ ॥
तन्मध्ये दर्शनस्थित्या सूराचार्योऽपि चागमत् ।
सर्वैरैक्येन सोऽभाणि सांत्वनापूर्वकं तदा ॥ १२० ॥
भूपालः काल एवायं य एवं दर्शनव्रजे ।
ऐक्यबुद्धिं विधित्सुस्तन्न भूतं न भविष्यति ॥ १२१ ॥
भवंतो गुर्जराच्छेकवाक्प्रपंचेन केनचित् ।

१ H. ना.

निवर्त्तयध्वमेनं कुविकल्पादमुतो दृढात् ॥ १२२ ॥
परं सहस्रलोकानां भवंतः प्राणदानतः ।
उपार्जयध्वमत्युग्रं पुण्यं यद्गणनातिगम् ॥ १२३ ॥
सूराचार्यस्ततः प्राहातिथीनां नः किमागतौ ।
कार्यं भवेन्महीशोऽपि न नः प्रतिवदेत्किमु ॥ १२४ ॥
परंतु दर्शनश्रेणिराराध्यानादिपद्धतिः ।
तदुक्तोपक्रमं किंचित्करिष्यामो विमोचकम् ॥ १२५ ॥
अमात्यपार्श्वतो भूपपुरतोऽख्यापयद्गुरुः ।
आयातयातमस्माकं नृपेण सहसाग्रतः ॥ १२६ ॥
परं दर्शनिलोकानां बहूनामनुकंपया ।
किंचिद्वदामि चेद्भूपोऽवधारयति तत्त्वतः ॥ १२७ ॥
राजापि शीघ्रमायातु गूर्जरः कविकुंजरः ।
इत्युक्ते मंत्रिभिःसार्धं स ययौ राजमंदिरम् ॥ १२८ ॥
अवदद्भूपतेऽभ्यागतानामातिथ्यमद्भुतम् ।
उचितं विदधे सम्यक् भूप एव तपस्विनाम् ॥ १२९ ॥
[1]परं ततः कथं कार्यं दर्शनानि धृतानि यत् ।
तत्तु दूयेत तेनैव वयं यामो भुवं स्वकाम् ॥ १३० ॥
तत्रापि हि गताः किंतु स्वरूपं कथयाम हो ।
धारापुरश्च संस्थानं पृच्छामो भवदंतिके ॥ १३१ ॥
राजाहाभ्यागतानां वो नाहं किमपि संमुखम् ।
भणाम्येषां तु पार्थक्ये हेतुं पृच्छामि निश्चितम् ॥ १३२ ॥
स्वरूपं मत्पुरो यूयं शृणुताव्यग्रचेतसः ।
चतुर्भिरधिकाशीतिः प्रासादानामिह स्थिताः ॥ १३३ ॥
चतुष्पथानि तत्संख्यानि च प्रत्येकमस्ति च ।
चतुर्विंशतिरट्टानामेवं पुरि च सूत्रणा ॥ १३४ ॥
सूरिः प्राहैकमेकांतं कुरु किं बहुभिः कृतैः ।
एकत्र सर्वं लभ्येत लोको भ्रमति नो यथा ॥ १३५ ॥
राजाऽवदत्पृथग्वस्त्वर्थिनामेकत्र मीलने ।
महाबाधा ततश्चक्रे पृथग् हट्टावली मया ॥ १३६ ॥
इत्याकर्ण्यावदत्सूरिर्भूरिवैकृत्वकेलिषु ।
विद्वानपि महाराज विचारयसि किं नहि ॥ १३७ ॥
स्वकृतान्यपि हट्टानि भङ्क्तुं न क्षमसे यदि ।
अनादिदर्शनानि त्वं कथं ध्वस्तुं समुद्यतः ॥ १३८ ॥

---

१ H. तप० D. कृप. २ P. महि D. ये मयि. ३ P. असानि D. अमानिन्व.

द्रव्यार्थी जैनमास्थेयाद्रसार्थी कौलदर्शनम् ।
वेदांश्च व्यवहारार्थी मुक्त्यर्थी च निरंजनम् ॥ १३९ ॥
चिरप्ररूढचित्तस्थावलेपैः सकलो जनः ।
एकः कथं भवेत्तस्मान्महीपाल विचिंतय ॥ १४० ॥
श्रुत्वेति भ्रष्टकुग्राहावलेपो भूपतिस्तदा ।
संमान्य भोजयित्वा च दर्शनान्यमुचत्कृते ॥ १४१ ॥
अवस्थेयं भवद्भिश्च सांगत्याग्रहमाह्वयम् ।
इत्थं बहुमतो गच्छ निजं सूरिरुपाश्रयम् ॥ १४२ ॥
तत्र व्याकरणं श्रीमद्भोजराजविनिर्मितम् ।
तच्च विद्यामठे छात्रैः पठ्यतेऽहर्निशं भृशम् ॥ १४३ ॥
मिलंति सुधियः सर्वे तत्र कारणमागमत् ।
तत्र प्रचलितः सूरिः श्रीमान् चूडसरस्वती ॥ १४४ ॥
सहिष्यामो वयमपि सूराचार्येण जल्पिते ।
गूर्जरावंनिविद्वत्ता शंकया च न्यषेधितैः ॥ १४५ ॥
दर्शनार्थं परिश्रान्ता यूयमद्यावतिष्ठथ ।
सदोद्यंतः पुनरसौ प्राह तत्प्रेक्षणोत्सुकः ॥ १४६ ॥
तारुण्ये कः श्रमो युष्मद्देशविद्वन्निरीक्षणे ।
कुतूहलाद्विहारो नः समागच्छाम एव तत् ॥ १४७ ॥
अथ तेऽप्यनुमन्तारः प्रतिषेधेन तान् सह ।
नीतवंतस्तदा पाठशालायां शंकितास्तदा ॥ १४८ ॥
उपाध्यायश्च तत्राहातिथयः कुत आययुः ।
ऊचे तत्र स्थिताचार्यैरणहिल्लपुरादिति ॥ १४९ ॥
विशेषसंभ्रमाच्चक्रे व्यापकः स्वागतादिकम् ।
उपवीविशदेषोपि प्रधानासनि तद्वयम् ॥ १५० ॥
सूराचार्यस्ततः प्राह ग्रंथः कोऽत्र प्रवाच्यते ।
कृतिः श्रीभोजराजस्य शब्दशास्त्रं स चावदत् ॥ १५१ ॥
प्रोच्यतां तन्नमस्कार इत्युक्तेऽभ्यागतैर्बुधैः ।
उपाध्यायः सह छात्रैः पटुस्वरमुवाच तम् ॥ १५२ ॥
तद्यथा--चतुर्मुखमुखांभोजवनहंसवधूर्मम ।
मानसे रमतां नित्यं शुद्धवर्णा सरस्वती ॥ १५३ ॥
सूराचार्यस्ततः प्राह किंचिदुत्प्रासगर्भितम् ।
एवंजातीयविद्वांसो देशेऽत्रैव न चान्यतः ॥ १५४ ॥
अस्माभिर्भारती पूर्वमश्रावि ब्रह्मचारिणी ।
कुमारी सांप्रतं तत्र व्यपदिष्टा वधूरिति ॥ १५५ ॥

१ D. P. शि (ग) श्वत्.

चित्रमश्रुतपूर्वं तदन्यत्पृच्छामि किंचन ।
मातुलस्य सुता गम्या यथास्ते दक्षिणापथे ॥ १५६ ॥
सुराष्ट्रायां भ्रातृजाया देवरस्य यथोचिता ।
भवद्देशे तथा गम्याऽनुजांगजवधूः कथम् ॥ १५७ ॥
यद्वधूशब्दसामीप्ये मानसे रमतां मम ।
प्रयुक्तं तद्भवंत्येव देशाचाराः पृथग्विधाः ॥ १५८ ॥
अनुत्तरं प्रतिहतश्चालयन्नन्यसंकथाः ।
कालं विलंबयामासेष्टानध्यायकृतादरः ॥ १५९ ॥
संध्यावसरसंप्राप्तः श्रीभोजनृपतेः पुरः ।
अपराह्णेतिवृत्तं स जगौ विस्मयकारकम् ॥ १६० ॥
भूपश्च विस्मितः प्राह संभाव्यं गुर्जरावनौ ।
इदं प्रातर्विलोक्योऽसौ विद्वानाहूय निश्चितम् ॥ १६१ ॥
तत्रस्थाचार्यपार्श्वे च भूपालः प्रैषयन्नरान् ।
आह्वातुमतिथिं तं च भक्तिपूर्वं तमाह्वयत् ॥ १६२ ॥
ततश्चूडसरस्वत्याचार्येण सह स प्रभुः ।
ययौ श्रीभोजभूनाथसभां स्वर्गसभानिभाम् ॥ १६३ ॥
राज्ञा नृपांगणाग्रे च शिलैका निहिता तदा ।
गूर्जराग्रे निजप्राणस्फूर्तिदर्शनहेतवे ॥ १६४ ॥
तत्र पूर्णं पुनश्छिद्रं प्राग् विधाप्य विधाय च ।
तद्वर्णसमकल्केन तादृशोपि छलार्थिनः ॥ १६५ ॥ युग्मम् ।
आगच्छन्तं तदालोक्य सूरीश्वरमिलापतिः ।
आकर्णं धनुराकृष्यामुचल्लक्ष्ये शरं दधन् ॥ १६६ ॥
सूराचार्यश्च सूक्ष्मेक्षी कल्कालेपं तटस्थितम् ।
बाणाग्रोत्कीर्णमालोक्य गर्भार्थं काव्यमब्रवीत् ॥१६७॥ तथाहि ।
विद्धा विद्धा शिलेयं भवतु परमतः कार्मुकक्रीडितेन
श्रीमत्पाषाणभेदव्यसनरसिकतां मुंच मुंच प्रसीद ।
वेधे कौतूहलं चेत्कुलशिखरिकुलं बाणलक्षीकरोषि
ध्वस्ताधारा धरित्री नृपतिलक तदायाति पातालमूलम् ॥१६८॥
इत्थमद्भुतसामर्थ्यवर्णनात्तोषितो नृपः ।
अधृष्यप्रज्ञमेनं श्रीधनपालोपि बुद्धवान् ॥ १६९ ॥
व्यचिंतयच्च बुद्धिं च विज्ञानं भूपतेरियम् ।
गर्भितोक्तिरहो जैना जीयंते केन मेधया ॥ १७० ॥
निजाश्रयं ययौ श्रीमान् सूराचार्यो नृपार्चितः ।
राजा स्थानमथास्थाय समस्तविदुषो वदन् ॥ १७१ ॥

---

१ D P ते. ॰नन् ।

गूर्जरोयं महाविद्वानाययौ श्वेतचीवरः ।
अनेन सार्धं कोपीह वादमुद्रां बिभर्तु वः ॥ १७२ ॥
पंडितानां सहस्रार्धमध्ये सर्वेप्यवाङ्मुखाः ।
भग्नास्तत्प्रतिघातेन घनगर्ज्यैर्भेका इव ॥ १७३ ॥
विलक्षो नृपतिः प्राह किं गेहे नर्दिनः खलु ।
स्वयं वृत्तिभुजोऽस्माकं विद्वज्जल्पा मुधा बुधाः ॥ १७४ ॥
तेषामेको महाप्राज्ञः प्रादान्मंत्रं प्रभो शृणु ।
मा वैलक्ष्यं प्रपद्येथा रत्नगर्भा वसुंधरा ॥ १७५ ॥
निर्जरा इव देहस्था गूर्जराः श्वेतभिक्षवः ।
दुर्जेयास्तदतो मंत्रसाध्यं कार्यमिदं प्रभो ॥ १७६ ॥
छात्रैः कोपि महाप्राज्ञ आषोडशसमाह्वयः ।
प्रमाणशास्त्रोपन्यासं पाठ्यतामशठः सुधीः ॥ १७७ ॥
श्रुत्वेति भूपतिस्तुष्टिपुष्टः पंडितवाक्यतः ।
अस्त्वेवमित्यवादीत्त्वमेवैतत् कुरुष्व भो ॥ १७८ ॥
एकः पटुर्वटुः सौम्यः प्रज्ञावकृत्त्वशेवधिः ।
तर्कशास्त्रसदभ्यासोपन्यासं पाठितस्ततः ॥ १७९ ॥
अतिव्यक्ताक्षरं तेनादायि पाठं गुरोः पुरः ।
एतद्विज्ञाप्य राजानं मुहूर्तः शोधितः शुभः ॥ १८० ॥
ज्ञापितं वादसूराय सूराचार्याय भूभुजा ।
समाहूय च वादार्थे स्थापितोऽसौ वरासने ॥ १८१ ॥
पट्टवासोऽतिवसनश्छात्रः शृंगारितस्ततः ।
सुवर्णरत्नपुष्पाढ्याभरणैः शरणैः श्रियः ॥ १८२ ॥
स्वमंकं तं समारोप्य राजाह प्रतिवाद्यसौ ।
ततो जगाद वादींद्रः प्रकटाक्षरपद्धतिः ॥ १८३ ॥
क्षीरकंटः क्षीरगंधवक्त्रोपक्रिमवागसौ ।
यूनां न उचितो नैव समाने विग्रहः खलु ॥ १८४ ॥
राजाह रभसा नायं बाल एवेति भाव्यताम् ।
शिशुरूपा ह्यसौ ब्राह्मी जितेऽस्मिन्मत्सभा जिता ॥ १८५ ॥
पूर्ववादो लघोरस्तु सूरिणोक्ते ततः शिशुः ।
यथालिखितपाठं च व्यक्तमस्खलिताक्षरम् ॥ १८६ ॥
अपदच्छेदवाक्यं तत् विशरारुविभक्तिकम् ।
शृण्वन्मेने ह्यसावर्थावगमो न विना वदेत् ॥ १८७ ॥

१ P D. गण. D omits आययौ...तेन. २ D त्रे H त्रैं. ३ H. पुष्परत्ना. D P. यूयंन...वासमानो.

इत्येवं शंकया क्षुण्णं विमृशन्निश्चिकाय च ।
पट्टिकापाठप्रवायमीदृशोऽत्र नहीतरत् ॥ १८८ ॥
जल्पेद्यावद्द्वयेनासौ तावत्परुषशब्दतः ।
पाश्चात्यं तु पदं कूटं बभणे भवता हि भो ॥ १८९ ॥
पुनर्भणेति सस्तोक्ते रभसेति ततोऽवदत् ।
पट्टिकायां ममेदृक्षं लिखितं निश्चयो मम ॥ १९० ॥
सूराचार्य इति श्रुत्वा प्राह संतोषनिर्भरम् ।
यादृक् लक्षणशास्त्रादौ श्लोको'वादोऽपि तादृशः ॥ १९१ ॥
तदापृच्छामहे श्रीमान् भोजभूपालपुंगवः ।
अदर्शि मालवो देशो मंडकाः खादिता अपि ॥ १९२ ॥
इत्युक्त्वा प्रययौ सूरिर्मठं हतजितद्विषम् ।
लज्जामन्युभराक्रांतो राजास्थानं व्यसर्जयत् ॥ १९३ ॥
श्रीमान् चूडसरस्वत्याचार्यः प्राघुणमभ्यधात् ।
अस्माकं शासनोद्योतात्सुखं त्वन्मृत्युतोऽसुखम् ॥ १९४ ॥
श्रीभोजराजः स्वसभाजेतारं हन्ति निश्चितम् ।
जये पराजये वापि न श्रेयः किमु कुर्महे ॥ १९५ ॥
सूराचार्यस्ततोऽवादीद्वीरधौरणिधूर्धरः ।
स्वं रक्षिष्येऽहमात्मानं भवद्भिर्मानुतप्यताम् ॥ १९६ ॥
तदा श्रीधनपालेन प्रेरितः कविचक्रिणा ।
पुरुषो गूर्जराचार्यं प्रोचे स्वस्वामिवाचिकम् ॥ १९७ ॥
पूज्याश्च येन केनापि मंद्देश्मायांतु सत्वरम् ।
अविश्वास्यो नृपस्यास्य प्रसादो पि भयंकरः ॥ १९८ ॥
मंडनं सर्वदेशानां भवादृग् विश्रुतः सुधीः ।
भाग्यातिशयतो मादृग्जनैर्दुर्लभ एव यत् ॥ १९९ ॥
मद्दर्शनानन्तरं च विधेया कापि नाधृतिः ।
सुखेन गूर्जरं देशं प्रापयिष्यामि निश्चितम् ॥ २०० ॥
अहो जागर्ति भाग्यं वः साधूनां मितभाषिणाम् ।
प्रातः क्षणेऽश्ववारैस्तच्चैत्यं वाटमवेष्ट्यत ॥ २०१ ॥
संतोषजयपत्रं वः प्रदास्यति नृपाग्रणीः ।
विद्वांसमतिथिं प्रेषयध्वं विध्वस्तवादिनम् ॥ २०२ ॥
इति वास्तव्यसूरिं तेऽभ्ययुर्विधुरिताननम् ।
आयास्यतीति तानाह शून्यतायातचेतनम् ॥ २०३ ॥
मध्याह्ने कर्कशे सूर्यतापात्कुंभे गुरौ तदा ।
कृतवेषपरावर्तो दाम दत्वा दृढं गते ॥ २०४ ॥

तत्रैत्यैकानगारेण प्रावृत्यासौ जरत्पटीम् ।
मलिनां निःसरंश्चैत्यद्वारेण जगदे भटैः ॥ २०५ ॥ युग्मम् ।
बहिः कथं तु निर्यासि मध्ये गच्छ सितांबरः ।
अर्पिते गुर्जरे सर्वे सर्वतो मुत्कला ध्रुवम् ॥ २०६ ॥
स च श्रुत्वा करालोकिर्विकपालमुखोऽवदत् ।
मध्ये सिंहासनासीनं भूपालमिव गर्वतः ॥ २०७ ॥
कर्णे धृत्वा प्रभोरग्रे नयतास्माकंवैरिणम् ।
जयपत्रमथाप्नोति यमपत्रमथापि वा ॥ २०८ ॥
तृषाक्रांता वयं युष्मत्पुरवास्तव्यतां गताः ।
भवद्धर्मेण नीराय गच्छामोमुंचत द्रुतम् ॥ २०९ ॥
एकेन चाश्ववारेण कृपया मोचितोऽथ सः ।
मनीषिमौलिरत्नस्य गृहं प्रापापभीः प्रभुः ॥ २१० ॥
स चाह वाक्पथातीताच्छैकताने यतीश्वरः ।
यमदृष्टिपथादंतर्धाय मे दृक्पथे स्थितः ॥ २११ ॥
अद्य ते जन्म मन्येहं गच्छस्तेऽद्य सुपुण्यकः ।
यद्भवानागतो जैनशासनव्योमभास्करः ॥ ११२ ॥
कथमागा इदं पृष्टः सूराचार्यो यथा तथा ।
अभ्ययादिति च श्रुत्वा परमानंदमाप्तवान् ॥ ११३ ॥
भूमीग्रहे सावकाशेऽवस्थाप्यादरपूर्वकम् ।
शुद्धाहारेण तं भक्त्या प्रत्यलाभं यदुद्यतः ॥ २१४ ॥
ततस्तांबूलिकस्तोमं तत्र यातं निरीक्ष्य सः ।
अत्यादरेण संमान्य भोजनाच्छादनादिना ॥ २१५ ॥
ततश्चाभ्यर्थयामास तान्मम भ्रातरं स्वकम् ।
अणहिल्लपुरं यावत्परानयत निश्चितम् ॥ २१६ ॥
तेऽप्यूचुर्ब्राह्मणः पूज्यो राज्ञां ख्यातो बुधाग्रणीः ।
तदादेशः प्रमाणं नः कार्यमावश्यकं ह्यदः ॥ २१७ ॥
नाम्नानिर्वृतिराधेया न यामः सपरिच्छदम् ।
यानारोहेतरे भक्तौ निश्चितो वर्ततामसौ ॥ २१८ ॥
श्रीमता धनपालेन दीनाराणां शतं ददे ।
अंगीकरणतोऽमीषां रंगसंगतरंगिणा ॥ २१९ ॥
गुरवोऽल्लकमध्ये च गुप्तं कृत्वा गुरुं तदा ।
पर्याण्यवृषभान् शीघ्रं ते चेलुर्गूर्जरावनौ ॥ २२० ॥

१ H. तत्र चैत्या॰ D तत्रैन्दे॰. २ D अर्जि॰. ३ D स्मान॰.

महीतटागतेन श्रीसूराचार्येण सद्गुरोः ।
विज्ञापितं नैरैरात्मागमनं कोशलोत्तरम् ॥ २२१ ॥
इतश्च विविशुश्चैत्यमपराह्णे भट्टाः स्वयम् ।
साधुं स्थूलोदरं दृष्ट्वा सिंहासन्युपवेशितम् ॥ २२२ ॥
प्रधानवस्त्रसंवीतमुद्यन्मदकलाकृतिम् ।
एवमूचुर्नृपादेशान्निर्गच्छत जिनालयात् ॥ २२३ ॥ युग्मम् ॥
मध्ये योत्र विलंबः सोदूखलेधातवंचना ।
उत्थाय सोऽग्रतो भूत्वाऽश्ववारैः सह जग्मिवान् ॥ २२४ ॥
पार्थिवस्य पुरो भूत्वावतस्थे मौनमास्थितः ।
विलक्षेण ततो राज्ञा हायिका जल्पितास्तदा ॥ २२५ ॥
कोयं भवद्भिरानीतो जंबे(ठ)रः स्थूलदेहभृत् ।
ततोसौ गूर्जरश्छेको भवतामग्रतो ननु ॥ २२६ ॥
अक्ष्णि रेणुं हि निक्षिप्य केनाप्यंधः कृतः कथम् ।
भवतां सदृशः कश्चिच्चेतनारहितो नहि ॥ २२७ ॥
तेऽप्यूचुर्नाथ नीरस्य वाहकं दुर्गतं मुनिम् ।
एकं मुक्त्वा न कस्यापि निर्गमोऽस्मत्पुरः प्रभोः ॥ २२८ ॥
भूप आह परावृत्य वेषं वः पश्यतां ययौ ।
विजित्य न सतां नान्यस्त्वं विनोत्पन्नबुद्धिमान् ॥ २२९ ॥
पुरस्थं प्राह राजा स्वमावासं गच्छ पुण्यतः ।
मूर्खत्वं हि वरं श्लाघ्यं येनासक्तोऽपि जीवितः ॥ २३० ॥
इत्यसौ प्रहितो राज्ञा मठे व्यावृत्य चाययौ ।
मूर्ध्नै एव भ्रुवो नैवाक्षतवर्द्धनमुंडने ॥ २३१ ॥
इतः श्रीभीमभूपालः प्रजिघाय नरान्निजान् ।
आह्वायकान्निजभ्रातुर्मातुलो वृत्तिभिः सह ॥ २३२ ॥
स्वदेशे प्रकटो भूत्वा राजधानीमथाययुः ।
गुरवः संघसंवीताः स्वस्याभिमुखमागमत् ॥ २३३ ॥
राजा च सर्वसामग्र्या प्रतिपंथी च कः शुभे ।
आचार्यः स्वगुरोः पादौ प्रेक्ष्य ह्रीमानिवानमत् ॥ २३४ ॥
प्रत्यासन्नश्च तेषां स सर्वाभिगमपूर्वकम् ।
योगी चाष्टांगयोगेन प्रह्वोऽभिहितवान् वचः ॥ २३५ ॥
सफलाद्य गुरोराशा सफला मातुराशिषः ।
प्रसन्नाद्यक् त्वमाद्यक्षे श्रीसंघस्य फलेग्रहिः ॥ २३६ ॥

---

१ D घठर. २ D. नि.

अविमृश्य विधायीव गतौ मालवके तदा।
अक्षतोऽहमिहागच्छं यज्जित्वा भोजपर्षदम् ॥ २३७ ॥
तथान्तेवासिनोऽमी श्रीगुरुपादाग्रतो मम।
क्षणं नाकथयिष्यंत शिक्षिष्यत न च प्रभुः ॥ २३८ ॥
बालोयं यदि दर्पेण न व्यधास्यं प्रतिश्रवम्।
गुरुमस्तकहस्तस्य कः प्रमाणमथोच्यते ॥ २३९ ॥
इत्याकर्ण्य प्रभुर्द्रोणः[1] शोणह्रद इव स्थिरः।
उवाच वाचमाचारचारुचारित्रचंचुरः ॥ २४० ॥
एवं प्रतिश्रयं क्लीबदुष्करं विदधीत कः।
निर्वाहयेत च श्रीमान् विना त्वामाप्तवाग्वरम् ॥ २४१ ॥
सगच्छसंघाश्च वयमाचानाम्लैरुपस्थिताः।
आसंवद्वदनालोकात् सम्यक्शासनदेवताम् ॥ २४२ ॥
सगद्गदमुदित्वैवं स बाढं परिषस्वजे।
गुरुभिश्चाथ भूपोऽपि श्रीभीमः प्राह सादरम् ॥ २४३ ॥
मनीषी विनयी छेकस्तत्कालोत्पन्नबुद्धिमान्।
त्वां विना दृश्यते नान्यस्तेजस्वी दृढवीर्यभूः ॥ २४४ ॥
श्रीभोजं छलयित्वा यत्ताहक्प्राशपरिग्रहम्।
आगत्याक्षतदेहस्त्वं मम तेजोऽभ्यवर्द्धयः ॥ २४५ ॥
किंचित्पृच्छामि संदेहं नृपतिः सस्तुतो न वा।
सूरसूरिरथ प्राह पयोवाहनिभध्वनिः ॥ २४६ ॥
रसना मे महाराज त्वां विना स्तौति नापरम्।
मदुक्तस्य च काव्यस्य भावार्थं शृणु कौतुकात् ॥ २४७ ॥
शिला विद्धा सती विद्धाच्छिद्रे शरमुचां हि कः।
विक्रमः कार्मुकक्रीडां मुंचत व्याजतः कृताम् ॥ २४८ ॥
व्यसने दृषदां भेदाद्भवतां पूर्वजो गिरिः।
अर्बुदस्तस्य भेदे तु ध्वस्तधारा धरित्र्यपि ॥ २४९ ॥
पातालमूलं यातीयं शिक्षयेऽहमिति ब्रुवन्।
अपि द्विपति सच्छिक्षा दातव्या शमजीवितैः ॥ २५० ॥
श्रीभीमः प्राह तच्छ्रुत्वा पुलकोद्भेदमेदुरः।
मद्बंधुना जिते भोजे का मे चिंतास्ति तज्जये ॥ २५१ ॥
स्वसमीपे समारोप्य गजराजवरासने।
सूराचार्यस्य भूपालः प्रवेशोत्सवमातनोत् ॥ २५२ ॥

---

[1] D. श्रोणि.

अतीचारान् स विज्ञप्य गुरुपार्श्वे महामतिः ।
देशान्तरगतौ जातास्तपसाशोधयद्दृढम् ॥ २५३ ॥
युगादिनाथश्रीनेमिचरिताद्भुतकीर्तनात् ।
इतिवृत्तं द्विसंधानं व्यधात् स कविशेखरः ॥ २५४ ॥
यः पूर्वं पिपठीः शिष्यवर्गस्तमिह सूरिराट् ।
सम्यग् निष्पाद्य वादींद्रतया सममयोजयत् ॥ २५५ ॥
श्रीद्रोणसूरिणां गत्या परलोके सुसाधिते ।
क्षितावक्षामचारित्रपवित्रः सूरिसद्गुरुः ॥ २५६ ॥
प्रभावनाभिः श्रीसंघमुन्नमय्य श्रुतोदधिः ।
शिष्यान्निष्पाद्य संपाद्य जैनप्रवचनोन्नतिम् ॥ २५७ ॥
योग्यं सूरिपदे न्यस्य भारमत्र निवेश्य च ।
प्रायोपवेशनं पंचत्रिंशद्दिनमितं दधौ ॥ २५८ ॥
आत्मारामादरः सम्यग् योगत्रयनिरोधतः ।
श्रीभीमभूपतेर्बंधुरुत्तमां गतिमाश्रयत् ॥ २५९ ॥

चतुर्भिः कलापकम् ।

श्रीसूराचार्यवृत्तं व्यरचि परिचितं वादविद्याविनोद-
क्षुभ्यद्वादिप्रवादं किमपि गुरुमुखादन्यतो वाप्य किंचित् ।
श्रेयो देयादमेयं जिनपतिवचनोद्योतनस्थैर्यहेतुः
सेतुर्जाड्यांबुराशेर्भवतु भवभृतामद्य विद्योद्यमाय ॥२६०॥
श्रीचंद्रप्रभसूरिपट्टसरसीहंसप्रभः श्रीप्रभा-
चंद्रः सूरिरनेन चेतसि कृते श्रीरामलक्ष्मीभुवा ।
श्रीपूर्वर्षिचरित्ररोहणगिरौ श्रीसूरसूरेः कथा
श्रीप्रद्युम्नमुनींदुना विशदितः शृंगोऽयमष्टादशः ॥ २६१ ॥

इतिश्रीसूराचार्यप्रबन्धः ॥ ग्रंथ० २६९ अ २३ भम० ४२७७ ।

---

अभयदेवप्रबन्ध. ।

श्रीजैनतीर्थधम्मिल्लोऽभयदेवः प्रभुः श्रिये ।
भूयात्सौमनसोद्भेदभास्वरः सर्वमौलिभूः ॥ १ ॥
आहत्याष्टांगयोगं यः स्वांगमुद्धृत्य च प्रभुः ।
श्रुतस्य च नवांगानां प्रकाशी स श्रिये द्विधा ॥ २ ॥
यदन्वालो यथा व्यक्तं मातापित्रोः प्रमोदकृत् ।
तद्वृत्तमिह वक्ष्यामि गुरुहर्षकृते यथा ॥ ३ ॥
अस्ति श्रीमालवो देशः सद्वृत्तरसशालितः ।
जंबूद्वीपाख्यमाकंदफलं सद्वर्णवृत्तसूः ॥ ४ ॥

तत्रास्ति नगरी धारा मंडलाग्रोदितस्थितिः ।
मूलं नृपश्रियो दुष्टविग्रहद्रोहशालिनी ॥ ५ ॥
श्रीभोजराजस्तत्रासीद्भूपालः पालितावनिः ।
शेषस्येवापरे मूर्ती विश्वोद्धाराय यद्भुजौ ॥ ६ ॥
तत्र लक्ष्मीपतिर्नाम व्यवहारी महाधनः ।
यस्य श्रिया जितः श्रीदः कैलासाद्रिमशिश्रयत् ॥ ७ ॥
अन्यदा मध्यदेशीयकृतब्राह्मणनंदनौ ।
प्रह्वप्रज्ञाबलाक्रांतवेदविद्याविशारदौ ॥ ८ ॥
अधीतपूर्विणौ सर्वान्विद्यास्थानांश्चतुर्दश ।
स्मृत्यैतिह्यपुराणानां कुलकेतनतां गतौ ॥ ९ ॥
श्रीधरः श्रीपतिश्चेति नामानौ यौवनोद्यमात् ।
देशांतरदिदृक्षायै निर्गतौ तत्र चागतौ ॥ १० ॥ त्रिभिर्विशेषकम्
तौ पवित्रयतः स्मात्र लक्ष्मीधरगृहांगणम् ।
सोऽपि भिक्षां ददौ भक्त्या तदाकृतिवशीकृतः ॥ ११ ॥
गेहाभिमुखभित्तौ च लिख्यते स्मास्य लेखकम् ।
टंकविंशतिलक्षाणां नित्यं ददृशतुश्च तौ ॥ १२ ॥
सदा दर्शनतः प्रज्ञाबलादप्यतिसंकुलम् ।
तत्परिस्फुरितं सम्यक् सदाभ्यस्तमिवानयोः ॥ १३ ॥
जनो मत्पार्श्वतः सूपकारवत्सूपकारवान् ।
वर्त्तते निष्ठुरः किंतु मम किंचिन्न यच्छति ॥ १४ ॥
ब्राह्मणा अपि गीर्वाणान्मन्मुखादाहुतिप्रदाः ।
तर्पयंतु फलं तु स्यात्तत्कर्मकरतैव मे ॥ १५ ॥
इतीव कुपितो वह्निरह्नैकेनापि भस्मसात् ।
विदधे तां पुरीमूरीकृतप्रतिकृतक्रियः ॥ १६ ॥ त्रिभिर्विशेषकम् ।
लक्ष्मीपतिर्द्वितीयेऽह्नि न्यस्तहस्तः कपोलयोः ।
सर्वस्वनाशतः खिन्नो लेख्यदाहाद्विशेषतः ॥ १७ ॥
प्राप्ते काले गतौ भिक्षाकृते तस्य गृहांगणे ।
प्राप्तौ क्षुण्णं च तद्दृष्ट्वा विषण्णाविदमूचतुः ॥ १८ ॥
यजमान तवोन्निद्रकष्टेनावां सुदुःखितौ ।
किं कुर्वहे क्षुधा किंतु सर्वदुःखातिशायिनी ॥ १९ ॥
पुनरीदृक्शुचाक्रांतसत्ववृत्तिर्भवान् किमु ।
धीराः सत्वं न मुंचंति व्यसनेन भवादृशाः ॥ २० ॥
इत्याकर्ण्य तयोर्वाक्यमाह श्रेष्ठी निशाम्यताम् ।
न मे धनान्नवस्त्रादिदाहाद्दुःखं हि तादृशम् ॥ २१ ॥

यादृग्लेखकनाशेन निर्धर्मेण जनेन यत् ।
कलहः संभवी धर्महानिरुक्लियते हि किम् ॥ २२ ॥ युग्मम् ।
जजल्पतुश्च तावावां भिक्षावृत्ती नचापरम् ।
शक्नुवो नोपकर्तुं हि व्याख्यावो लेखकं पुनः ॥ २३ ॥
श्रुत्वातिहर्षभूः श्रेष्ठी स्वपुरस्तौ वरासने ।
न्यवेशयज्जनः स्वार्थपूरकं ध्रुवमर्हति ॥ २४ ॥
तावादितः समारभ्यातिथिवारर्क्षसंगतम् ।
व्यक्तवत्सरमासांकसहितं खटिनीदलैः ॥ २५ ॥
वर्णजात्यभिधामूलद्रव्यसंख्यानवृद्धिभृत् ।
आख्यातं लेखकं स्वाख्याख्यानवह्निषणावलात् ॥ २६ ॥
पत्रकेषु लिखित्वा तत् श्रेष्ठी दध्यावहो इमौ ।
मम गोत्रसुरौ कौचित्प्राप्तौ मदनुकम्पया ॥ २७ ॥
यद्दिशोपक्रमात्रेण वर्द्दतौ तावविस्मृतम् ।
दुस्तरीसंपुटे पत्रनिरपेक्षं हि लेख्यकम् ॥ २८ ॥ युग्मम् ।
ततः सन्मान्यसद्भोज्यवस्त्राद्यैर्बहुमानतः ।
स्वगेहचित्रकौ तेन विहितौ हितवेदिना ॥ २९ ॥
जितेंद्रियौ स तौ शांतौ दृष्ट्वेति व्यमृशद्धनी ।
शिष्यौ मद्गुरुपार्श्वेऽमूस्तां चेत्तत्संघभूषणौ ॥ ३० ॥
इतः सपादलक्षेऽस्ति नाम्नाकूर्चपुरं पुरम् ।
मषीकूर्चकमाधातुं यदलं शास्त्रवानने ॥ ३१ ॥
अल्लभूपालपुत्रोपि शक्योऽतीव धराधरः ।
श्रीमान् भुवनपालाख्यो विख्यातः सान्वयाभिधः ॥ ३२ ॥
तत्रासीत्प्रशमश्रीभिर्वर्द्धमानगुणोदधिः ।
श्रीवर्द्धमान इत्याख्यः सूरिः संसारपारभूः ॥
चतुर्भिरधिकाशीतिश्चैत्यानां येन तत्यजे ।
सिद्धांताभ्यासतः सत्यतत्त्वं विज्ञाय संसृतेः ॥ ३४ ॥
अन्यदाविहरन्धारापुर्यां धाराधरोपमः ।
आगाद्वाग्ब्रह्मधाराभिर्जनमुज्जीवयन्नमुम् ॥ ३५ ॥
लक्ष्मीपतिस्तदाकर्ण्य श्रद्धालक्ष्मीपतिस्ततः ।
ययौ प्रद्युम्नशांताभ्यामिव ताभ्यां गुरोर्नतौ ॥ ३६ ॥
सर्वाभिगमपूर्वं स प्रणम्योपाविशत्प्रभुम् ।
तौ विधाय निविष्टौ च करसंपुटयोजनम् ॥ ३७ ॥

१ P. ईषत्. D. ग.

वर्यलक्षणवर्यो च दृध्यौ वीक्ष्य तनुं तयोः ।
गुरुराहानयोर्मूर्त्तिः सम्यक् स्वपरजित्वरी ॥ ३८ ॥
तौ च प्राग्भवसंबद्धाविवानिमिषलोचनौ ।
वीक्ष्यमाणौ गुरोरास्यं व्रतयोग्यौ च तैर्मतौ ॥ ३९ ॥
महाव्रतभरोद्धारसूरिणौ तपसो निधी ।
अध्यापितौ च सिद्धांतं योगोद्वहनपूर्वकम् ॥ ४० ॥
ज्ञात्वौचित्यं च सूरित्वे स्थापितौ गुरुभिश्च तौ ।
सिद्धवासोहि सौरभ्यवासं समनुगच्छति ॥ ४१ ॥
जिनेश्वरस्ततः सूरिरपरो बुद्धिसागरः ।
नामभ्यां विश्रुतौ पूज्यैर्विहारेऽनुमतौ तदा ॥ ४२ ॥
ददे शिक्षेति तैः श्रीमत्पत्तनैश्चैत्यसूरिभिः ।
विघ्नं सुविहितानां स्यात्तत्रावस्थानवारणात् ॥ ४३ ॥
युवाभ्यामपनेतव्यं शक्त्या बुद्ध्या च तत्किल ।
यदिदानींतने काले नास्ति प्राज्ञो भवत्समः ॥ ४४ ॥ युग्मम् ।
अनुशास्तिं प्रतीच्छाव इत्युक्त्वा गुर्जरावनौ ।
विहरंतौ शनैः श्रीमत्पत्तनं प्रापतुर्मुदा ॥ ४५ ॥
सद्गीतार्थपरीवारौ तत्र भ्रांतौ गृहे गृहे ।
विशुद्धोपाश्रयालाभा वाचां सस्मरतुर्गुरोः ॥ ४६ ॥
श्रीमान् दुर्लभराजाख्यस्तत्रचासीद्विशां पतिः ।
गीःपतेरप्युपाध्यायो नीतिविक्रमशिक्षणात् ॥ ४७ ॥
श्रीसोमेश्वरदेवाख्यस्तत्र चासीत्पुरोहितः ।
तद्गेहे जग्मतुर्युग्मरूपौ सूर्यसुताविव ॥ ४८ ॥
तद्वारे चक्रतुर्वेदोच्चारं संकेतसंयुतम् ।
तीर्थं सत्यापयंतौ च ब्राह्मं पैत्र्यं च दैवतम् ॥ ४९ ॥
चतुर्वेदीरहस्यानि सारणीशुद्धिपूर्वकम् ।
व्याकुर्वंतौ स शुश्राव देवतावसरे ततः ॥ ५० ॥
तद्ध्यानध्याननिर्मग्नचेताः स्तंभितवत्तदा ।
समग्रेंद्रियचैतन्यं श्रुत्योरेव स नीतवान् ॥ ५१ ॥
ततो भक्त्या निजं बंधुमाप्याय वचनामृतैः ।
आव्हानाय तयोः प्रैषीत्प्रेक्षापेक्षी द्विजेश्वरः ॥ ५२ ॥
ता च दृष्टांतरायातौ दध्यावंभोजभूः किमु ।
द्विधा भूयादआदत्तदर्शनं स्वस्य दर्शनम् ॥ ५३ ॥
हित्वा भद्रासनादीनि तद्दत्तान्यासनानि तौ ।
समुपाविशतां शुद्धस्वकंबलनिषद्ययोः ॥ ५४ ॥

वेदोपनिषदां जैनतत्वश्रुतगिरां तथा ।
वाग्भिः साम्यं प्रकाश्यैतावभ्यधत्तां तदाशिषम् ॥ ५६ ॥

तथाहि—

अपाणिपादो ह्यमनो (जवनो) ग्रहीता पश्यत्यचक्षुः स शृणोत्यकर्णः।
स वेत्ति विश्वं नहि तस्यास्ति वेत्ता शिवो ह्यरूपः स जिनोऽवताद्वः॥५७

ऊचतुश्चानयोः सम्यगवगम्यार्थसंग्रहम् ।
दययाभ्यधिकं जैनं तत्रावामाद्रियावहि ॥ ५८ ॥
युवामवस्थितौ कुत्रेत्युक्ते तेनोचतुश्च तौ ।
न कुत्रापि स्थितिश्चैत्यवासिभ्यो लभ्यते यतः ॥ ५९ ॥
चंद्रशालां निजां चंद्रज्योत्स्नानिर्मलमानसः ।
स तयोरपर्यत्तत्र तस्थतुः सपरिच्छदौ ॥ ६० ॥
द्विचत्वारिंशता भिक्षादोषैर्मुक्तमलोलुपम् ।
नवकोटीविशुद्धं चायातं भैक्षमभुंजताम् ॥ ६१ ॥
मध्याह्ने याज्ञिकस्मार्त्तदीक्षितानग्निहोत्रिणः ।
आहूय दर्शितौ तत्र निर्व्यूढौ तत्परीक्षया ॥ ६२ ॥
यावद्विद्याविनोदोयं विरिंचेरिव पर्षदि ।
वर्त्तते तावदाजग्मुर्नियुक्ताश्चैत्यमानुषाः ॥ ६३ ॥
ऊचुश्चतेझटित्येव गम्यतां नगराद्बहिः ।
अस्मिन्नलभ्यते स्थातुं चैत्यबाह्यसितांबरैः ॥ ६४ ॥
पुरोधाः प्राह निर्णयमिदं भूपसभांतरे ।
इति गत्वा निजेशानामाख्यातमिह भाषितम् ॥ ६५ ॥
इत्याख्याते च तैः सर्वैः समुदायेन भूपतिः ।
वीक्षितः प्रातरायासीत्तत्र सौवस्तिकोऽपि सः ॥ ६६ ॥
व्याजहाराय देवास्मद्गृहे जैनमुनी उभौ ।
स्वपक्षे स्थानमप्राप्नुवंतौ संप्रापतुस्ततः ॥ ६७ ॥
मया च गुणग्राह्यत्वात् स्थापितावाश्रये निजे ।
भट्टपुत्रा अमीभिर्मे प्रहिताश्चैत्यपक्षिभिः ॥ ६८ ॥
अत्रादिशत मे क्षूणं दंडं वात्र यथार्हतम् ।
श्रुत्वेत्याह स्मितं कृत्वा भूपालः समदर्शनः ॥ ६९ ॥
मत्पुरे गुणिनः कस्माद्देशांतरत आगताः ।
वसंतः केन वार्यंते को दोषस्तत्र दृश्यते ॥ ७० ॥
अनुयुक्ताश्च ते चैवं प्राहुः शृणु महीपते ।
पुरा श्रीवनराजोभूच्चापोत्कटवरान्वयः ॥ ७१ ॥
स बाल्ये वर्द्धितः श्रीमद्देवचंद्रेण सूरिणा ।
नागेंद्रगच्छभूद्धारप्राग्वराहोपमास्पृशा ॥ ७२ ॥

पंचाश्रयाभिधस्थानस्थितचैत्यनिवासिना ।
पुरं स च निवेश्येदमत्र राज्यं ददौ नवम् ॥ ७३ ॥
वनराजविहारं च तत्रास्थापयत प्रभुः ।
कृतज्ञत्वादसौ तेषां गुरूणामर्हणं व्यधात् ॥ ७४ ॥
व्यवस्था तत्र चाकारि संघेन नृपसाक्षिकम् ।
संप्रदायविभेदेन लाघवं च यथाभवत् ॥ ७५ ॥
चैत्यगच्छयतिव्रातसंमतोवसतान्मुनिः ।
नगरे मुनिभिर्नात्र वस्तव्यं तदसंमतैः ॥ ७६ ॥
राज्ञां व्यवस्था पूर्वेषां मान्या पाश्चात्यभूमिपैः ।
यदादिशसि तत्कार्यं राजन्नेवंस्थिते सति ॥ ७७ ॥
राजा प्राह समाचारं प्राग्भूपानां वयं दृढम् ।
पालयामो गुणवतां पूजां तूल्लंघयेम न ॥ ७८ ॥
भवादृशां सदाचारनिष्ठानामाशिषा नृपाः ।
एधंते युष्मदीयं तद्राज्यं नात्रास्ति संशयः ॥ ७९ ॥
उपरोधेन नो यूयममीषां वसनं पुरे ।
अनुमन्यध्वमेवं च श्रुत्वा तेत्र तदा दधुः ॥ ८० ॥
सौवस्तिकस्ततः प्राह स्वामिन्नेषामवस्थितौ ।
भूमिः काप्याश्रयस्यार्थे श्रीमुखेन प्रदीयताम् ॥ ८१ ॥
तदा समाययौ तत्र शैवदर्शनवासवः ।
ज्ञानदेवाभिधः क्रूरसमुद्रविरुदार्ह(हि)तः ॥ ८२ ॥
अभ्युत्थाय समभ्यर्च्य निविष्टं निज आसने ।
राजा व्यजिज्ञपत्किंचिदद्य विज्ञप्यते प्रभो ॥ ८३ ॥
प्राप्ता जैनर्षयस्तेषामर्पयध्वमुपाश्रयम् ।
इत्याकर्ण्य तपस्वींद्रः प्राह प्रहसिताननः ॥ ८४ ॥
गुणिनामर्चनां यूयं कुरुध्वं विधुतैनसाम् ।
सोऽस्माकमुपदेशानां फलपाकश्रियां निधिः ॥ ८५ ॥
शिव एव जिनो बाह्यत्यागात्परपदस्थितः ।
दर्शनेषु विभेदो हि चिह्नं मिथ्यामतेरिदम् ॥ ८६ ॥
निस्तुषव्रीहिहट्टानां मध्ये त्रिपुरुषाश्रिता ।
भूमिं पुरोधसा ग्राह्योपाश्रयाय यथारुचि ॥ ८७ ॥
विघ्नः स्वपरपक्षेभ्यो निषेध्यः सकलो मया ।
द्विजस्तच्च प्रतिश्रुत्य तदाश्रयमकारयत् ॥ ८८ ॥
ततः प्रभृति संजज्ञे वसतीनां परंपरा ।
महद्भिः स्थापितं वृद्धिमश्नुते नात्र संशयः ॥ ८९ ॥

श्रीबुद्धिसागरः सूरिश्चक्रे व्याकरणं नवम् ।
सहस्राष्टकमानं तत् श्रीबुद्धिसागराभिधम् ॥ ९० ॥
अन्यदा विहरंतश्च श्रीजिनेश्वरसूरयः ।
पुनर्धारापुरीं प्रापुः सपुण्यप्राप्यदर्शनाः ॥ ९१ ॥
श्रेष्ठीमहीधरस्तत्र पुरुपार्थत्रयोन्नतः ।
मुक्तैकां स्वघने संख्यां यः सर्वत्र विचक्षणः ॥ ९२ ॥
तस्याभयकुमाराख्यो धनदेव्यंगभूरभूत् ।
पुत्रः सहस्रजिह्वोपि यद्गुणोक्तौ नहि प्रभुः ॥ ९३ ॥
सपुत्रः सोऽन्यदा सूरिं प्रणंतुं सुकृती ययौ ।
संसारासारतां मूलश्रुतो धर्मश्चतुर्विधः ॥ ९४ ॥
अथाभयकुमारोऽसौ वैराग्येण तरंगितः ।
आपपृच्छे निजं तातं तपःश्रीसंगमोत्सुकः ॥ ९५ ॥
अनुमत्या ततस्तस्य गुरुभिः स च दीक्षितः ।
ग्रहणासेवनारूपशिक्षाद्वितयमग्रहीत् ॥ ९६ ॥
स चावगाढसिद्धांतःतत्प्रेक्षानुमानतः ।
बभौ महाक्रियानिष्ठः श्रीसंघं भोजभास्करः ॥ ९७ ॥
श्रीवर्द्धमानसूरीणामादेशात्सूरितां ददौ ।
श्रीजिनेश्वरसूरिश्च ततस्तस्य गुणोदधेः ॥ ९८ ॥
श्रीमानभयदेवाख्यः सूरिः पूरितविष्टपः ।
यशोभिर्विहरन्प्राप पत्यपद्रपुरं शनैः ॥ ९९ ॥
आयुःप्रान्ते च संन्यासमवलंब्य दिवः पुरीम् ।
अलंचक्रुर्वर्द्धमानसूरयो भूरयः क्रमात् ॥ १०० ॥
समये तत्र दुर्भिक्षोपद्रवैर्देशदौस्थ्यतः ।
सिद्धांतश्रुतिमायासीदुच्छिन्ना वृत्तयोऽस्य च ॥ १०१ ॥
ईषत्स्थितं च यत्सूत्रं प्रेक्षासुनिपुणैरपि ।
दुर्बोधदेश्यशब्दार्थं खिलं जज्ञे ततश्च तत् ॥ १०२ ॥
निशीथेऽत्र प्रभुं धर्मस्थानस्थं शासनामरी ।
नत्वा निस्तंद्रमाह स्माभयदेवं मुनीश्वरम् ॥ १०३ ॥
श्रीशीलांकः पुरा कोट्याचार्यनाम्ना प्रसिद्धभूः ।
वृत्तिमेकादशांग्याः स विदधे धूतकल्मषः ॥ १०४ ॥
अंगद्वयं विनान्येषां कालादुच्छेदमादधुः ।
वृत्तयस्तत्र संघानुग्रहायाद्य कुरूद्यमम् ॥ १०५ ॥
सूरिः प्राह ततो मातः कोऽहमल्पमतिर्जडः ।
श्रीसुधर्मकृतग्रंथदर्शनेऽप्यसमर्थधीः ॥ १०६ ॥

---

१. शाका. २. P. तलका.

अज्ञत्वात्क्वचिदुत्सूत्रे विवृते कल्मषार्जनम् ।
प्राच्यैरनंतसंसारभ्रमिभृद्दर्शितं महत् ॥ १०७ ॥
अनुल्लंघ्या च ते वाणी तदादिश करोमि किम् ।
इतिकर्तव्यतामूढो लभते किंचिदुत्तरम् ॥ १०८ ॥
देवी प्राह मनीषीश सिद्धांतार्थविचारणे ।
योग्यतां तव मन्ताहं कथयामि विचिंतया ॥ १०९ ॥
यत्र संदिह्यते चेतः प्रष्टव्योऽत्र मया सदा ।
श्रीमान् सीमंधरस्वामी तत्र गत्वा धृतिं कुरु ॥ ११० ॥
आरभस्व ततो ह्येतन्मात्र संशय्यतां त्वया ।
स्मृतमात्रा समायास्ये इहार्थे त्वत्पदोः शपे ॥ १११ ॥
श्रुत्वेत्यंगीचकाराथ कार्यं दुःकरमप्यदः ।
आचामाम्लानिचारभ्य ? ग्रंथसंपूर्णतावधिः ॥ ११२ ॥
अक्लेशेनैव संपूर्णा नवांग्या वृतयस्ततः ।
निरवाह्यत देव्या च प्रतिज्ञा या कृता पुरा ॥ ११३ ॥
महाश्रुतधरैः शोधितासु तासु चिरंतनैः ।
ऊरीचक्रे तदा श्राद्धैः पुस्तकानां च लेखनम् ॥ ११४ ॥
ततः शासनदेवी च विजने तान्व्यजिज्ञपत् ।
प्रभो मदीयद्रव्येण विधाप्या प्रथमा प्रति ॥ ११५ ॥
इत्युक्त्वा सा च समवसरणे परिहैमनीम् ।
उत्तरीयां निजज्योतिः क्षतदृष्टिरुचिं दधौ ॥ ११६ ॥
तिरोधत्त ततो देवी यतयो गोचरादथ ।
आगता ददृशुः सूर्यबिंबवत्तद्विभूषणम् ॥ ११७ ॥
चित्रीयितास्ततश्चित्ते पप्रच्छुस्ते प्रभून्मुदा ।
ते चाचख्युरुदंतं तं श्राद्धानाह्वाययंस्तथा ॥ ११८ ॥
आयातानां ततस्तेषां गुरवः प्रेक्षयंश्च तत् ।
अजानंतश्च तन्मूल्यं श्रावकाः पत्तनं ययुः ॥ ११९ ॥
अदर्शितैश्च सा तत्र स्थितरत्नपरीक्षिणम् ।
अज्ञास्तेऽपि च तन्मूल्ये मन्त्रं विदधुरीदृशम् ॥ १२० ॥
अत्र श्रीभीमभूपालपुरतो मुच्यतामियम् ।
तद्दत्तो निःक्रयो ग्राह्यो मूल्यं निर्णीयते ननु ॥ १२१ ॥
समुदायेन ते सर्वे पुरो राज्ञस्तदद्भुतम् ।
मुमुचुः किल शक्रेण प्रणयात्प्राभृतं कृतम् ॥ १२२ ॥
तदुदंते च विज्ञप्ते तुष्टः प्रोवाच भूपतिः ।
तपस्विना विना मूल्यं न गृह्णामि प्रतिग्रहम् ॥ १२३ ॥

ते प्रोचुः श्रीमुखेनास्य यमादिशति निःक्रयम् ।
स एवास्तु प्रमाणं नस्ततः श्रीभीमभूपतिः ॥ १२४ ॥
द्रम्मलक्षत्रयं कोशाध्यक्षाद्दापयति स्म सः ।
पुस्तकान्लेखयित्वा च सूरिभ्योददिरेऽथ तैः ॥ १२५ ॥
पत्तने ताम्रलिप्त्यां चाशापल्यां धवलक्कके ।
चतुराश्चतुरशीतिः श्रीमंतः श्रावकास्तथा ॥ १२६ ॥
पुस्तकान्यंगवृत्तीनां वासनाविशदाशयाः ।
प्रत्येकं लेखयित्वा ते सूरीणां प्रददुर्मुदा ॥ १२७ ॥ युग्मम् ॥
प्रावर्त्तंत नवांगानामेवं तत्कृतवृत्तयः ।
श्रीसुधर्मोपदिष्टेष्टतत्त्वतालककुंचिकाः ॥ १२८ ॥
पुरं धवलकं प्रापुरथ संयमयात्रया ।
स्थानेष्वप्रतिबंधो हि सिद्धांतोपायास्तिलक्षणम् ॥ १२९ ॥
आचामाम्लतपःकष्टान्निशायामतिजागरात् ।
अत्यायासात्प्रभोर्जज्ञे रक्तदोषो दुरायतिः ॥ १३० ॥
अमर्षणजनास्तत्र प्रोचुरुच्छन्नदेशनात् ।
वृत्तिकारस्य कुष्ठोऽभूत्कुपितैः शासनामरैः ॥ १३१ ॥
निशम्येति शुचाक्रान्तः स्वांतःप्रेयाभिलाषुकः ।
निशि प्रणिदधे पन्नगेंद्रं श्रीधरणाभिधम् ॥ १३२ ॥
लेलिहानेश्वरं लेलिहानं देहमनेहसा ।
अचिरेणैक्षत श्रीमान् स्वप्ने सत्वकषोपलः ॥ १३३ ॥
कालरूपेण कालेन व्यालेनालीढविग्रहः ।
क्षीणायुरिति संन्यास एव मे सांप्रतं ततः ॥ १३४ ॥
इति ध्यायन् द्वितीयेह्नि निशि स्वप्ने स औच्यत ।
धरणेंद्रेण रोगोऽयं मया लिह्य हतस्ततः ॥ १३५ ॥ युग्मम् ।
निशम्येति गुरुः प्राह नार्त्तिर्मेमृत्युभीतितः ।
रोगाद्वा पिशुना यंतु कद्वदा तद्धिदुःसहम् ॥ १३६ ॥
नागः प्राहाधृतिर्नात्र कार्या जैनप्रभावनाम् ।
एकामद्य विधेहि त्वं हित्वा दैन्यं जिनोद्धृतेः ॥ १३७ ॥
श्रीकान्तीनगरीसक्तधनेशः श्रावकेण यत् ।
वारिधेरंतरा यानपात्रेण व्रजता सता ॥ १३८ ॥
तदधिष्ठायिकसुरस्तंभिते वहने ततः ।
अर्चितव्यंतरस्योपदेशेन व्यवहारिणौ ॥ १३९ ॥
तस्या भुवः समाकृष्टा प्रतिमानां त्रयीशितुः ।
तेषामेकाचचारूपग्रामे तीर्थे प्रतिष्ठितम् ॥ १४० ॥

अन्या श्रीपत्तने चिंतातरोर्मूले निवेशिता ।
अरिष्टनेमिप्रतिमा प्रासादांतःप्रतिष्ठिता ॥ १४१ ॥
तृतीया स्तंभनग्रामे सेटिका तटिनीतटे ।
तरुजालांतरे भूमिमध्ये विनिहितास्ति च ॥ १४२ ॥
तां श्रीमत्पार्श्वनाथस्य प्रतिमां प्रतिमामिह ।
प्रकटीकुरु तत्रैतन्महातीर्थं भविष्यति ॥ १४३ ॥ षड्भिः कु०॥
पुरा नागार्जुनो विद्यारससिद्धौ धियां निधिः ।
रसमस्तंभयद्भूम्यंतःस्थबिंबप्रभावतः ॥ १४४ ॥
ततस्तंभनकाभिख्यस्तेन ग्रामो निवेशितः ।
तद्देषा तेपि कीर्तिः स्याच्छाश्वती पुण्यभूषणा ॥ १४५ ॥
युग्मम् ॥
अदृष्टान्यैः सूरिवृद्धारूपांते मार्गदर्शिका ।
श्वेतस्वरूपतस्तत्र क्षेत्रपालो यथाग्रतः ॥ १४६ ॥
उक्त्वेत्यंतर्हिते तत्र सूरयः प्रमदोद्धुराः ।
व्याकुर्वन्ति स्म संघस्य निशावृत्तं तदद्भुतम् ॥ १४७ ॥
ततश्च संमदोत्सालैः प्रक्रान्ता धार्मिकैस्तदा ।
यात्रानवशती तत्र शकटानां चचाल च ॥ १४८ ॥
अग्रे भूत्वा प्रभुर्वृद्धा कौलेयकपदानुगः ।
श्रावकाऽनुमतोऽचालीत्तृणकंटकिना यथा ॥ १४९ ॥
ज्ञातैस्तत्र ययुः सेटीतीरे तत्र तिरोहितौ ।
वृद्धाश्वौ तौ ततस्तस्थुस्तत्राभिज्ञानतोऽमुतः ॥ १५० ॥
पप्रच्छुरग्रे गोपालान्पूज्यं किमपि वो किमु ।
जल्पा ! मत्रास्ति तेष्वेकः प्रोवाच श्रूयतां प्रभो ॥ १५१ ॥
ग्रामे महीणलाख्यस्य मुख्यपट्टकिलस्य गौः ।
कृष्णागत्य क्षरेत्क्षीरमत्र सर्वैरपि स्तनैः ॥ १५२ ॥
गृहे रिक्तैव सा गच्छेद्दुह्यमानाऽतिकष्टतः ।
मनाग्मुंचति दुग्धं न ज्ञायतेऽत्र न कारणम् ॥ १५३ ॥
तत्र तैर्दर्शितं क्षीरमुपविश्यास्य संनिधौ ।
श्रीमत्पार्श्वप्रभोः स्तोत्रं प्रोचे प्राकृतवस्तुकैः ॥ १५४ ॥
जयतिहुयणेत्यादिवृत्तं द्वात्रिंशतं तदा ।
अवदन् स्तवनं तत्र नासाग्रन्यस्तदृष्टयः ॥ १५५ ॥
बभूव प्रकटं श्रीमत्पार्श्वनाथप्रभोस्ततः ।
शनैरुन्निद्रतेजस्विबिंबं तत्प्रतिवस्तुकम् ॥ १५६ ॥
प्रणतं सूरिभिः संघसहितैरेतदंजसा ।
गतो रोगः समग्रोऽपि कायोऽभूत्कनकप्रभः ॥ १५७ ॥

१ P. बिंबा० २ P. महाण.

गंधांभोभिः स संस्नाप्य कर्पूरादिविलेपनैः ।
विलिप्य चार्चितः सौमनसैः सौमनसैस्तदा ॥ १५८ ॥
चक्रे तस्योपरिच्छाया सच्छायाप्रतिसीरया ।
सत्रादवारितात्तत्र संघो ग्राम्यानभोजयत् ॥ १५९ ॥
प्रासादार्थं ततश्चक्रुः श्राद्धाद्रव्यस्य मीलनम् ।
अक्लेशेनामिलल्लक्षं ग्राम्यैरनुमता च भूः ॥ १६० ॥
श्रीमल्लवादिशिष्यस्य श्राद्धैराम्रेश्वराभिधः ।
मह्विषाख्यः पुरावासः समाह्वायि धियां निधिः ॥ १६१ ॥
अनुयुक्तः समं मान्यकर्म्मांतरविचक्षणः ।
अथ प्रासाद आरोढुं सोऽचिरात्पर्यपूर्यत ॥ १६२ ॥
कर्माध्यक्षस्य वृत्तौ यद्रम्म एकोदिनं प्रति ।
विहितो घृतकर्षश्च भुक्तो तंडुलमानकम् ॥ १६३ ॥
विहृत्य भोजनात्तेन तेन द्रव्येण कारिता ।
स्वादेवकुलिका चैत्ये सा तत्राद्यापि दृश्यते ॥ १६४ ॥
शुभे मुहूर्ते बिंबं च पूज्यास्तत्र न्यवेशयन् ।
तद्रात्रौ चरणाधीशस्तेषामेतदुपादिशत् ॥ १६५ ॥
स्तवनादमुतो गोप्यं मद्वाचा वस्तुकद्वयम् ।
क्रियतां हि विपुण्यानां प्रत्यक्षीभूयते मया ॥ १६६ ॥
तदादेशादतोऽद्यापि त्रिंशद्वृत्तमिता स्तुतिः ।
सपुण्यैः पठ्यमानात्र क्षुद्रोपद्रवनाशनी ॥ १६७ ॥
ततःप्रभृत्यदस्तीर्थं मनोवांछितपूरणम् ।
प्रवृत्तं रोगशोकादिदुःखदावघनाघनः ॥ १६८ ॥
अद्यापकलशो जन्मकल्याणकमहामहे ।
आद्यो धवलकश्राद्धः सच स्नपयति प्रभुम् ॥ १६९ ॥
बिंबासनस्य पाश्चात्यभागेऽक्षरपरंपरा ।
ऐतिह्यान् श्रूयते पूर्वप्रकथिता जने ? ॥ १७० ॥
नमेस्तीर्थकृतस्तीर्थे वर्षे द्विकचतुष्टये ।
आषाढश्रावको गौडोऽकारयत्प्रतिमात्रयम् ॥ १७१ ॥
श्रीमान् जिनेश्वरः सूरिस्तथा श्रीबुद्धिसागरः ।
चिरमायुः प्रपाल्यैतौ संन्यासाद्दिवमीयतुः ॥ १७२ ॥
श्रीमानभयदेवोपि शासनस्य प्रभावना ।
पत्तने श्रीकर्णराज्ये परणोपास्तिशोभितः ॥ १७३ ॥
विधाय योगिनीरोधधिकृतापरवासनः ।
परं लोकमलंचक्रे धर्म्मध्यानैकधीनिधिः ॥ १७४ ॥ युग्मम् ।

वृत्तांतोऽभयदेवसूरिसुगुरोरीदृक् सतामर्चितः
कल्याणैकनिकेतनं कलिकलाशैलाद्रिवज्रप्रभः ।
भूयाद्दुर्धरदुर्घटोदिततमःप्रध्वंससूर्योदयः
श्रेयः श्रीनिलयो लयं दिशतु वो ब्रह्मण्यनंतोदये ॥ १७५ ॥
श्रीचंद्रप्रभसूरिपट्टसरसीहंसप्रभः श्रीप्रभा-
चंद्रः सूरिरनेन चेतसि कृते श्रीरामलक्ष्मीभुवा ।
श्रीपूर्वर्षिचरित्ररोहणगिरौ प्रद्युम्नसूरीक्षितो
वृत्तांतोऽभयदेवसूरिसुगुरोः शृंगोग्रहेंदुप्रभः ॥ १७६ ॥
वरकरणबंधुजीवकनृतिलकनालीकरूपविजयस्व ।
श्रीप्रद्युम्नसुजाते सुमनश्चित्रं नवकुलश्रीः ॥ १७७ ॥

ग्रंथ १८२ अ० उभयं ४४५६ ।

इतिश्री अभयदेवप्रबन्धः

---

अथ श्रीवीरप्रबंधः ।

वीराचार्यः श्रिये सोस्तु संतः क्रोधाद्यरिक्षयम् ।
यदभ्यासे कृताभ्यासाः कर्तुमिच्छंति सांप्रतम् ॥ १ ॥
यत्करस्पर्शमात्रेण कन्यादिष्वपि संक्रमम् ।
विधाय भारती वक्ति कथं वीरः स वर्ण्यते ॥ २ ॥
बहुश्रुतमुखाच्छ्रुत्वा तद्वृत्तं कियदप्यहम् ।
वर्णयिष्यामि बालः किं न वक्ति स्वानुमानतः ॥ ३ ॥
श्रीमच्चंद्रमहागच्छसागरे रत्नशैलवत् ।
अवांतराख्यया गच्छः षंडिल्ल इति विश्रुतः ॥ ४ ॥
श्रीभावदेव इत्यासीत् सूरिरत्नं च रत्नवत् ।
पात्रेस्नेहादिहीनोऽपि सदा लोकहिते रतः ॥ ५ ॥
श्रीमद्विजयसिंहाख्याः सूरयस्तत्पदेऽभवन् ।
प्रतिवादिद्विपघटाकटापाटनलंपटाः ॥ ६ ॥
तत्पट्टमानससरोहंसाः श्रीवीरसूरयः ।
बभूवुर्गतिशब्दाभ्यामनन्यसदृशश्रियः ॥ ७ ॥
राजा श्रीसिद्धराजस्तान्मित्रत्वे स्थापयन् गुणैः ।
स्वभावविशदे ह्येष ददाति कुमुदे मुदम् ॥ ८ ॥
अथ मित्रं समासीनो नृपतिर्नर्मणावदत् ।
श्रीवीराचार्यमुख्येदं तेजो वः क्षितिपाश्रयात् ॥ ९ ॥
अथाहुः सूरयः स्वीयप्रज्ञा भाग्यैर्विजृंभते ।
प्रतिष्ठा नान्यतःश्वा किं सिंहोजस्वी नृपादृतः ॥ १० ॥

राजाह मत्सभां मुक्त्वा भवतोऽपि विदेशगाः।
अनाथा इव भिक्षाका बाह्यभिक्षाभुजो ननु॥ ११॥
सूरिराह भवत्प्रेमसंदानमिव नोऽभवत्।
दिनानीयंति गच्छाम आपृष्टः सांप्रतं भवान्॥ १२॥
भूपः प्राह न दास्यामि गन्तुं निजपुराय वः।
सूरिराह निपिध्यामो यांतः केन वयं ननु॥ १३॥
इत्युक्त्वा स्वाश्रयं प्रायात् सूरिर्भूरिकलानिधिः।
रुरोध नगरद्वारः सर्वत्र नृपतेर्नरैः॥ १४॥
इतश्च गुरवः साध्यं धर्मकृत्यं विधाय ते।
विधिवद्विदधुर्ध्यानं श्रीपद्मपद्मिकासनाः॥ १५॥
अध्यात्मयोगतः प्राणनिरोधाद्गगनाध्वना।
विद्याबलाच्च ते प्रापुः पुरीं पल्लीतिसंज्ञया॥ १६॥
प्रातर्विलोकिते तत्रादृष्टे राजाह्यचिंतयत्।
किं मित्रं गत एवायं सदा शिथिलमोहधीः॥ १७॥
ईदृक् पुनः कथं प्राप्योनेकसिद्धिकुलावनिः।
सिद्धिस्नेहे वयं मंदपुण्याः पिण्याकसंनिभाः॥ १८॥
इतश्च ब्राह्मणैः पल्लीवासैः श्रीपत्तने पुरे।
विज्ञाप्यततरां श्रीमज्जयसिंहनरेशितुः॥ १९॥
तिथिनक्षत्रवारावासरव्यक्तियुते दिने।
श्रीवीरसूरिरायातः संगतो इति न स्फुटम्॥ २०॥
श्रुत्वेति विममर्शाथ भूपालः केलिरीदृशी।
विकृता यत्स एवैष प्रमोहापोहवासरः॥ २१॥
ययावाकाशमार्गेण तद्रात्रावेव स ध्रुवम्।
नर्मलीलाद्धितीयेह्नि तद्विजानां स संगतः॥ २२॥ युग्मम्।
उक्तं वा रसपूर्णोऽथ प्रधानान् प्राहिणोन्नृपः।
आह्वानाय महाभक्ता ययुस्ते तत्र मंक्षु च॥ २३॥
नृपस्यानुनयः सांद्रीकृत्य तैश्च प्रकाशितः।
औदासीन्यस्थितास्ते च प्रोचुः प्रचुरसंयमाः॥ २४॥
कारणं सहकार्यत्र राज्ञ उच्चावचं वचः।
तस्माद्विहृत्य देशेषु पश्येष्यामो भवत्पुरे॥ २५॥
दुर्लभं मानुषं जन्म व्रतं विद्या बलं श्रुतम्।
मुधा नराधिपस्नेहमोहे को नाम हारयेत्॥ २६॥
इत्याकर्ण्य च ते प्रोचुरेकं शृणुत भूपते।
वचः सिद्धत्वमस्माकं त्वत्संगात्तथ्यतास्पदम्॥ २७॥

भविष्यति पुनः कालमियंतं पितृनाम तत् ।
सिद्धे भवति पार्श्वस्थे वयं सिद्धाहि नान्यथा ॥ २८ ॥
श्रुत्वेति बहुमानाद्रेरिव तैराददे वचः ।
आयास्यते पुरे तत्र मा चिंतात्र विधीयताम् ॥ २९ ॥
महाबोधपुरे बौद्धान् वादे जित्वा बहून् तथा ।
गोपालगिरिमागच्छन् राज्ञा तत्रापि पूजिताः ॥ ३० ॥
परप्रवादिनस्तैश्च जितास्तेषां च भूपतिः ।
छत्रचामरयुग्मादिराजचिह्नान्यदान्मुदा ॥ ३१ ॥
व्यावृत्याध्वनिजां भूमिमायांतस्तेऽवतस्थिरे ।
पुरे नागपुरे तत्राप्यकार्षुश्च प्रभावनाम् ॥ ३२ ॥
ज्ञात्वाथ सिद्धराजेनाहूता भक्तिभृताथ ते ।
प्रैषुः परिच्छदं गोप गिरिराजसमर्पितम् ॥ ३३ ॥
विजह्रुः सूरयस्तस्माच्छनैः संयममात्रया ।
अणहिल्लपुरासन्नं चारूपग्राममागमत् ॥ ३४ ॥
अभ्युद्ययावथ श्रीमज्जयसिंहनरेश्वरः ।
प्रवेशोत्सवमाधत्तादृष्टपूर्वं सुरैरपि ॥ ३५ ॥
अथात्र वादिसिंहाख्यः सांख्यवादी समागमत् ।
परं प्रदत्तवानीदृक् लिखनश्लोकदुर्घटम् ॥ ३६ ॥
तथाहि-उद्धृत्य बाहुं किल राटीति यस्यास्ति शक्तिः सच वावदीतु ।
मयि स्थिते वादिनि वादिसिंहे नैवाक्षरं वेत्ति महेश्वरोऽपि ३७
श्रीमत्कर्णमहाराजबालमित्रं यतीश्वरः ।
गोविंदाचार्य इत्यस्ति वीराचार्यकलागुरुः ॥ ३८ ॥
रात्रौ रहः समागत्य छन्नवेषः क्षमाधिपः ।
प्राह तं किमयं भिक्षुरपि पूज्यैः प्रतीक्ष्यते ॥ ३९ ॥
तैः प्रोचे भवतामेव वाग्विलोक्यात्र भूयते ।
प्रभाते विवदिष्यंतं वीराचार्यो विजेष्यते ॥ ४० ॥
प्रीतो राज्ञा प्रभाते तमाह्वास्त नृपपर्षदि ।
स निःस्पृहवत्दंभेन शांतोऽवददिदं तदा ॥ ४१ ॥
वयं किमागमिष्यामो निःसंगो यदि भूपतिः ।
अस्मद्वाक्कौतुकी भूम्यासनोत्रायातु सोऽपि तत् ॥ ४२ ॥
प्रातः कुतूहली राजोररीकृत्य तदप्यथ ।
तदावासे समागच्छदुर्व्यामुर्व्यामुपाविशत् ॥ ४३ ॥
समाह्वयत गोविंदसूरिं सूरिसभासदम् ।
सोऽपरान् साकृतीनीपच्छिद्रुपोऽपि पुरोदधे ॥ ४४ ॥

वीराचार्यं महाप्रज्ञाप्रज्ञातानेकशास्त्रकम् ।
उद्यत्कवित्ववित्कृत्वावधिं पश्चाच्चकार च ॥ ४५ ॥
समाययौ ततस्तत्रोपविष्टः कंबलासने ।
राजाह को वदेदेषाममुना वादिना सह ॥ ४६ ॥
श्रीगोविंदप्रभुः स्माहानौचित्यक्षरसंगिना ।
अनेन शास्त्रपाथोधितरंडोपमधीजुषः (षा) ॥ ४७ ॥
अज्ञेन सह लज्जांतेवदंतस्तव् शिशुः कृती ।
वीरो वदिष्यति प्राज्ञः श्रुत्वा वादी स चावदत् ॥ ४८ ॥
दुग्धगंधमुखो मुग्धः किं वक्ष्यति मया सह ।
असमानो विग्रहोयं नास्माकं भासते शुभः ॥ ४९ ॥
राज्ञोचे क्षीरकंठास्यादर्थपीयूषगंधितः ।
अस्मात्त्वन्मदधत्तूरविभ्रमः स हरिष्यति ॥ ५० ॥
श्रुत्वेति स उपन्यासमवज्ञावशतोदधेः ।
अर्धकर्पूरहस्तस्थमस्तकस्तर्कसंभवम् ॥ ५१ ॥
विरते तत्र चाजल्पत् श्रीवीरो विदुषां प्रभुः ।
वदामि गद्यात्पद्याद्वा यच्चित्ते तव भासते ॥ ५२ ॥
स्वेच्छं तद्बुद्धिशच्छंदोऽलंकारं च ममाग्रतः ।
सर्वानुवादमर्थात्तु वादं वा सत्वरं भवान् ॥ ५३ ॥
श्रुत्वेति स पुनः प्राह गुर्जराडंबरः पुरः ।
गमनं क्रियते बालः किं ज्ञास्यति भवानिह ॥ ५४ ॥
अथ शक्तिस्तवास्ते चेत्पद्येन छंदसा पुनः ।
वद मत्तमयूरेणालंकारान्निह्नवात्तथा ॥ ५५ ॥
सर्वानुवादमाश्रित्य स निशम्येति तं जगौ ।
उत्तिष्ठासनसंस्थोस्थाः सावधानस्ततः शृणु ॥ ५६ ॥
वयं नहि गिरां देव्या अवहेलां विदध्महे ।
अर्द्धसुप्तपुरोवादादाकर्ण्येति सचोत्थितः ॥ ५७ ॥
वाचि वीरं ततोवीरं यथा प्रागुक्तसंभ्रवात् ।
उपन्यस्यंतमाकर्ण्यास्विद्यतोज्झितगीर्बलः ॥ ५८ ॥
श्रीवीरे विरते जल्पादर्थतस्तस्य कुर्वतः ।
अनुवादं जगादासौ जल्पसर्वानुवादतः ॥ ५९ ॥
न शक्नोमीति स प्राह वादिसिंहस्ततो नृपः ।
स्वयं बाहौ विधृत्यामुं पातयामास भूतले ॥ ६० ॥
वक्तुं न शक्तश्चेत्तुच्चैरासने कथमासिवान् ।
तथा च कविराजः श्री श्रीपालो वाक्यमब्रवीत् ॥ ६१ ॥

गुणैरुत्तुंगतां याति नोच्चैरासनसंस्थितः।
प्रासादशिखरस्थोऽपि काकः किं गरुडायते॥ ६२॥
ततो विडंब्यमानं तं दृष्ट्वा श्रीवीर ऊचिवान्।
श्रूयते भूप मे वाणी प्राणी दर्पेण जीयते॥ ६३॥
यदनेन नराधीशः शुद्धन्यायैकनिष्ठधीः।
सभामध्यमवज्ञातो वर्णाश्रमगुरुर्भवान्॥ ६४॥
स्वस्यांबुजस्थिरावासप्रदानात्प्रीणिता दृढम्।
त्वद्बुद्ध्या कोपभूरत्र देव्यदाद्वाचि मंहताम्॥ ६५॥ युग्मम्।
वाचां रणे तु चास्माकं प्राग्रूढसमयो ह्ययम्।
वादी निगृह्यमाणोहि संरक्ष्यः प्रतिवादिना॥ ६६॥
ततो विमुच्यतां श्रीमन्मदांधोऽयं कृपास्पदम्।
निशम्येति नृपेणासौ मुक्तो दृष्ट्वा ततो बहिः॥ ६७॥
जयपत्रार्पणादस्याददे तेजः परं तदा।
द्रव्यं तु निस्पृहत्वेन स्पृशत्यपि पुनर्न सः॥ ६८॥
अन्यदा जययात्रायां वलितो गूर्जरे शिशुः।
चतुरङ्गचमू चक्रे रेणुच्छादितभानुभिः॥ ६९॥
श्रीवीराचार्यचैत्यस्य पुरतः सञ्चरिष्णुभिः।
नृपमीक्षितुमासे च कवीन्द्रे तत्र विश्रुते॥ ७०॥
क्रमात्तत्र च संप्राप्तः श्रीसिद्धाधीशभूपतिः।
तं समीक्ष्य कविः कश्चित्समस्यापदमभ्यधात्॥ ७१॥
तदुद्दिश्य कवौ वीराचार्ये दृष्टिं व्यधान्नृपः।
अनायासात्ततोऽपूरि कृतिना तेन सत्वरम्॥ ७२॥

तथाहि—कालिन्दि ब्रूहि कुम्भोद्भवजलधिरहं नाम गृह्णासि कस्मा-
च्छत्रोर्मे नर्मदाहं त्वमपि मम सपत्न्याश्च गृह्णासि नाम।
मालिन्यं तर्हि कस्मादविरलविगलत्कज्जलैर्मालवीनां
बाष्पाम्भोभिः किमासां समजनि वलितो गुर्जराणामधीशः॥ ७३॥

श्रुत्वेति भूप आचख्यौ तव सिद्धगिरानया।
मालवेशं गृहीष्यामि संशयो नात्र मे हृदि॥ ७४॥
त्वया वलानकस्थेनादिष्टो मे शत्रुनिग्रहः।
विजयस्य पताकेयं ततस्तत्रास्तु सा दृढम्॥ ७५॥
श्रीभावाचार्य्यचैत्यस्य पताकाभूद्वलानके।
महता विहितं यस्माच्चिरेणापि न नश्यति॥ ७६॥
वादीकमलकीर्त्याख्य आशां चरयतीश्वरः।
वादमुद्राभृदभ्यागादवज्ञातान्यकोविदः॥ ७७॥

आस्थानं सिद्धराजस्य जिह्वाकण्डूययार्दितः ।
वीराचार्यं स आह्वास्त ब्रह्मास्त्रं विदुषां रणे ॥ ७८ ॥
पञ्चवर्षीयबालां स सहादाय समागमत् ।
अवज्ञया वादिनं तं वीक्ष्य न्यविशदासने ॥ ७९ ॥
स चोपन्यस्तवान्सर्वसामर्थ्येन गुरुस्ततः ।
श्रीवीरो बालया सार्द्धमरंस्त कुतुकादिव ॥ ८० ॥
स तं दृष्ट्वाऽब्रवीद्वादी भूपते भवतः सभा ।
नोचिता विदुषां बालक्रीडाविप्लवसंभृता ॥ ८१ ॥
राजा हस्तप्रमाणेन क्रीडत्येष बुधेश्वरः ।
इत्युक्त्वा प्रेषितो वीरो नृपेण प्राह सस्मितः ॥ ८२
समानवयसोर्वादो विमृश्येति मया ततः ।
एषा बाला समानिन्ये वस्त्रावृतनिरादरा ॥ ८३ ॥
एष वाद्यपि नग्नत्वाद्दृश्यते डिम्भसन्निभः ।
उभयोरेतयोरस्तु वादो क्रीडात्वनेन तु ॥ ८४ ॥
स्त्रीनिर्वाणनिषेधेनानयैवास्य च विग्रहः ।
विधेयस्तदसौ वादमुद्रयामुं विजेष्यते ॥ ८५ ॥
अस्पृष्टहस्तौ तन्मौलौ प्रदायोच्चे यतीश्वरः ।
तां जल्पवादिनानेन स्थापय स्त्रीषु निर्वृतिम् ॥ ८६ ॥
ततः सा निपुणाधीतः प्रमाणविदुषामिव ।
वाग्भरैः स्थापयामास तेनाशक्यस्थिरोत्तरैः ॥ ८७ ॥
अनेडमूकतां प्राप्ते तत्र वित्रस्तमानसे ।
सस्फुर्जयजयारावाः सभ्यानां नृपतेरपि ॥ ८८ ॥
भूपालः प्राह को जेता मत्सभां तपति प्रभौ ।
श्रीवीरे वादिवीरेऽत्र सिद्धेऽनेकासु सिद्धिषु ॥ ८९ ॥
यदीयहस्तस्पर्शेन संक्रान्ता यत्र तत्र च ।
वाग्देवी भाषतेऽजस्रं स शक्यः केन वर्णितुम् ॥ ९० ॥
एवं युगप्रधानाभगुणव्यूता पटा इव ।
श्रीवीरसूरयः पान्तु भव्यजाड्यापहारिणः ॥ ९१ ॥
श्रीमत्कालकसूरीणामनिर्वाच्यं प्रभाद्भुतम् ।
अद्यापि यत्कुले वीराः प्राग्वीरा भावयन्त्यमी ॥ ९२ ॥
श्रीचन्द्रप्रभसूरिपट्टसरसीहंसप्रभः श्रीप्रभा-
चन्द्रः सूरिरनेन चेतसि कृते श्रीरामलक्ष्मीभुवा ।
श्रीपूर्वर्षिचरित्ररोहणगिरौ श्रीवीरवृत्ताद्भुतं
श्रीप्रद्युम्नमुनीन्दुना विशदितः शृङ्गः सविंशोऽभवत् ॥ ९३ ॥

ग्रं० ९६ अ० ११ उभयं ४५५२

इति श्रीवीरप्रबन्धः ।

श्रीदेवसूरिप्रबन्धः ।

श्रीदेवसूरिर्वः पातु य आक्रम्य दिगम्बरम् ।
कीर्तेरपि स्त्रियः सिद्धमूलविद्यामतिष्ठिपत् ॥ १ ॥
देवाचार्यः प्रियो भूपात्केवलज्ञानशालिनाम् ।
विमोच्याभोजनं येनाप्युच्छित्तिः शासने कृता ॥ २ ॥
जीवितानादिराजीवममध्यमहितोदयम् ।
अनंतविधुरद्रोहं वदनं तस्य संस्तुमः ॥ ३ ॥
भ्रांतिसंवर्तकभ्रांतिदुर्वृत्तरजसः शमे ।
अवारवारिवाहश्रीतद्वृत्तं परिकीर्त्यते ॥ ४ ॥
अस्ति गूर्जरदेशस्य नवनीतमिवोद्धृतम् ।
अष्टादशशतीनाम मंडलं स्वर्गखंडलम् ॥ ५ ॥
तत्र मद्दाहृतं नाम नगरं नगराजिभिः ।
ध्वांतस्येव महादुर्गमगम्यं सूर्यरोचिषाम् ॥ ६ ॥
सद्वृत्तो जीवनच्छायो राजमानः स्वतेजसा ।
प्राग्वाटवंशमुक्तासीद्वीरनागाभिधो गृही ॥ ७ ॥
तत्प्रिया सत्क्रियाधारा प्रियंकरगुणावनिः ।
जिनदेवीति देवीव मेना हिमवतो बभौ ॥ ८ ॥
अन्यदा सा निशि स्वप्ने पीयूषरुचिमैक्षत ।
प्रविशंतं मुखे पृथ्व्यामवतारेच्छया किल ॥ ९ ॥
अन्वये गुरवस्तस्य श्रीमुनिचंद्रसूरयः ।
संति शांतिकमंत्रेति येषां नामाक्षराण्यपि ॥ १० ॥
प्रातः सा तत्पुरे गत्वा नत्वा सत्वमहालया ।
अपृच्छन्मुदिताचार्यं स्वप्नस्यातिशयस्पृशः ॥ ११ ॥
देवचंद्रनिभः कोऽप्यवततार तवोदरे ।
आनंदयिष्यते विश्वं येन ते चेत्थमादिशन् ॥ १२ ॥
अथ सा समयेऽसूत सुतं वज्रोपमद्युतम् ।
यत्तेजसा कलिः शैलश्चकंपे भेदभीतितः ॥ १३ ॥
हृदयानंदने तत्र वर्धमाने च नंदने ।
चंद्रस्वप्नात्पूर्णचंद्र इत्याख्यां तत्पिता व्यधात् ॥ १४ ॥
कदाचिन्नगरे तत्राशिवं जज्ञे जनांतकृत् ।
सहसैव यतो लोकः प्रेक्षाप्रेक्ष्यत्वमादधौ ॥ १५ ॥
वीरनागो विचिंत्यैतद्दक्षिणां दिशमाश्रयत् ।
भृगुकच्छपुरे प्राप लाटदेशविभूषणम् ॥ १६ ॥
विहारं जंगमं तीर्थं श्रीमुनिचंद्रसूरयः ।
चक्रुस्तत्र तदादेशात्स्थापितोऽसौ सधर्मिभिः ॥ १७ ॥

वर्षाष्टकवयाः पूर्णचंद्र इत्यस्य नंदनः ।
चक्रे सुखासिकादीनां वाणिज्यं शैशवोचितम् ॥ १८ ॥
चिंतनौचित्यहर्म्येषु विकाशिचणकैः समाः ।
द्राक्षा अवापदूर्डिभत्वे(?)पिहि पुण्यानि जाग्रति ॥ १९ ॥
कस्मिंश्चित्सदनेऽन्येद्युर्गतो व्यंजनविक्रये ।
द्रम्मान् हेमं च गेहेशं पिंडैरुज्झन्तमैक्षत ॥ २० ॥
तव भाग्योद्धाटश्लक्ष्णकर्करांगाररूपतः ।
पश्यतिस्म ततः पूर्णचंद्रः प्राहातिविस्मितः ॥ २१ ॥
किमुज्झसि महाद्रव्यं नरसंजीवनौषधम् ।
इत्युक्ते स गृही दध्यौ चित्तेऽहो पुण्यवानसौ ॥ २२ ॥
वत्स द्रव्यमिदं वंशपात्रे क्षिप्त्वा ममार्पय ।
इत्युक्त्वा पूरयित्वासौ पात्राण्यस्यार्पयत्तदा ॥ २३ ॥
तत्करस्पर्शमाहात्म्यात्तद्रव्यं पश्यति स्म सः ।
अपुण्यपुण्ययोः साक्षादीदृशं दृश्यतेऽन्तरम् ॥ २४ ॥
सोंऽतर्गेहं क्षिपत्येवं सर्वं निहितमंतरा ।
एका सुखासिकाहेतोः प्रसूतिस्तेन चार्थिता ॥ २५ ॥
हृष्टश्च पितुराख्याय ददौ तद्द्रविणं मुदा ।
वीरनागः प्रभूणां च यथावृत्तमदोऽवदत् ॥ २६ ॥
व्यमृशंस्तेऽपि वातार्थीत्किमेष पुरुषोत्तमः ।
दर्शयंती स्वरूपाणि लक्ष्मीर्यस्याभिलाषुका ॥ २७ ॥
रंगत्कुमुदचंद्रांशुप्रसरोच्छादकोदयः ।
विरोचनो विनेयश्चेदेषानंतोन्नतिस्तदा ॥ २८ ॥
ततस्तेऽप्यवदन् वाचं शृणु नस्तव यद्धरम् ।
वस्तु संपद्यते कस्य भक्त्या तत्प्रतिपद्यते ॥ २९ ॥
स प्राह नाथ पूज्यानां कुले नो गुरुताभृताम् ।
अहं त्वेकसुतो जीर्णस्तदास्था मेऽत्र जीवितुम् ॥ ३० ॥
व्यवसाये क्षमः कीदृक्षे पिताहं जनन्यपि ।
अस्य नश्यत्तनुस्तेमानन्यसूस्तद्वदामि किम् ॥ ३१ ॥
अत्र चेत्पूज्यपादानामाग्रहस्तन्मया नहि ।
विचारणं हि कर्तव्यं गृह्यतामेष नंदनः ॥ ३२ ॥
प्रभुराहाथ मे पंचशती चारित्रिणां गणे ।
सर्वेऽपि ते सुताः संतु न वै कस्मादतः प्रति ॥ ३३ ॥
अमी सधर्मिका यावज्जीवं कर्शिपुदास्तव ।
धर्मे धेह्यास्व निश्चितः परलोकैकशंबलम् ॥ ३४ ॥

---

१ P व्यवाता. २ P प्रसराच्छा.

तदंबां च यथादेशकारिणीमनुमान्य च।
पूर्णचंद्रं दृढाभक्तिं प्रभवः समदीक्षयन् ॥ ३५ ॥
रामचंद्राभिधां तस्य ददुरानंदनाकृतेः।
दर्शनोल्लासिनः संघसिंधुवृद्धिविधायिनः ॥ ३६ ॥
दुर्नयत्वकलंकस्यापनोदादुपकारिणीम्।
यत्प्रज्ञा दुर्गशास्त्राणामपि वाग्गोचरः स किम् ॥ ३७ ॥
तर्कलक्षणसाहित्यविद्यापारगतः स च।
अभूत्स्वपरसिद्धांते वर्तमाने कषोपलः ॥ ३८ ॥
शिवाद्वैतं वदन् बंधः पुरे धवलके द्विजः।
काश्मीरसागरे जिग्ये वादान् सत्यपुरे पुरे ॥ ३९ ॥
तथा नागपुरे क्षुण्णो गुणचंद्रो दिगंबरः।
चित्रकूटे भगवतः शिवभूताख्यया पुनः ॥ ४० ॥
गंगाधरो गोपगिरौ धारायां धरिणीधरः।
पद्माकरो द्विजः पुष्करिण्यां वाग्मदोद्धुरः ॥ ४१ ॥
जितश्च भृगुक्षेत्रे कृष्णाख्यो ब्राह्मणाग्रणीः।
एवं वादजयोन्मुद्रो रामचंद्रः क्षितावभूत् ॥ ४२ ॥
विद्वान् विमलचंद्रोऽथ हरिचंद्रः प्रभानिधिः।
सोमचंद्रः पार्श्वचंद्रो विबुधः कुलभूषणः ॥ ४३ ॥
प्राज्ञः शांतिस्तथा शोकचंद्रश्चंद्रोल्लसद्यशाः।
अजायंत सखायोऽस्य मेरोरिव कुलाचलाः ॥ ४४ ॥
ततो योग्यं परिज्ञाय रामचंद्रं मनीषिणम्।
प्रत्यष्ठिपन् पदे दत्तदेवसूरिवराभिधम् ॥ ४५ ॥
पितुस्तस्य मतं वीरनागाख्यस्य स्वसुः पुनः।
पुरात्तव्रतमुद्राया अमुद्राया महाव्रतः ॥ ४६ ॥
महत्तरां प्रतिष्ठां च व्यधुर्विधुरितांहसः।
श्रीमच्चंदनबालेति नामास्याः प्रददुर्मुदा ॥ ४७ ॥ युग्मम्।
अन्यदा गुर्वनुज्ञाताः श्रीमंतो देवसूरयः।
विहारमादधुः पूज्याः पुरे धवलकाभिधे ॥ ४८ ॥
उदयो नाम तत्रास्ति विदितो धार्मिकाग्रणीः।
श्रीमत्सीमंधरस्वामिबिंबं स एष व्यधापयत् ॥ ४९ ॥
स प्रतिष्ठाविधौ तस्य निश्चिन्वन्सद्गुरुं ततः।
श्रीमच्छासनदेवीं चाराधोद्यदमुपोषितः ॥ ५० ॥
युगप्रधानकल्पेन श्रीमता देवसूरिणा।
प्रतिष्ठापय बिंबं स्वमित्युपादिशनाथ सा ॥ ५१ ॥

---

१ H यथाभक्ति. २ P वामन०.

तत्तदर्थनया बिंबप्रतिष्ठां विदधुस्तदा ।
ऊदावतीति[1] नाम्ना तच्चैत्यमद्यापि विद्यते ॥ ५२ ॥
अथ नागपुरेऽन्येद्युः प्रभवो विजिहीर्षवः ।
गिरींद्रमर्बुदं प्रापुरुक्ता आरुरुहुश्च तम् ॥ ५३ ॥
मंत्रिणोंऽबप्रसादस्य गिरिमारोहतः सह ।
गुरुभिः कर्मवैचित्र्याद्दंदशूकोऽदशत्पदे ॥ ५४ ॥
ज्ञात्वा ते प्रेषयंस्तस्य हेतुं पादोदकं तदा ।
धौतमात्रे तदा तेन दंशोऽसौ निर्विषोऽभवत् ॥ ५५ ॥
श्रीनाभेयं नमस्कृत्य संसारार्णवतारणम् ।
तुष्टुवुः श्रीमदंबां च प्रत्यक्षां शासनेश्वरीम् ॥ ५६ ॥
सावादीत्कथयिष्यामि किंचित्ते बहुमानतः ।
दूरे सपादलक्षे त्वमायासीन्मम वाक्यतः ॥ ५७ ॥
गुरुस्तवाष्टमासायुरस्मादेव दिनाद्यतः ।
व्यावर्त्तस्व ततो वेगादणहिल्लपुरं प्रति ॥ ५८ ॥
इत्याख्याय तिरोधात्त देवी दध्यौ ततः प्रभुः ।
मय्यंबाया इवांबाया वत्सलत्वमहो महत् ॥ ५९ ॥
व्यावृत्यायास्ततः पूज्यपुर आख्यत्सुरीवचः ।
आनंदमसमं प्रापुस्ते कालज्ञानतो निजात् ॥ ६० ॥
अन्यदा देवबोधाख्यः श्रीभागवतदर्शनी ।
भूरिवादजयोन्मुद्रः श्रीमत्पत्तनमाययौ ॥ ६१ ॥
अवलंबनपत्रं च राजद्वारे मदोद्धुरः ।
तत्र श्लोकं दुरालोकं विबुधैरलिखच्च सः ॥ ६२ ॥

तथाहि—

'एकद्वित्रिचतुःपंचषण्मेनकमनेनकाः ।
देवबोधे मयि क्रुद्धे षण्मेनकमनेन कः ॥ ६३ ॥
ततः सर्वेऽपि विद्वांस एनमालोक्य सूर्यवत् ।
दृशो विपरियंतिस्म दुर्बोधं सुधियामपि ॥ ६४ ॥
षण्मासांते तदा चांबा प्रसादो भूपतेः पुरः ।
देवसूरिप्रभुं विप्रराजं दर्शयति स्म च ॥ ६५ ॥
स भूपालपुरः श्लोकं बिभेदोद्भेदधीनिधिः ।
कुलत्थजलवद्वंडशैलं राज्ञा मतः सुहृत् ॥ ६६ ॥
अथास्य श्लोकस्य विवरणं—

कै गै रै शब्दे । कायतीति कश्चित् उग्ररूपे पानव्देन वादिन. । ते पट्वः संतीति क्रियाध्याहारे पठ्वादिनो न संति । कः सति देवबोधे मयि क्रुद्धे सति । पुनः

1 H· उदायसही.

तदेवां च यथादेशकारिणीमनुमान्य च।
पूर्णचंद्रं इढाभक्तिं प्रभवः समदीक्षयन् ॥ ३५ ॥
रामचंद्राभिधां तस्य दृढुरानंदनाकृतेः।
दर्शनोल्लासिनः संघसिंधुवृद्धिविधायिनः ॥ ३६ ॥
दुर्नयत्वकलंकस्यापनोदादुपकारिणीम्।
यत्प्रजा दुर्गशास्त्राणामपि वाग्गोचरः स किम् ॥ ३७ ॥
तर्कलक्षणसाहित्यविद्यापारगतः स च।
अभूत्स्वपरसिद्धांते वर्तमाने कषोपलः ॥ ३८ ॥
शिवाद्वैतं वदन् बंधः पुरे धवलके द्विजः।
काश्मीरसागरे जिग्ये वाद्वान् सत्यपुरे पुरे ॥ ३९ ॥
तथा नागपुरे क्षुण्णो गुणचंद्रो दिगंबरः।
चित्रकूटे भगवतः शिवभूताख्यया पुनः ॥ ४० ॥
गंगाधरो गोपगिरौ धारायां धरिणीधरः।
पद्माकरो द्विजः पुष्करिण्यां ²वाग्मदोद्धुरः ॥ ४१ ॥
जितश्च भृगुक्षेत्रे कृष्णाख्यो ब्राह्मणाग्रणीः।
एवं वादजयोन्मुद्रो रामचंद्रः क्षितावभूत् ॥ ४२ ॥
विद्वान् विमलचंद्रोऽथ हरिचंद्रः प्रभानिधिः।
सोमचंद्रः पार्श्वचंद्रो विबुधः कुलभूषणः ॥ ४३ ॥
प्राज्ञः शांतिस्तथा शोकचंद्रश्चंद्रोल्लसद्यशाः।
अजायंत सखायोऽस्य मेरोरिव कुलाचलाः ॥ ४४ ॥
ततो योग्यं परिज्ञाय रामचंद्रं मनीषिणम्।
प्रत्यष्ठिपन् पदे दत्तदेवसूरिवराभिधम् ॥ ४५ ॥
पितुस्तस्य व्रतं वीरनागाख्यस्य स्वसुः पुनः।
पुरात्तव्रतमुद्राया अमुद्राया महाव्रतैः ॥ ४६ ॥
महत्तरां प्रतिष्ठां च व्यधुर्विधुरितांहसः।
श्रीमच्चंदनबालेति नामास्याः प्रददुर्मुदा ॥ ४७ ॥ युग्मम्।
अन्यदा गुर्वनुज्ञाताः श्रीमंतो देवसूरयः।
विहारमादधुः पूज्याः पुरे धवलकाभिधे ॥ ४८ ॥
उदयो नाम तत्रास्ति विदितो धार्मिकाग्रणीः।
श्रीमत्सीमंधरस्वामिबिंबं सैष व्यधापयत् ॥ ४९ ॥
स प्रतिष्ठाविधौ तस्य निश्चिन्वन्सद्गुरुं ततः।
श्रीमच्छासनदेवीं चाराध्नोऽत्र्यहमुपोषितः ॥ ५० ॥
युगप्रधानकल्पेन श्रीमता देवसूरिणा।
प्रतिष्ठाप्य बिंबं स्वमित्युपादिशताथ सा ॥ ५१ ॥

१ H यथाभक्तिं. २ P वामम०.

तत्तदर्थनया बिंबप्रतिष्ठां विदधुस्तदा ।
ऊदावतीति नाम्ना तच्चैत्यमद्यापि विद्यते ॥ ५२ ॥
अथ नागपुरेऽन्येद्युः प्रभवो विजिहीर्षवः ।
गिरींद्रमर्बुदं प्रापुरुक्ता आरुरुहुश्च तम् ॥ ५३ ॥
मंत्रिणोऽबप्रसादस्य गिरिमारोहतः सह ।
गुरुभिः कर्मवैचित्र्याद्दंदशूकोऽदशत्पदे ॥ ५४ ॥
ज्ञात्वा ते प्रेषयंस्तस्य हेतुं पादोदकं तदा ।
धौतमात्रे तदा तेन दंशोऽसौ निर्विषोऽभवत् ॥ ५५ ॥
श्रीनाभेयं नमस्कृत्य संसारार्णवतारणम् ।
तुष्टुवुः श्रीमदंबां च प्रत्यक्षां शासनेश्वरीम् ॥ ५६ ॥
सावादीत्कथयिष्यामि किंचित्ते बहुमानतः ।
दूरे सपादलक्षे त्वमायासीन्मम वाक्यतः ॥ ५७ ॥
गुरुस्तवाष्टमासायुरस्मादेव दिनाद्यतः ।
व्यावर्त्तस्व ततो वेगादणहिल्लपुरं प्रति ॥ ५८ ॥
इत्याख्याय तिरोधाच्च देवी दध्यौ ततः प्रभुः ।
मय्यंबाया इवांबाया वत्सलत्वमहो महत् ॥ ५९ ॥
व्यावृत्यायात्ततः पूज्यपुर आख्यत्सुरीवचः ।
आनंदमसमं प्रापुस्ते कालज्ञानतो निजात् ॥ ६० ॥
अन्यदा देवबोधाख्यः श्रीभागवतदर्शनी ।
भूरिवादजयोन्मुद्रः श्रीमत्पत्तनमाययौ ॥ ६१ ॥
अवलंबनपत्रं च राजद्वारे मदोद्धुरः ।
तत्र श्लोकं दुरालोकं विबुधैरलिखच्च सः ॥ ६२ ॥

तथाहि—

"एकद्वित्रिचतुःपंचषण्मेनकमनेनकाः ।
देवबोधे मयि क्रुद्धे षण्मेनकमनेन कः ॥ ६३ ॥
ततः सर्वेऽपि विद्वांस एनमालोक्य सूर्यवत् ।
दृशो विपर्ययंतिस्म दुर्बोधं सुधियामपि ॥ ६४ ॥
षण्मासांते तदा चांबा प्रसादो भूपतेः पुरः ।
देवसूरिप्रभुं विज्ञराजं दर्शयति स्म च ॥ ६५ ॥
स भूपालपुरः श्लोकं विभेदोद्भेदधीनिधिः ।
कुलत्थजलवद्दंडशैलं राज्ञा मतः सुहृत् ॥ ६६ ॥
अथास्य श्लोकस्य विवरणं—

कै गै रै शब्दे । कायतीति कश्चित् डप्रलये काशब्देन वादिन. । ते पट्टाः संतीति क्रियाध्याहारे पड्डादिनो न संति । क सति देवबोधे मयि क्रुद्धे सति । पुनः

---

१ H. उदावसही.

कथंभूते। एकद्वित्रिचतुःपंचषण्मेनकमने मांक्माने मांतं मा क्विप् प्रमाणं एकं प्रमाणं प्रत्यक्षरूपं येषां ते एकमाः चार्वाकाः एकप्रमाणवादिनः। तथा द्विमाः द्वे प्रमाणे प्रत्यक्षानुमानरूपे येषां ते द्विमाः द्विप्रमाणवादिनो बौद्धाः वैशेषिकाश्च । तथा त्रिमाः त्रीणि प्रमाणानि प्रत्यक्षानुमानागमरूपाणि येषां ते त्रिमाः त्रिप्रमाणवादिनः सांख्याः। चत्वारि प्रत्यक्षानुमानागमोपमानरूपाणि प्रमाणानि येषां ते चतुर्माः चतुःप्रमाणवादिनो नैयायिकाः। तथा पंचमाः पंचप्रत्यक्षानुमानागमोपमानार्थापत्तिरूपाणि प्रमाणानि येषां ते पंचमाः पंचप्रमाणवादिनः प्रभाकराः। तथा षण्माः। तथा षट् प्रत्यक्षानुमानागमोपमानार्थापत्त्यभावरूपाणि प्रमाणानि येषां ते षण्माः षट्प्रमाणवादिनो मीमांसकास्तेषामिताश्ते द्वे तृत्वात् तान् कमते अभिलषति। स एकद्वित्रिचतु.पंचषण्मेनकमनः तस्मिन्मयि मेनकमने नका अपि नका नवादिनः। मा लक्ष्मीस्तस्या इनः स्वामी विष्णुः कमनो ब्रह्मा इन आदित्यः मेनकमनेनाः । अल्पत्वात्कप्रत्यये मेनकमनेनकाः । तेऽपि ब्रह्मविष्णुसूर्या मयि देवबोधे क्रुद्धे सति अज्ञानत्वाभकाः न वादिनः यतो देवान् बोधयति इति व्युत्पत्त्या तेपि मया बोधिताः सुज्ञाना भवति। तथा मानुषाणां पटुवादिनां विदुषामपि किं प्रमाणमिति॥

इति पत्रावलंबव्याख्याश्लोकः ॥ ग्रं० ॥ १६ ॥

अथास्ति बाहडो नाम धनवान् धार्मिकाग्रणीः।
गुरुपादान्प्रणम्याथ चक्रे विज्ञापनामसौ ॥ ६७ ॥
आदिश्यतामतिश्लाघ्यं कृत्यं यत्र धनं व्यये।
प्रभुराह्वालये जैने द्रव्यस्य सफलो व्ययः ॥ ६८ ॥
आदेशानंतरं तेनाकार्यत श्रीजिनालयम्।
हेमाद्रिधवलस्तुंगो दीव्यत्कुंभमहामणिः ॥ ६९ ॥
श्रीमता वर्द्धमानस्याबीभरद्बिंबमद्भुतम्।
यत्तेजसा जिताश्चंद्रसूर्यकांतमणिप्रभाः ॥ ७० ॥
शतैकादशके साष्टसप्ततौ विक्रमार्कतः।
वत्सराणां व्यतिक्रांते श्रीमुनिचंद्रसूरयः ॥ ७१ ॥
आराधनाविधिश्रेष्ठं कृत्वा प्रायोपवेशनम्।
शमपीयूषकल्लोलप्लुतोऽसौ त्रिदिवं ययौ ॥ ७२ ॥ युग्मम् ॥
वत्सरे तत्र चैकत्र पूर्णे श्रीदेवसूरिभिः।
श्रीवीरस्य प्रतिष्ठां स बाहडोऽकारयन्मुदा ॥ ७३ ॥
अथ नागपुरे श्रीमान् देवसूरिप्रभुर्ययौ।
अभ्यागादत्र च श्रीमानाह्लादननरेश्वरः ॥ ७४ ॥

प्रणनाम तदायातः स च भागवतेश्वरः ।
देवबोध इमामार्यामार्याचारोऽवदत्प्रभुः ॥ ७५ ॥
सा चेय–योवादिनो द्विजिह्वान् साटोपं विषममानमुद्गिरतः ।
शमयति स देवसूरिर्नरेंद्रवंद्यः कथं न स्यात् ॥ ७६ ॥
एवं चासौ महाभक्त्या स्थापितो नगरांतरा ।
राज्ञा विज्ञाततत्वार्थो भव्यान् बोधयति स्म सः ॥ ७७ ॥
तच्च श्रीसिद्धराजोऽथ नगरं रुरुधेतराम् ।
तत्रस्थं देवसूरिं च ज्ञात्वाद्यावव्रते ततः ॥ ७८ ॥
मध्यस्थितेऽत्र तन्मित्रे दुर्गं लातुं न शक्यते ।
इति ध्यात्वाह्वयद्भक्त्या नृपः श्रीपत्तने प्रभुम् ॥ ७९ ॥
तत्र वर्षास्ववस्थाप्याश्रित्ते तं चाभ्यमित्रयत् ।
प्राकारं जगृहे श्रीमान् सिद्धराजश्च सत्वरम् ॥ ८० ॥
अथ कर्णावतीसंघोऽन्येद्युरुत्कंठितः प्रभोः ।
आह्वाययन्महाभक्त्याचतुर्मासकहेतवे ॥ ८१ ॥
ततस्तत्राययुः पूज्याः संघादेशपुरस्कृताः ।
सिंह्नोपाश्रयमासाद्यावस्थानं प्रतिशुश्रुवुः ॥ ८२ ॥
अरिष्टनेमिप्रासादे व्याख्यानं च प्रतुष्टुवुः ।
अबुध्यंताबुधा लोका यस्य श्रवणतो घनाः ॥ ८३ ॥
इतश्च दाक्षिणात्यः श्रीकर्नाटनृपतेर्गुरुः ।
श्रीजयकेशिदेवस्य श्रीसिद्धेशप्रसूपितुः ॥ ८४ ॥
अनेकवादिनिर्जिष्णुर्वादिपुत्रकपद्धतिम् ।
वामपादे वहन् गर्वपर्वताधित्यकाश्रितः ॥ ८५ ॥
जैनो जैनमतद्वेषिदर्पसर्पकरंडिका ।
श्रीमान् कुमुदचंद्राख्यो वादिचक्री दिगंबरः ॥ ८६ ॥
श्रीवासुपूज्यचैत्यस्थो वर्षानिर्वाहहेतवे ।
श्रीदेवसूरिधर्माख्या प्रभावामर्षणस्तदा ॥ ८७ ॥
श्रितान् मुखरयन् बंदिवृंदानि प्रजिघाय सः ।
उद्दीपयन्वचोभिस्तं सूरिं शमिकुलेश्वरम् ॥ ८८ ॥
पंचभिः कुलकम् ॥
वैतालिकपतिर्धर्म्मिपर्षदंतः प्रविश्य च ।
आह स्तुतिपरस्तस्य काव्यानि क्रोधदीप्तये ॥ ८९ ॥
गेहं वाङ्मययोः पारदृश्वरी प्रेक्षयन्मतिम् ।
वीणापुस्तकभृद्ब्राह्मी विस्मिता वेदपारगा ॥ ९० ॥

---

१ H. शुद्धो

ततस्तद्भ्रममास्थाय तदुपास्तितरास्तिकाः ।
सितांबराः परानंदभाजो भवत किं न हि ॥ ९१ ॥
तथाहि–हंहो श्वेतपटाः किमेष विकटाटोपोक्तिसंटंकितैः
संसारावटकोटरेऽतिविषमे मुग्धो जनः पात्यते ।
तत्वातत्वविचारणासु यदि वो हेवाकलेशस्तदा
सत्यं कौमुदचंद्रमंह्रियुगलं रात्रिंदिवं ध्यायत ॥ ९२ ॥
अथाह देवसूरीणां माणिक्याख्यो विनेयराट् ।
दर्शनप्रतिकूलाभिर्वाग्भी रोषांकुरं वहन् ॥ ९३ ॥
तद्यथा–कः कंठीरवकंठकेसरसटाभारं स्पृशत्यंह्रिणा
कः कुंतेन शितेन नेत्रकुहरे कंडूयनं कांक्षति ।
कः सन्नह्यति पन्नगेश्वरशिरोरत्नावतंसश्रिये
यः श्वेतांबरदर्शनस्य कुरुते वंद्यस्य निंदामिमाम् ॥ ९४ ॥
माणिक्यः शिष्यमाणिक्यं जगदे देवसूरिभिः ।
नात्र कोपावकाशोऽस्ति खरवादिनि दुर्जने ॥ ९५ ॥
अथ वंदिराज आह श्वेतांबर चणकतुरग इह वादी ।
श्वेतांबरतमसोर्के श्वेतांबरमशकधूमोऽयम् ॥ ९६ ॥
श्वेताम्बरः प्रहसनैः सूत्रधारः प्रभुः कुमुदचंद्रः ।
किं वाच्यस्तव वाचा संदिश किमिहान्यवाग्डंबरैः ॥ ९७ ॥
स गुरुः प्राह नाहंयुर्व्रतमस्माकदर्शने ।
ततः कथय मद्भ्रातुः पुर एकं हि वाचिकम् ॥ ९८ ॥
दिगम्बरशिरोमणेर्गुणपराङ्मुखो मास्मभू-
र्गुणग्रहफलं हि तद्वसति यद्रमापंकजे ।
ततस्त्यज मदं कुरु प्रशमसंयतान्स्वान्गुणान्
दमो हि मुनिभूषणं स च भवेन्मदव्यत्यये ॥ ९९ ॥
इत्येवं कथिते वंदिवरेणास्य पुरो मुनेः ।
वादिनः सोऽवदन्मूर्ख साधूनां शम उत्तरम् ॥ १०० ॥
उत्तेजनं किमप्येष क्रियते चित्तपीडनम् ।
अस्य विद्याकलामध्यं ज्ञायते येन तत्त्वतः ॥ १०१ ॥
विमृश्येति निजैः साधुवृंदं रथ्यांतरागतम् ।
वैरानुबंधचेष्टाभिरुपासर्जयदद्भुतम् ॥ १०२ ॥
इत्येवमुपसृष्टेत्र निःप्रकंपे सुमेरुवत् ।
दिग्वासा निजरूपासमविशिष्टं प्रचक्रमे ॥ १०३ ॥
निजचैत्याग्रतो यांतीं वृद्धां गोचरचर्यया ।
उपसर्गयितुं साध्वीमारेभेऽन्येद्युरुद्यतः ॥ १०४ ॥

अथ पल्लवकानं पल्लवकानिव नभस्तरोः ।
प्रेष्यतां कुंडके क्षिप्त्वा नर्त्तयामास साहसी ॥ १०५ ॥
अहो साध्वीमसौ वृद्धां दर्शनिव्याजवुक्कसः ।
विडंबयति पापीति तस्या वर्णो जनेऽभवत् ॥ १०६ ॥
अथ सा मोचिता कैश्चिदनुकंपापरैर्नरैः ।
सूरेरुपाश्रयं प्रायादतिगद्गदशब्दभूः ॥ १०७ ॥
किं कृतस्तेऽपमानोऽयमिति पृष्टा च सूरिभिः ।
जरामन्युभराव्यक्तस्वरं प्राह तदग्रतः ॥ १०८ ॥
वर्द्धितोऽध्यापितः सूरिपदे मद्गुरुभिर्भवान् ।
स्थापितोऽस्मादृशामीदृग् विडंबनकृते ध्रुवम् ॥ १०९ ॥
दिगंबरोऽयं बीभत्सदर्शनः स्वविटव्रजैः ।
राजाध्वनि प्रयांतीं मामनाथवदुपाद्रवत् ॥ ११० ॥
विद्वत्तया प्रभुत्वेन किं फलं तेऽवकाशिना ।
किं करस्थेन शस्त्रेण यदि शत्रुर्न हन्यते ॥ १११ ॥
शमशैत्यमहावल्याः फलं परिभवो दृढः ।
ग्रस्यते मुच्यते वापि राहुणा स्वेच्छया शशी ॥ ११२ ॥
अद्यते विक्रमे कालः पठितस्य फलं ह्यदः ।
धान्ये शुष्के घने चास्ते वर्षन् मेघः करोतु किम् ॥ ११३ ॥
देवसूरिरथो वाचमुवाच क्रोधदुर्द्धरम् ।
मा विषादं कुरुष्वार्ये दुर्विनीतः पतिष्यति ॥ ११४ ॥
आर्याह दुर्विनीतोऽयं पतिष्यति नवा पुनः ।
त्वयि न्यस्तभरः संघः पतिष्यत्येव वेत्रवत् ॥ ११५ ॥
प्रभुराह स्थिरीभूय चेद्विलोकयसे ततः ।
मुक्तानामिह वेधो नः संभवीगुणयुक्तयोः ॥ ११६ ॥
अथ प्वोवाच माणिक्यविज्ञप्तिं लिख मामिकाम् ।
श्रीमत्पत्तनसंघाय विनयातिशयस्पृशम् ॥ ११७ ॥
आदेशानंतरं सोऽथ लिखति स्म स्फुटाक्षरम् ।
अदर्शयत्प्रभोः पश्चादथासौ प्रत्यवाचयत् ॥ ११८ ॥
स्वस्ति नत्वा जिनं श्रीमदणहिल्लपुरे प्रभुम् ।
संघं कर्णावतीपुर्योः श्रीमंतो देवसूरयः ॥ ११९ ॥
भक्त्या विज्ञपयंत्यत्राशांबरेण विवादिना ।
शीघ्रमेवागमिष्यामः कृतवादाश्रवा इति ॥ १२० ॥
अचिराध्वन्यपुंसश्च हस्ते साथ समर्पिता ।
गूर्जराणां राजधानीं स प्राप प्रहरत्रयात् ॥ १२१ ॥

दृष्ट्वा संघेन मर्त्योऽसौ भोजनाच्छादनादिभिः ।
सम्मान्य प्रहितः शीघ्रं प्रतिलेखं समर्प्य च ॥ १२२ ॥
आयाद्देवगुरोः पार्श्वे संघादेशं ददौ मुदा ।
एनं ललाटे विन्यस्य विवृत्यावाचयच्च सः ॥ १२३ ॥
स्वस्ति श्रीतीर्थनेतारं नत्वा श्रीपत्तनात्प्रभुः ।
संघः कर्णावतीपुर्यां परवादिजयोर्जितम् ॥ १२४ ॥
श्रीदेवोपपदं सूरिं समादिशति सम्मदात् ।
आगंतव्यं झटित्येव भवता वादिपुंगव ॥ १२५ ॥
किंच श्रीवादिवेताल शांत्याचार्यस्य सद्गुरोः ।
पार्श्वेऽधीतस्य शैवाख्यवादिजेतुर्महात्मनः ॥ १२६ ॥
मुनिचंद्रप्रभोः किं न भवान् शिष्यशिरोमणिः ।
कालेऽधुनातने संघोदयस्त्वय्येव तिष्ठति ॥ १२७ ॥
ततः श्रीसिद्धभूपालं विज्ञप्यात्र सकौतुकम् ।
त्वत्कृतं विजयं स्वस्य वयं वीक्ष्यामहे ध्रुवम् ॥ १२८ ॥
श्राद्धानां श्राविकाणां च शतानि त्रीणि सप्त च ।
विजयाय तव श्रीमन्नाचामाम्लानि वितन्वते ॥ १२९ ॥
प्रतिहन्तुं प्रत्यनीकसुराणां वैभवं लघुम् ।
देव्याः श्रीशासनेश्वर्या बलं दातुं स तत्वतः ॥ १३० ॥
तदर्थमिति विज्ञाय विश्ववंद्यः स बंदिनम् ।
प्राहिणोद्वादिने धीमान् शिक्षयित्वा स्ववाचिकम् ॥ १३१ ॥
स गत्वा चाह वादीन्द्रो देवाचार्यो वदत्यदः ।
मन्मुखेन व्रजन्नसि पत्तनेऽहं त्वमापतेः ॥ १३२ ॥
सभायां सिद्धराजस्य पश्यतां तत्सभासदाः ।
स्वपराभ्यस्तवाणीनां प्रमाणं लभ्यते यथा ॥ १३३ ॥
भवत्वेवमिति प्रोचे स दिगंबरसंनिधौ ।
गत्वा प्रोवाच तत्सर्वं श्रुतं तेनावधानतः ॥ १३४ ॥
गमिष्यत इति प्रोक्ते वादिनाऽजायत क्षुतम् ।
तत्तस्याशकुनं मत्वा समेत्याकथयद्गुरोः ॥ १३५ ॥
ततः सूरिर्दिने शुद्धे मेषलग्ने रवौ स्थिते ।
सप्तमस्थे शशांके च षष्ठे राहौ रिपुद्रुहि ॥ १३६ ॥
प्रयाणं कुर्वतस्तस्य निमित्तं शकुनाः शुभाः ।
स्फुरितं दक्षिणेनाक्ष्णा शिरःस्पंदोऽप्यभूद्भृशम् ॥ १३७ ॥
किकीदिविदृशो मार्गमाययौ चंद्रकी न्यरौत् ।
मृगाः प्रदक्षिणं जग्मुर्विषमा विषमच्छिदः ॥ १३८ ॥

1 H. तत्तते?

तथा रथः प्रभोस्तीर्थनाथस्याभ्यर्चितो जनैः ।
अभ्यर्हितप्रतिमया बभूवाभिमुखस्तथा ॥ १३९ ॥
इत्यादिभिर्निमित्तैश्च मतः सौष्ठवमाश्रितः ।
अक्षेपात्पत्तनं प्राप प्राप्तरूपेश्वरः प्रभुः ॥ १४० ॥
प्रवेशोत्सवमाधत्त संघ उत्कंठितस्ततः ।
तत्र सिद्धाधिपं भूपमपश्यच्च क्षणे शुभे ॥ १४१ ॥
पुनश्च मागधाधीशो दिगंबरपुरोगतः ।
प्राह स्फुटं वचोभिः श्रीदेवाचार्यस्य वाचिकम् ॥ १४२ ॥
मदं मुंच यतः पुंसां दत्तेऽसौ व्यसनं महत् ।
शलाकापुरुषस्यापि दशास्यस्य यथा पुरा ॥ १४३ ॥
एवमुक्त्वा स्थिते वैतालिके दिग्वसनोऽवदत् ।
श्वेतांबराः कथाभिज्ञा एषामेतद्धि जीवितम् ॥ १४४ ॥
अहं तु तत्कथाभीतः[1] प्रीतो वादेन केवलम् ।
येन स्वस्य परस्यापि प्रमाणं हि प्रतीयते ॥ १४५ ॥
एवमेवोचितं तेन जल्पितं तन्नृपाग्रतः ।
संगम्य वादमुद्रायां तदेतत्क्रियतां ध्रुवम् ॥ १४६ ॥
तत्र गच्छाम शीघ्रं च वयमप्यद्य निश्चितम् ।
प्रस्तास्तवस्तदित्युक्त्वा[2] रुरोह च सुखासनम् ॥ १४७ ॥
संमुखं पुनरासीच्च क्षुतं व्यमृशदत्र च ।
विकारः श्लेष्मणः शब्दस्तत्रास्था कास्तु मादृशाम् ॥ १४८ ॥
स्याद्वा ततोऽपि कंडूतिर्जिह्वायामेतरेण न ।
प्रतिहन्येत वादेन क्षुतमस्मान्निषेधकम् ॥ १४९ ॥
याम एव तथाप्येवमुक्त्वा संचरतः सतः ।
अवातरत्फणी श्यामः कालरात्रेः कटाक्षवत् ॥ १५० ॥
व्यलंबत परीवारस्तस्याशकुनसंभ्रमात् ।
आह च स्वामिनो नैव कुशलं दृश्यते ह्यदः ॥ १५१ ॥
स प्राह पार्श्वनाथस्य तीर्थाधिष्ठायको मम ।
धरणेंद्रो ददौ दर्श साहाय्यविधये ध्रुवम् ॥ १५२ ॥
इत्याद्यशकुनैर्बाढं निषिद्धोऽपि दिगंबरः ।
अणहिल्लपुरं प्राप तथा प्रावेशिकैरपि ॥ १५३ ॥
इतश्च श्रीदेवसूरेः पुरं प्रविशतः सतः ।
थाहडो नागदेवश्चाययाते संमुखौ तदा ॥ १५४ ॥
ताभ्यां प्रणम्य विज्ञप्तं दिगंबरपराजये ।
दाप्यतां स्वेच्छया द्रव्यमेतदर्थं तदर्जितम् ॥ १५५ ॥

---

१ P कथातीतप्रीतो. २ P प्रस्तास्तव.

श्रीदेवसूरयः प्राहुर्यदि ब्राह्मीप्रसादतः ।
न जयस्तत्किमुत्कोचैः संकोचैः सत्यसंविदाम् ॥ १५६ ॥
अथाह थाहडो नाथ शांवरेण घनव्ययात् ।
तत्रस्थेन घनाध्यक्षाद्वशिता गांगिलादयः ॥ १५७ ॥
ऊचुश्च प्रभवो देवा गुरवश्चात्र जाग्रति ।
कार्योऽन्वयो न युष्माभिरस्थाने द्रविणस्य तत् ॥ १५८ ॥
ततः कुमुदचंद्रेणागतेन नगरांतरा ।
श्वेतांबरजयोन्नत्यै कृतं पत्रावलंबनम् ॥ १५९ ॥
दिनानां विशतिं प्रत्युपाश्रयं यतिनां तदा ।
नीरं तृणानि मुक्त्वा च सपुरोगान्यवादयत् ॥ १६० ॥
केशवत्रितयं तस्य पक्षे सभ्यतया स्थितम् ।
अन्येऽप्यर्वाग्दृशः सर्वे तस्य पक्षस्पृशोऽभवन् ॥ १६१ ॥
थाहडस्तस्य तत्रत्यं राजद्वारे विलंवितम् ।
स्फाटयामास शृंगारमिव तस्य जयश्रियः ॥ १६२ ॥
श्रीसिद्धाधीश्वरो राजा श्रीपालादधिगम्य च ।
वृत्तांतमाह्वयत्तत्र श्वेतांवरदिगंवरौ ॥ १६३ ॥
सभाव्यवस्थामाधाय प्रैषीद्दूतं च सत्वरम् ।
संबंधकावताराय तयोर्गांगिलमंत्रिणे ॥ १६४ ॥
ततः श्रीकरणे सोऽथ श्रीदेवगुरुराह्वयत् ।
जातिप्रत्ययतः किंचिद्विशिष्टमिव चावदत् ॥ १६५ ॥
तथाहि–दंतानां मलमंडलीपरिचयात्स्थूलं भविष्णुस्तुतिं
श्रुत्वा भैक्षकपिंडभक्षणविधिं शौचं किलात्रात्मनः ।
नीरं साक्षिशरीरशुद्धिविषये येषामहो कौतुके
तेऽपि श्वेतपटाः किमीश्वरपुरः कांक्षंति जल्पोत्सवम् ॥ १६६
आह देवगुरुः स्फूर्त्या मीमांसासक्तताजुषः ।
धीवराश्वोचितं तद्वः शौचाचारविचारणम् ॥ १६७ ॥
परमुक्तं च–विमृशविमृशांभोभिः शयोऽपसारयितुं नयै-
र्जठरपिठरीक्रोडस्थैमाप्यहो मललेशकः ।
कथमिव सदा तिष्ठन्नात्मन्यरूपिणि तैरहो
परिक्षलयितुं पार्यो नार्यः स पातककर्दमः ॥ १६८ ॥
माणिक्यः प्राह किंनाम द्विजस्यास्यास्ति दूषणम् ।
श्रीसिद्धेश उपालभ्यः सविवेकबृहस्पतिः ॥ १६९ ॥
संस्कारे सूत्रपालेन चतुर्द्धोहृदयात्मनाम् ।
वपुर्मनोवचःकायं जनेष्वन्यान्यरूपतः ॥ १७० ॥

---

1 P लावाम्लत. H. चात्मत?

अकृत्यकृत्ययोस्तुल्यः कर्त्तव्यत्वस्पृशां सदा ।
[1]द्विजन्मनां प्रधानत्वं दर्शनानां विडंबनम् ॥ १७१ ॥
इत्येवमूहापोहेन संबंधो नार्पितस्तदा ।
प्रातः समागतः पृष्टो राजा सचिवगांगिलः ॥ १७२ ॥
लिखितो भवता कः संबंधः किं वादिनोर्द्वयोः ।
स प्राहैषामपावित्र्यान्नार्हा राजसभास्थितिः ॥ १७३ ॥
अतो मया न चालेखि संबधो नृपतिस्ततः ।
अंतःकोपानलं बभ्रे पयोधिरिव वाडवम् ॥ १७४ ॥
एवं च सदसन्मर्त्यविशेषविदुषस्तव ।
व्ययस्य करणं तेऽलंकारारोपस्तवोचितः ॥ १७५ ॥
प्रे(अ)ज्ञानां गौरवर्णोऽपि काल एवावभासते ।
अल्पोप्यत्र न ते दोषः सा ममैवाविचारिता ॥ १७६ ॥
परं दर्शनबाह्यत्वाद्ग्राम्यवन्नागरोऽपि सन् ।
नांतर्मुखो गुणान् दोषीकृत्य यस्मात्प्रजल्पसि ॥ १७७ ॥
अन्यदेकं च ते भाग्यं यत्तेन ब्रह्मचारिणा ।
एवं विवदमानोऽपि शापाद्भस्मीकृतोऽपि सन् ॥ १७८ ॥
संमान्य चास्य संबंधमधुनैव समर्पय ।
लिखित्वा वादिनोर्वादकाले जयपराजये ॥ १७९ ॥
राजादेशं गृहीत्वेति तेन प्रैषि निजोऽनुजः ।
सांत्वनाय प्रभोः सोऽपि तत्कृत्वाह्वयदत्र ते ॥ १८० ॥
प्रभुर्विजयसेनाख्यं प्रैषीत्तत्र मनीषिणम् ।
नोचितं गमनं तत्र सचिवानां मतौ स्वयम् ॥ १८१ ॥
दिगंबरो विजीयेत चेत्तच्यकारपूर्वकम् ।
निर्वास्योतः पुराकृत्वा परिस्पंदं स चौरवत् ॥ १८२ ॥
अथ श्वेतांबरो हारयेत्तत्तस्य शासनम् ।
उच्छिद्याशांबरत्वेनावस्थाप्यं तैः स्थितैः किमु ॥ १८३ ॥
इत्येवं लेखयित्वात्र तं राजकरणेऽमुचत् ।
कृतपक्षोपि संबंधोऽनुमतस्तैर्बलोन्नतैः ॥ १८४ ॥
प्रेषितः सिद्धराजेन श्रीश्रीपालः कवीश्वरः ।
शिक्षां दत्वातिवात्सल्याद्देवसूरिप्रभोरथ ॥ १८५ ॥
स प्रणम्य नृपस्याह वाचिकं तत्पुरः स्फुरन् ।
स्वदेशपरदेशस्था अपि विज्ञा ममार्हिताः ॥ १८६ ॥
परं तथा त्वया बंधो वक्तव्यं वादलीलया ।
यथा देशांतरीजेयः स्थेयः श्रेयःकृतेर्मम ॥ १८७ ॥

1 P. प्रजाना.

त्वय्येव मम चित्तस्य दृढावस्थितिरीदृशी।
यथा व्रीडयसे नो नः सभांकार्यस्तथा ध्रुवम् ॥ १८८ ॥
अथ श्रीदेवसूरिश्च प्रददे प्रतिवाचिकम्।
प्रतापस्ते महाराज विदेशिबुधजित्वरः ॥ १८९ ॥
वयं सहकृतस्तत्र परं मा दोल्यतां मनः।
गुरूपदिष्टपक्षौघैर्विजेष्ये तं विवादिनम् ॥ १९० ॥
क ईदृग्विदुषां शास्ता तद्वचःकौतुकी च कः।
भवानिव भवानिच्छुरप्यहं येन वादकृत् ॥ १९१ ॥
इति तद्वच आख्याच्च श्रीपालः कविवासवः।
भूपालोपि मुदं प्राप देवसूरिवचोमृतैः ॥ १९२ ॥
चंद्राष्टशिववर्षेऽत्र ११८१ वैशाखे पूर्णिमादिने।
आहूतौ वादशालायां तौ वादिप्रतिवादिनौ ॥ १९३ ॥
वादी कुमुदचंद्रश्चाययावाडंबरस्थितः।
सुखासनसमासीनश्छत्रचामरशोभितः ॥ १९४ ॥
प्रतीहारेण मुक्तेऽत्र पट्टे वासावुपाविशत्[1]।
आहाय्यापि न चायाति श्वेतभिक्षुः कथं भिया ॥ १९५ ॥
अथ श्रीदेवसूरिश्चाययौ भूपालसंसदम्।
ऊचे कुमुदचंद्रश्च स्वप्रज्ञाबलगर्वितः ॥ १९६ ॥
तथाहि–श्वेतांबरोऽयं किं ब्रूयान्मम वादरणांगणे।
सांप्रतं सांप्रतं तस्माच्छीघ्रमस्य पलायनम् ॥ १९७ ॥
सूरिः प्रोवाच बंधुर्मे किमसत्यं वदत्यसौ।
श्वेतांबरो यतः श्वायमस्माद्वादरणांगणे ॥ १९८ ॥
भषणे तस्य पर्याप्तं रणेनाधिकृतिः पुनः।
परं पलायनं शीघ्रं युक्तं युक्तं वदत्यदः ॥ १९९ ॥
श्रुत्वेति पार्षदा वाचं शब्दखंडनयानया।
स्मिता विस्मितमाधाय दध्युरस्य जयो ध्रुवम् ॥ २०० ॥
एकाग्रमानसौ तत्र शासने पक्षपातिनौ।
थाहडो नागदेवश्च सह चाजग्मतुर्मुदा ॥ २०१ ॥
थाहडः स्वगुरुं व्यज्ञपयद्द्रव्येण भेदिना।
सभ्याश्रुता[2] मया द्रव्यं तद्दास्ये द्विगुणं ध्रुवम् ॥ २०२ ॥
प्रभावनाकृते स्वीयशासने वत्समादिश।
अथावदद्गुरुर्द्रव्यव्ययः कार्यो न हि त्वया ॥ २०३ ॥
अद्य प्रभुसिरादिष्टः श्रीमुनिचंद्रसूरिभिः।
स्वप्ने यद्भूत्स वक्तव्यः प्रयोगः स्त्रीषु मुक्तिकृत् ॥ २०४ ॥

---

१ H. वासामु. २ P. श्रम्रुति.

उत्तराध्ययनग्रंथटीका श्रीशांतिसूरिभिः।
कृता तदनुसारेण वक्तव्यं जेष्यते रिपुः॥ २०५॥
इत्युक्त्वा नृपतेराशीर्वादं दर्शनसंगतम्।
अभ्यधात् सूरिरानंदहेतुं केतुं विवादिनाम्॥ २०६॥
नारीणां विदधाति निर्वृतिपदं श्वेतांबरः प्रोल्लस—
त्कीर्तिस्फीतिमनोहरं नयपथप्रस्तारभंगीगृहम्।
यस्मिन्केवलिनो विनिर्जितपरोत्सेकाः सदा दंतिनो
राज्यं तज्जिनशासनं च भवतश्चौलुक्य जीयाच्चिरम्॥२०७॥
ऊचे कुमुदचंद्रेण वादिना सिद्धभूपते।
आशीरासीमभूमीशाविद्धद्विजयशोभिनः॥ २०८॥
सा चेयं—खद्योतद्युतिमातनोति सविता जीर्णोर्णनाभालय—
च्छायामाश्रयते शशी मशकतामायांति यत्राद्रयः।
इत्थं वर्णयतोनभस्तव यशो जातं स्मृतेर्गोचरं
तद्यत्र भ्रमरायते नरपते वाचस्ततो मुद्रिताः॥ २०९॥
तस्मिन्महर्षिरुत्साहसागरश्च कलानिधिः।
प्रज्ञाभिरामो रामश्च नृपस्यैते सभासदः॥ २१०॥
ते प्रोचुर्मुद्रिता वाच इति दिग्वाससः क्षतिः।
नारीमुक्तिर्श्चोनिमुक्तिर्यत्र तत्र जयो ध्रुवः॥ २११॥
देवाचार्यश्च भानुश्च श्रीपालश्च महाकविः।
पक्षे दैगंबरे तत्र केशवत्रितयं मतम्॥ २१२॥
तत्रोत्साहो मदोत्साह उवाच प्रकटाक्षरम्।
किंचिदुत्प्रासनागर्भं दृष्ट्वा दिग्वस्त्रपार्षदात्॥ २१३॥
तथाहि—संवृतावयवमस्तदूषणं साधनं सदसि दर्शयिष्यतः।
अस्य लुंचितकचस्य केवलं केशवत्रितयमेति सभ्यताम्२१४
महर्षिणा च विज्ञप्त उपलक्षप्रभुस्ततः।
प्रयोग उच्यतां सम्यगादिदेशेति कौतुकात्॥ २१५॥
ततोऽसौ नास्ति निर्वाणं स्त्रीभवस्थस्य देहिनः।
तुच्छसत्वतया तस्य यस्तुच्छो मुक्तिरस्य न॥ २१६॥
अत्रोदाहरणं बालः पुमान् तुच्छाऽबलाभवः।
अतो न निर्वृतिस्तत्र प्रयोगममुमाह सः॥ २१७॥
देवसूरिरथाहस्मासिद्धधर्मिविशेषणम्।
स्त्रीभावनिर्वृतिं प्राप मरुदेवागमे मतम्॥ २१८॥
तवाप्रसिद्धमेतच्चेदनेकांतं ततः पठ।
तस्य मार्गमतिक्रम्य दुर्नयो ह्यवधारणम्॥ २१९॥

---

१ D. ध्याति.

तथा हेतुश्च ते दूष्यो नैकांतिकतया सतः ।
स्त्रियोऽपि यन्महासत्वाः प्रत्यक्षागमवीक्षिताः ॥ २२० ॥
सीताद्या आगमेऽध्यक्षं पुनः साक्षान्महीपतेः ।
माता श्रीमयणल्लाख्या सत्वधर्मैकशेवधिः ॥ २२१ ॥
तथा व्याप्तिरलीकेयं प्रतिव्याप्ते प्रढौकनात् ।
याः स्त्रियास्ता ध्रुवं तुच्छा नैतत्तत्सत्वदर्शनात् ॥ २२२ ॥
तथा तद्दर्शनात्तत्रोदाहृतिश्चापि दूषिता ।
बालं पुंसामभिज्ञानादतिमुक्ताकसाधुवत् ॥ २२३ ॥
तथास्योपनयोऽसिद्धः प्राक् सिद्धांतात्सदूषणात् ।
ततो निगमनं दूष्यं प्रत्यनुमानसंभवात् ॥ २२४ ॥
अनूद्य दूषयित्वैवं परपक्षमथ स्वकम् ।
पक्षे देवगुरुः प्राह स्त्रीभवेष्वथ निर्वृतिः ॥ २२५ ॥
प्राणिनः सत्ववैशिष्ट्यात् स्त्रियः सत्वाधिका मया ।
दृष्टाः कुंतीसुभद्राद्या अथोदाहृतिरागमे ॥ २२६ ॥
महासत्वाः स्त्रियः संति मोक्षं गच्छंति निश्चितम् ।
इत्युक्त्वा विरते देवगुरावाशांबरोऽवदत् ॥ २२७ ॥
पुनः पठ ततोऽवाचि तत्राप्यनवधारिते ।
त्रिरप्याह कृते नैवमवुद्ध्वा तमदूषयत् ॥ २२८ ॥
प्रतिवाद्याह वाच्यस्यामवोधः प्रकटोत्तरम् ।
दिग्वासाः प्राह जल्पोऽयं कटित्रे लिख्यतामिह ॥ २२९ ॥
महर्षिः प्राह संपूर्णा वादमुद्रा च दृश्यते ।
दिगंबरो जितः श्वेतांबरो विजयमाप्य च ॥ २३० ॥
एवं चानुमते राज्ञा प्रयोगं केशवोऽलिखत् ।
बुद्ध्वा च दूषिते तत्र देवसूरिस्तदावदत् ॥ २३१ ॥
अनूद्य दूषणं भित्त्वा स्वपक्षं स्थापयन्निह ।
कोटाकोटीति शब्दं स प्रयुयोज विदूषणम् ॥ २३२ ॥
अपशब्दोऽयमित्युक्ते वादिना पार्षदेश्वरः ।
उत्साहः प्राह शुद्धोऽयं शब्दः पाणिनिसूचितः ॥ २३३ ॥
स्कंध–कोटाकोटिः कोटिकोटी कोटिकोटिरिति त्रयः ।
शब्दाः साधुतयार्हतसंमताः पाणिनेरमी ॥ २३४ ॥
इत्थं निरनुयोज्योनुयोगो निग्रहभूमिका ।
तवैवैषा समायाता व्यावर्त्तस्व ततो गृहात् ॥ २३५ ॥
अशक्नुवन्निति प्रत्युत्तरे देवगुरोस्ततः ।
सचैलक्षमथाहस्मानुत्तरः स दिगंबरः ॥ २३६ ॥

---

१ P. या स्त्रियो तास्तुवं०.

महाराज महान् वादी देवाचार्यः किमुच्यते ।
राजाह वद निस्तंद्र कथयिष्यामि विस्मृतम् ॥ २३७ ॥
अवदत्यन्यसभ्यैश्च हरिताला प्रपातिता ।
संबंधकविधिं भूप आदिशन्निजपूरुषैः ॥ २३८ ॥
जयपत्रं प्रसादेन देवसूरेर्ददौ नृपः ।
ततोऽवादीद्गुरुस्तं च किमप्याचक्ष्महे वचः ॥ २३९ ॥
शास्त्रीयवादमुद्रायां निग्रहो यत्पराजयः ।
तद्वादिनस्तिरस्कारः कोऽपि नैव विरच्यताम् ॥ २४० ॥
राजाह भवतां वाग्भिरिदमप्यस्तु किं पुनः ।
आडंबरापहारेण दर्शनित्वमवाप्यताम् ॥ २४१ ॥
एवं कृते तदावल्लार्गलाख्या सिद्धयोगिनी ।
श्रीमत्कामाख्यया देव्या प्रहिता साह्यगौरवात् ॥ २४२ ॥
भूयास्त्वमक्षयस्कंधः सिद्धाधीशस्तथा सुहृत् ।
तथा श्रीदेवसूरिश्चाशिषेत्यभिननंद तौ ॥ २४३ ॥
मषीकूर्चकमानीय भाले न्यस्तो दिगंबरः ।
ततः सा पश्यतामेव निश्चक्राम नभोध्वना ॥ २४४ ॥
तुष्टिदाने ततो लक्षं द्रव्यस्य मनुजाधिपः ।
ददन्यषेधि निर्ग्रंथेश्वरेणास्पृहताजुषा ॥ २४५ ॥
गणगंधर्वसिद्धादिदेवैः पूर्वमपीक्षितः ।
राजादेशात्प्रवेशस्य सोवर्त्यत महोत्सवः ॥ २४६ ॥
समस्ततूर्यनिर्घोषपूर्वं संगीतमंगलैः ।
कुलांगनाकृतैः सूरिर्वसतौ प्रविवेश सः ॥ २४७ ॥
राजवैतालिकस्तत्र तारस्वरत आशिषः ।
ददौ सदौचितीकृत्यविदं देवगुरुं प्रति ॥ २४८ ॥
संतोषस्फारनिःकिंचनजनवचनैराहतं प्रेक्ष्य नव्यं
कामोहिंसादिकेभ्योऽप्यवगणिततमःशत्रुपक्षे शमादौ ।
आदिष्टो यस्य चेतो नृपतिपरिभवात्पुण्यपण्यं प्रवेश्य
प्रायासीद्वालयित्वा शुचिमतिवहिकां देवसूरिः स नंद्यात्॥४९
श्रीसिद्धहेमचंद्राभिधानशब्दानुशासने ।
सूत्रधारः प्रभुः श्रीमान् हेमचंद्रप्रभुर्जगौ ॥ २५० ॥
तथाहि—यदि नाम कुमुदचंद्रं नाजेष्यद्देवसूरिरहिमरुचिः ।
कटिपरिधानमधास्यत कतमः श्वेतांबरो जगति ॥ २५१ ॥
श्रीचंद्रसूरयस्तत्र सिद्धांतस्येव मूर्त्तयः ।
शासनोद्धारकूर्मायाशासन् श्रीदेवसूरये ॥ २५२ ॥

---

१ D H नदितो. २ H. स्पृहमा०. ३ H. पार्क्तन. ४ H. कामा.

श्रीमद्देवगुरौ सिंहासनस्थे सति भास्वति ।
प्रतिष्ठायां न लग्नानि वृत्तानि महतामपि ॥ २५३ ॥
तदा गच्छस्थसंघस्य समस्तस्य विभावरी ।
विभावरीयसी चैषा विनिद्रत्वात्क्षणादगात् ॥ २५४ ॥
प्रातश्च प्रत्युपेक्षायामुपधिं साधवस्तदा ।
अपश्यन् खंडशश्चूर्णीकृतामाखुभिरुद्भवैः ॥ २५५ ॥
प्रवर्त्तकेन विज्ञप्ते गुरूणां ते व्यजिज्ञपन् ।
दिग्वासाः स्वसमं वेषं ममापि हि चिकीर्षति ॥ २५६ ॥
तत्र प्रतिनिधौ शक्तिर्मम पूज्यप्रसादतः ।
सौवीरपूर्ण आनायि कुंभो यतित एकतः ॥ २५७ ॥
गलपिंडनतः कंठं तस्य बद्धांतरामुचन् ।
अभिमंत्र्य ततः साधूनाह सर्वत्र सांहसी ॥ २५८ ॥
खेदं कमपि माकार्षुर्भवंतः कौतुकं महत् ।
समीक्षत यदेतेषां माविदुर्विनये फलम् ॥ २५९ ॥
पादोनप्रहरे श्राद्धा नग्नस्याजग्मुरानताः ।
प्रासादाद्गुरुमस्माकं मुंचैनमिति भाषिणः ॥ २६० ॥
मद्बंधोः क्वा भवेद्बाधा न जानीमो वयं ननु ।
अज्ञानदं ततः सर्वप्रकारैस्तैर्निषेधिताः ॥ २६१ ॥
सार्द्धयामे च संपूर्णे नग्नाचार्यस्तदागमत् ।
नग्नाचार्य इवाहार्यैः प्रशंसां प्रकटं दधत् ॥ २६२ ॥
आश्लिष्यार्द्धासने सूरिरुपावेशयदत्र तम् ।
भ्रातः का बत पीडास्ति ममाज्ञातमिदं ध्रुवम् ॥ २६३ ॥
स प्राह हिंद्धि मा त्वं मां भव मा दीर्घरोषभूः ।
विमोचय निरोधं मे तन्निरोधे मृतिर्ध्रुवम् ॥ २६४ ॥
तस्यैतद्वचनं दीनं श्रुत्वावददसौ प्रभुः ।
भवान् सपरिवारोऽपि यातु मे वसतेर्बहिः ॥ २६५ ॥
तदादेशेन तद्वारे स्थिता आध्माततुंदकाः ।
लुलाया इव संपूर्णेतिस्पदंगास्तदा बभुः ॥ २६६ ॥
साधोः पार्श्वात् समानाय्य कुंभं सौवीरपूरितम् ।
आच्छोटयन्मुखं तेषां संजज्ञे मुत्कलः श्रवः ॥ २६७ ॥
अनिरोधे निरोधे सत्यसपत्राकृताश्च ते ।
नृजलस्य प्रवाहेण जनः सर्वोऽपि विस्मितः ॥ २६८ ॥
अर्हितोपि भृशं शोकतप्तस्तस्मात्पराभवात् ।
ययौ कुमुदचंद्रोऽयमदृश्यत्वममास्थि च ॥ २६९ ॥

तुष्टिदानं ददानस्य राज्ञः सूरेरगृह्णतः ।
आशुकोष्ठे गते मंत्रीराज्यारामशुकोऽब्रवीत् ॥ २७० ॥
देवैषां निःस्पृहाणां न घनेच्छा तज्जिनालयः ।
विधाप्यते यथामीषां पुण्यं तव च वर्धते ॥ २७१ ॥
भवत्वेवं नृपप्रोक्ते मंत्री चैत्यमकारयत् ।
स्वेन तेनेतरेणापि स्वामिनानुमतेन सः ॥ २७२ ॥
दिनस्तोकं च संपूर्णः प्रासादोऽभ्रंलिहो महान् ।
मेरुचूलोपमः स्वर्णरत्नकुंभध्वजालिभिः ॥ २७३ ॥
श्रीनाभेयविभोर्विंबं पित्तलामयमद्भुतम् ।
दृशामगोचरं रोचिःपूरतः सूर्यबिंबवत् ॥ २७४ ॥
अनलाष्टशिवे वर्षे ११८३ वैशाखद्वादशीतिथौ ।
प्रतिष्ठा विदधे तत्र चतुर्भिः सूरिभिस्तदा ॥ २७५ ॥
एवं प्रभावनापूरप्लाविते धार्मिणां हृदि ।
क्षेत्रेऽवपन् बोधिबीजं चिरं च व्यहरत्प्रभुः ॥ २७६ ॥
अन्यदा व्रजतोऽरण्ये नाम्ना पिप्पलवाटके ।
शार्दूलं गुरुशार्दूलो रेखायातं न्यषेधयत्[1] ॥ २७७ ॥
वालवृद्धाकुलो गच्छो विहारे प्रांतरावनौ ।
क्षुधादिबाधया तत्र क्लिष्टो दुःप्रतिकारया ॥ २७८ ॥
तदीयचिंतामात्रेण सार्थेऽकस्मादुपागते ।
प्रासुकैर्भक्तपानैस्तद्भव्यास्तं प्रत्यलाभयन् ॥ युग्मम् ॥ २७९ ॥
स्याद्वादपूर्वकं रत्नाकरं स्वादुवचोऽमृतम् ।
प्रमेयशतरत्नाढ्यममुक्त स किल श्रिया ॥ २८० ॥
पीतान्दृष्ट्वा पुरा कुंभोद्भवेनांभोनिधीनिह ।
परवादिघटोद्भूतशतागम्यं व्यधान्नवम् ॥ युग्मम् ॥ २८१ ॥
इति श्रीदेवसूरीणामसंख्यातिशयस्पृशाम् ।
वर्षाणां त्र्यधिकाशीतिरत्यक्रामदलंद्रिणाम् ॥ २८२ ॥
श्रीमद्भद्रेश्वरसूरीणां गच्छभारं समर्प्य ते ।
जैनप्रभावनास्थेमनिस्तुषश्रेयसि स्थिताः ॥ २८३ ॥
रसयुग्मरवौ वर्षे १२२६ श्रावणे मासि संगते ।
कृष्णपक्षस्य सप्तम्यामपराह्णे गुरोर्दिने ॥ २८४ ॥
मर्त्यलोकस्थितं लोकं प्रतिबोध्य पुरंदरम् ।
बोधका इव ते जग्मुर्दिवं श्रीदेवसूरयः ॥ २८५ ॥ त्रिभिर्विशेषकम् ॥
शिखिवेदशिवे ११४३ जन्म दीक्षा युग्मशरेश्वरे ११५२ ।
वेदाश्वशंकरे वर्षे ११७४ सूरित्वमभवत्प्रभोः ॥ २८६ ॥

---

१ P रेखयासृन्य.

नवमे वत्सरे दीक्षा एकविंशत्तमे तथा ।
सूरित्वं सकलायुश्च त्र्यशीतिवत्सरा अभूत् ॥ २८७ ॥
इत्थं श्रीदेवसूरेश्चरितमधरितक्षुद्रवादिप्रवादं
नादं वर्द्धिष्णुजैनप्रवचनभविनां सत्वमुत्कैरसेव्यम् ।
श्रेष्ठं श्रेयःप्रदं तद्भवतु भवभृतामद्य काले भवानां
नंद्यादाचंद्रकालं विबुधजनशतैर्नित्यमभ्यस्यमानम् ॥ २८८ ॥
श्रीचंद्रप्रभसूरिपट्टसरसीहंसप्रभः श्रीप्रभा-
चंद्रः सूरिरनेन चेतसि कृते श्रीरामलक्ष्मीभुवा ।
श्रीपूर्वर्षिचरित्ररोहणगिरौ श्रीदेवसूरेः कथा
श्रीप्रद्युम्नमुनींदुना विशदितः शृंगः कुयुग्मक्रमः ॥ २८९ ॥
अर्थं यच्छति संसृतिस्थितिमतां दुःखापनोदक्षमं
कल्पद्रुव्रजचिंतिताश्मनिवहादप्यद्भुतं यः प्रभुः ।
स श्रीमान् कनकप्रभः कथमयं शक्यो मया वर्णितुं
प्रद्युम्नो यतिनायकश्च समभूद्यन्नाममंत्रस्मृतेः ॥ २९० ॥

इति श्रीदेवसूरिप्रबन्धः ।
ग्रं० ३२५ उभयं ४८७९ ॥

---

हेमचंद्रसूरिप्रबंधः ।

श्रीहेमचंद्रसूरीणामपूर्वं वचनामृतम् ।
जीवातुर्विश्वजीवानां राजचित्तावनिस्थितम् ॥ १ ॥
पातकांतकमातंगस्पर्शदूषणभूषणाः ।
श्रीहेमचंद्रसूरीणां वाचः स्वर्णोदकच्युतः ॥ २ ॥
अनंतागमविद्यामृन्मृतस्त्रोजीवनस्थितिः ।
श्रीहेमसूरिरन्याद्रः प्रतिश्रीपादलिप्तकः ॥ ३ ॥
कृतिसद्वृत्तमुक्तास्रग्नायकश्चरितं प्रभोः ।
स्थाप्यतेऽतः प्रकाशाय सतां हृदयवेश्मसु ॥ ४ ॥
अस्ति श्रीगूर्जरो देशः क्लेशावेशवियुक्तभूः ।
पुरुषार्थत्रयश्रीषु स्वर्गोपीच्छति यत्तुलाम् ॥ ५ ॥
अणहिल्लपुरं नाम कामधुक् प्रणयिव्रजे ।
अस्ति प्रासादराजीभिर्नगरं नगरंगभूः ॥ ६ ॥
संक्रंदनसुपर्वारिद्विजिह्वा यस्य नोपमाम् ।
सुरासुरोरगाधीशाः प्रापुर्लोकेश्वरा अपि ॥ ७ ॥
स तत्र वाक्सुधासारसंप्रीणितचकोरकः ।
राजा सिद्धाधिपः सिद्धाधिपगीतयशा अभूत् ॥८॥ युग्मम् ॥
सत्पूजाभोजशृंगारप्रभावद्वरंगभूः ।
धंधूकमिव धंधूकं देशे तत्रास्ति सत्पुरम् ॥ ९ ॥

व्यूढमोढान्वयप्रौढ उदूढमहिमा दृढः ।
बाढमाढौकयद्दाढ्यं प्रौढिषु प्रौढचेतसाम् ॥ १० ॥
उत्कोचकृतसंकोच उल्लोचः सत्वमंडपे ।
श्रेष्ठी तत्राभवच्चाचः प्रवाचः पूजयन् सदा ॥ युग्मम् ॥ ११ ॥
गेहिनी पाहिनी तस्य देहिनी मंदिरेंदिरा ।
यस्याः सीतासुभद्राद्याः सत्यः सत्याः सतीत्वतः ॥ १२ ॥
सा स्त्री चिंतामणिश्चिंतामणिं स्वप्नेऽन्यदैक्षत ।
दत्तं निजगुरूणां च भक्त्यावेशनिवेशतः ॥ १३ ॥
चांद्रगच्छसरःपद्मं तत्रास्ते मंडितो गुणैः ।
प्रद्युम्नसूरिः शिष्यः श्रीदेवचंद्रमुनीश्वरः ॥ १४ ॥
आचख्यौ पाहिनी प्रातः स्वप्नमस्वप्नसूचितम् ।
तत्पुरः स तदर्थं च शास्त्रदृष्टं जगौ गुरुः ॥ १५ ॥
जैनशासनपाथोधिकौस्तुभः संभवी सुतः ।
तव स्तवकृतो यस्य देवा अपि सुवृत्ततः ॥ १६ ॥
श्रीवीतरागबिंबानां प्रतिष्ठादोहदं दधौ ।
अन्यदा सा स चापूरि सत्पत्या भूरिपुण्यतः ॥ १७ ॥
असूत सा च पुण्येऽह्नि जितवह्निप्रभं रुचा ।
मलयाचलचूले च चंदनं नंदनं मुदा ॥ १८ ॥
नानाविधध्वनत्तूर्यभरडंबरितांबरैः ।
वर्द्धापनैर्व्यतीते[1] च द्वादशाहे मुदा तदा ॥ १९ ॥
अभिधाविधिमाधित्सुः सनाभीन्भक्तितो निजान् ।
आहूय व्याहरच्चाचः[2] सदाचरणबंधुरः ॥ २० ॥
अस्मद्गृहे वितीर्णेऽत्र[3] प्रतिष्ठादोहदोऽजनि ।
एतन्मातुस्तया रम्याः पूजाभिः स्युः सुरा अपि ॥ २१ ॥
तच्चंगदेव इत्यस्य स्थानभृन्नाम सान्वयम् ।
विदधे विश्ववस्तूनां यतः सत्यं शुभायति ॥ २२ ॥
क्रमुकैः क्रोडकर्पूरैः पत्रैः सौरभनिर्भरैः ।
दत्वा नागरखंडैश्च तांबूलं तान् व्यसर्जयत् ॥ २३ ॥
वर्द्धमानो वर्द्धमान इवासौ मंगलाश्रयः ।
शिशुत्वेऽप्यशिशुप्रज्ञः सोभूदक्षतदक्षतः ॥ २४ ॥
तस्याथ पंचमे वर्षे वर्षीयस इवाभवत् ।
मतिः सद्गुरुशुश्रूषाविधौ विधुरितैनसः ॥ २५ ॥
अन्यदा मोढचैत्यांतः प्रभूणां चैत्यवंदनम् ।
कुर्वतां पाहिनि प्रायात् सपुत्रा तत्र पुण्यभूः ॥ २६ ॥

---

१ H. वर्द्धापने० २ P व्याहरच्चाचः ? ३ P वतीर्णे.

साच प्रदक्षिणां दत्त्वा यावत्कुर्युः स्तुतिं जिने ।
चंगदेवो निषद्यायां तावन्निविविशे द्रुतम् ॥ २७ ॥
स्मरसि त्वं महास्वप्नं सकृदालोकयिष्यसि ।
तस्याभिज्ञानमीक्षस्व स्वयं पुत्रेण यत्कृतम् ॥ २८ ॥
इत्युक्त्वा गुरुभिः पुत्रः संघनंदननंदनः ।
कल्पवृक्ष इवाप्रार्थि स जनन्या समीपतः ॥ २९ ॥
सा प्राह प्रार्थ्यतामस्य पिता युक्तमिदं ननु ।
ते तदीयाननुज्ञाया भीताः किमपि नाभ्यधुः ॥ ३० ॥
अलंघ्यत्वाद्गुरोर्वाचामाचारस्थितया तया ।
दूनयापि सुतः स्नेहादार्प्यत स्वप्नसंस्मृतेः ॥ ३१ ॥
तमादाय स्तंभतीर्थे जग्मुः श्रीपार्श्वमंदिरे ।
माघे सितचतुर्दश्यां ब्राह्मे धिष्ण्ये शनेर्दिने ॥ ३२ ॥
धिष्ण्ये तथाष्टमे धर्मस्थिते चंद्रे वृषोपगे ।
लग्ने बृहस्पतौ शत्रुस्थितयोः सूर्यभौमयोः ॥ ३३ ॥
श्रीमानुदयनस्तस्य दीक्षोत्सवमकारयत् ।
सोमचंद्र इति ख्यातं नामास्य गुरवो दधुः ॥ ३४ ॥
संचस्करुः परिस्कारान् प्रज्ञाप्य परमाक्षरैः ।
अर्हतैस्तेऽर्हमर्हाणां तमेकप्रणिधानतः ॥ ३५ ॥
अथेत्यमिलिते कोपकलिते कटुभाषिणि ।
प्रोचे प्राचेतसाभस्तमयं प्राशमयत् स्वयम् ॥ ३६ ॥
सोमचंद्रस्ततश्चंद्रोज्ज्वलप्रज्ञाबलादसौ ।
तर्कलक्षणसाहित्यविद्याः पर्यच्छिनद्द्रुतम् ॥ ३७ ॥
अन्यदा चिंतयत्पूर्वं परो लक्षपदानुगः ।
आसीदेकपदात्तस्माद्धिगस्मानल्पमेधसः ॥ ३८ ॥
तत आराधयिष्यामि देवीं काश्मीरवासिनीम् ।
चकोरद्विजरोचिष्णुं ज्योत्स्नामिव कलावतः ॥ ३९ ॥
इति व्यज्ञपयत्प्रातः प्रभुं विनयनम्रवाक् ।
संमुखीनागमं देव्या ध्यात्वा सोऽप्यन्वमन्यत ॥ ४० ॥
गीतार्थैः साधुभिः सार्धं धाम विद्याव्रजस्य च ।
प्रस्थानं ताम्रलिप्त्याः स ब्राह्मीदेशोपरिव्यधात् ॥ ४१ ॥
श्रीरैवतावतारे च तीर्थे श्रीनेमिनामतः ।
सार्थे साधुमते तत्रावात्सीदवहितस्थितिः ॥ ४२ ॥
निशीथेऽस्याविनिद्रस्य नासाग्रन्यस्तचक्षुषः ।
आराधनात्समक्षाभूद्ब्राह्मी ब्रह्ममहोनिधिः ॥ ४३ ॥

---

1 P यत्तदालोक.

वत्स स्वच्छमते यासीर्मास्म देशांतरं भवान् ।
तुष्टा त्वद्भक्तिपुष्ट्याऽहं सेत्स्यतीहितमत्र ते ॥ ४४ ॥
इत्युक्त्वा सा तिरोधत्त देवी वाचामधीश्वरी ।
स्तुत्या तस्या निशां नीत्वा पश्चादागादुपाश्रयम् ॥४५॥ युग्मम्
सिद्धसारस्वतोऽक्लेशात्सोमः सीमा विपश्चिताम् ।
अभूदभूमिरुन्निद्रांतरवैरिकृतद्रुहः ॥ ४६ ॥
प्रभावकधुराधुर्यममुं सूरिपदोचितम् ।
विज्ञाय संघमामंत्र्य गुरवोऽमंत्रयन्निति ॥ ४७ ॥
योग्यं शिष्यं पदे न्यस्य स्वकार्यं कर्तुमौचिती ।
असत्पूर्वेऽमुमाचारं सदा विहितपूर्विणः ॥ ४८ ॥
तदैव विज्ञदैवज्ञव्रजाल्लग्नं व्यचारय ।
विमृश्य तेऽथ व्याचख्युः सर्वोत्तमगुणं क्षणम् ॥ ४९ ॥
जीवः कर्के तनौ सूर्यो मेषे व्योम्नि बुधान्वितः ।
चंद्रो वृषे च लाभस्थो भौमो धनुषि षष्ठमः ॥ ५० ॥
धर्मस्थाने झषे शुक्रः शनिरेकादशो वृषे ।
राहुस्तृतीयः कन्यायां वैश्वविघ्नविनाशनः ॥ ५१ ॥
इति सर्वग्रहबलोपेतं लग्नं समृद्धिकृत् ।
होरा चांद्री ततः पूर्वा द्रेष्काणः प्रथमस्ततः ॥ ५२ ॥
वर्गोत्तमः शशांकांशो नवमो द्वादशस्तथा ।
त्रिंशांशो वाक्पतेः षष्ठो लग्नेऽस्मिन् गुणमंडिते ॥ ५३ ॥
प्रतिष्ठा यस्य जायेत पुरुषस्य सुरस्य च ।
राज्ञां ज्ञातो जगत्पूज्यः स भवेद्विश्वशेखरः ॥ ५४ ॥ कुलकम्
अथ वैशाखमासस्य तृतीयामध्यमेऽहनि ।
श्रीसंघनगराधीशविहितोत्सवपूर्वकम् ॥ ५५ ॥
मुहूर्ते पूर्वनिर्णीते कृतनंदीविधिक्रमाः ।
ध्वनत्तूर्यरवोन्मुद्रमंगलाचारबंधुरम् ॥ ५६ ॥
शब्दाद्वैतेथ विश्रांते समये घोषिते सति ।
पूरकापूरितश्वासंकुभकोद्भेदमेदुरा ॥ ५७ ॥
श्रवणेऽगरुकर्पूरचंदनद्रवचर्चिते ।
कृतिनः सोमचंद्रस्य निष्ठानिष्ठांतरात्मनः ॥ ५८ ॥
श्रीगौतमादिसूरीशैराराधितमबाधितम् ।
श्रीदेवचंद्रगुरवः सूरिमंत्रमचीकथन् ॥५९॥ पचभिः कुलकम् ।
तिरस्कृतकलाकेलिः कलाकेलिकुलाश्रयः ।
श्रीहेमचंद्रप्रभुः श्रीमान्नाम्ना विख्यातिमाप सः ॥ ६० ॥

---

१ H. मवो०. २ P. हेमच०.

तदा च पाहिनी स्नेहवाहिनी सुत उत्तमे ।
तत्र चारित्रमादत्ताविहस्ता गुरुहस्ततः ॥ ६१ ॥
प्रवर्त्तिनी प्रतिष्ठां च दापयामास नम्रगीः ।
तदैवाभिनवाचार्यो गुरुभ्यः सभ्यसाक्षिकम् ॥ ६२ ॥
सिंहासनासनं तस्या अन्वमानयदेप च ।
कटरे जननीभक्तिरुत्तमानां कषोपलः ॥ ६३ ॥
श्रीहेमचंद्रसूरिः श्रीसंघसागरकौस्तुभः ।
विजहारान्यदा श्रीमदणहिल्लपुरं पुरम् ॥ ६४ ॥
श्रीसिद्धभूभृदन्येद्युराजपाटिकयाचरत् ।
हेमचंद्रप्रभुं वीक्ष्य तटस्थविपणौ स्थितम् ॥ ६५ ॥
निरुध्य टिंविकासन्ने गजप्रसरमंकुशात् ।
किंचिद्भणिष्यतेत्याह प्रोवाच प्रभुरप्यथ ॥ ६६ ॥
कारय प्रसरं सिद्धहस्तिराजमशंकितम् ।
त्रस्यंतु दिग्गजाः किं तैर्भूस्त्वयैवोद्धृता यतः ॥ ६७ ॥
श्रुत्वेति भूपतिः प्राह तुष्टिपुष्टः सुधीश्वरः ।
मध्याह्ने मे प्रमोदायागंतव्यं भवता सदा ॥ ६८ ॥
तत्पूर्वं दर्शनं तस्य जज्ञे कुत्रापि स क्षणे ।
आनंदमंदिरे राज्ञा यात्राजयमभूत्प्रभोः ॥ ६९ ॥
अन्यदा सिद्धराजोऽपि जित्वा मालवमंडलम् ।
समाजगाम तस्मै चाशिषं दर्शनिनो ददुः ॥ ७० ॥
तत्र श्रीहेमचंद्रोऽपि सूरिर्भूरिकलानिधिः ।
उवाच काव्यमव्यग्रमतिश्चन्यनिदर्शनम् ॥ ७१ ॥

तथाहि-भूमिं कामगवि स्वगोमयरसैरासिंच रत्नाकरा—
मुक्तास्वस्तिकमातनुध्वमुडुप त्वं पूर्णकुंभो भव ।
धृत्वा कल्पतरोर्दलानि सरलैर्दिग्वारणास्तोरणा—
न्याधत्त स्वकरैर्विजित्य जगतीं नन्वेति सिद्धाधिपः ॥७२॥

व्याख्याविभूषिते वृत्ते वृत्ते इव विभोस्ततः ।
आजुहावावनीपालः सूरिं सौधे पुनः पुनः ॥ ७३ ॥
अन्यदावंतिकोशीयपुस्तकेषु नियुक्तकैः ।
दृश्यमानेषु भूपेन प्रैक्षि लक्षणपुस्तकम् ॥ ७४ ॥
किमेतदिति पप्रच्छ स्वाम्यपीति व्यजिज्ञपत् ।
भोजव्याकरणं ह्येतच्छब्दशास्त्रं प्रवर्त्तते ॥ ७५ ॥
असौ हि मालवाधीशो विद्वच्चक्रशिरोमणिः ।
शब्दालंकारदैवज्ञतर्कशास्त्राणि निर्ममे ॥ ७६ ॥

---

1 H. वः.

चिकित्साराजसिद्धांततरुवास्तूदयानि च ।
अंकशाकुनकाध्यात्मस्वप्नसामुद्रिकान्यपि ॥ ७७ ॥
ग्रंथान्निमित्तव्याख्यानप्रश्नचूडामणीनिह ।
विवृत्तिचायसद्भावेऽर्थशास्त्रं? मेघमालया ॥ ७८ ॥
भूपालोऽथावदत्किं नास्मत्कोशे शास्त्रपद्धतिः ।
विद्वान्कोपि कथं नास्ति देशे विश्वेपि गूर्जरे ॥ ७९ ॥
सर्वे संभूय विद्वांसो हेमचंद्रं व्यलोकयन् ।
महाभक्त्या च राज्ञासावभ्यर्थ्य प्रार्थितः प्रभुः ॥ ८० ॥
शब्दव्युत्पत्तिकृच्छास्त्रं निर्मायास्मन्मनोरथम् ।
पूरयस्व महर्षे त्वं विना त्वमत्र कः प्रभुः ॥ ८१ ॥
संक्षिप्तश्च प्रवृत्तोऽयं समयेऽस्मिन् कलापकः ।
लक्षणं तत्र निष्पत्तिः शब्दानां नास्ति तादृशी ॥ ८२ ॥
पाणिनेर्लक्षणं वेदस्यांगमित्यत्र च द्विजाः ।
अवलेपादसूयंति कोऽर्थस्तैरुन्मनायितैः ॥ ८३ ॥
यशो मम तव ख्यातिः पुण्यं च मुनिनायक ।
विश्वलोकोपकाराय कुरु व्याकरणं नवम् ॥ ८४ ॥
इत्याकर्ण्याभ्यधात् सूरिर्हेमचंद्रः सुधीनिधिः ।
कार्य्येषु नः किलोक्तिर्वः स्मारणायैव केवलम् ॥ ८५ ॥
परं व्याकरणान्यष्टौ वर्त्तंते पुस्तकानि च ।
तेषां श्रीभारती देवी कोश एवास्ति ते ध्रुवम् ॥ ८६ ॥
आनाययतु काश्मीरदेशात्तानि स्वमानुषैः ।
महाराजो यथा सम्यक् शब्दशास्त्रं प्रतन्यते ॥ ८७ ॥
इति तस्योक्तिमाकर्ण्य तत्क्षणादेव भूपतिः ।
प्रधानपुरुषान् प्रैषीद्वाग्देवीदेशमध्यतः ॥ ८८ ॥
प्रवराख्यपुरे तत्र प्राप्तास्ते देवतां गिरम् ।
चंदनादिभिरभ्यर्च्य तुष्टुवुः पाठनस्तवैः ॥ ८९ ॥
समादिक्षत्ततस्तुष्टा निजाधिष्ठायकान् गिरा ।
मम प्रसादवित्तः श्रीहेमचंद्रः सितांबरः ॥ ९० ॥
ततो मूर्त्यंतरस्येव मदीयस्यास्य हेतवे ।
समर्प्य प्रेष्यतां प्रेष्यवर्गैः पुस्तकसंचयम् ॥ ९१ ॥
ततः सत्कृत्य तान्सम्यग्भारती सचिवान्नरान् ।
पुस्तकान्यर्पयामासुः प्रैषुश्चोत्साहपंडितम् ॥ ९२ ॥
अचिरान्नगरं स्वीयं प्रापुर्देवीप्रसादिताः ।
हर्षप्रकर्षसंपन्नपुलकांकुरपूरिताः ॥ ९३ ॥

---

१ H र्थे काडं २ P करेवि० ३ P स्वामीत्तेपि. ४ P ऽर्थशास्त्रं.

सर्वं विज्ञापयामासुर्भूपालाय गिरोदिताः ।
निष्टानिष्टे प्रभौ हेमचंद्रे तोपमहादरम् ॥ ९४ ॥
इत्याकर्ण्य चमत्कारं धारयन् वसुधाधिपः ।
उवाच धन्यो मद्देशोऽहं च यत्रेदृशः कृती ॥ ९५ ॥
श्रीहेमसूरयोऽप्यत्रालोक्य व्याकरणव्रजम् ।
शास्त्रं चक्रुर्नवं श्रीमत्सिद्धहेमाख्यमद्भुतम् ॥ ९६ ॥
द्वात्रिंशत्पादसंपूर्णमष्टाध्यायमुणादिमत् ।
धातुपारायणोपेतं रंगल्लिंगानुशासनम् ॥ ९७ ॥
सूत्रसद्वृत्तिमन्नाम मालानेकार्थसुंदरम् ।
मौलिं लक्षणशास्त्रेषु विश्वविद्वद्भिरादृतम् ॥ ९८ ॥
त्रिभिर्विशेषकम् ॥

आदौ विस्तीर्णशास्त्राणि नहि पाठ्यानि सर्वतः ।
आयुषा सकलेनापि पुमर्थस्खलनानि तत् ॥ ९९ ॥
संकीर्णानि च दुर्बोधदोषस्थानानि कानिचित् ।
एतत्प्रमाणितं तस्माद्विद्वद्भिरधुनातनैः ॥ १०० ॥
मूलराजप्रभृतिभी राजपूर्वजभूभृताम् ।
वर्णवर्णनसंबद्धं पादांते श्लोकमेककम् ॥ १०१ ॥
तच्चतुष्कं च सर्वांते श्लोकैस्त्रिंशद्भिरद्भुतम् ।
पंचाधिकैः प्रशस्तिश्च विहिता विहितैस्तदा ॥ १०२ ॥ युग्मम् ॥
राज्ञः पुरपुरोगैश्च विद्वद्भिर्वाचितं ततः ।
चक्रे वर्षत्रयं वर्षे राज्ञा पुस्तकलेखने ॥ १०३ ॥
राजादेशान्नियुक्तैश्च सर्वस्थानेभ्य उद्यतैः ।
तदा चाहूय सच्चक्रे लेखकानां शतत्रयम् ॥ १०४ ॥
पुस्तकाः समलेख्यंत सर्वदर्शनिनां ततः ।
प्रत्येकमेवादीयंताध्येतृणामुद्यमस्पृशाम् ॥ १०५ ॥ विशेषकम् ॥
अंगवंगकलिंगेषु लाटकर्णाटकुंकणे ।
महाराष्ट्रसुराष्ट्रासु वत्से कच्छे च मालवे ॥ १०६ ॥
सिंधुसौवीरनेपाले पारसीकमुरंडके ।
गंगापारे हरिद्वारे काशिचेदिगयासु च ॥ १०७ ॥
कुरुक्षेत्रे कन्यकुब्जे गौडश्रीकामरूपयोः ।
सपादलक्षवज्जालंधरे च खसमध्यतः ॥ १०८ ॥
सिंहलेऽथ महाबोधे बोडे मालवकौशिके ।
इत्यादिविश्वदेशेषु शास्त्रं व्यस्तार्यत स्फुटम् ॥ १०९ ॥
चतुर्भिः कलापकम् ॥

अस्य सोपनिबंधानां पुस्तकानां च विंशतिः ।
प्राहीयंत नृपेंद्रेण काश्मीरेषु महादरात् ॥ ११० ॥

एतत्तत्र गतं शास्त्रं स्वीयकोशे निवेशितम् ।
सर्वो निर्वाहयेत्तेनादृतं देव्यास्तु का कथा ॥ १११ ॥
काकलो नाम कायस्थः कुलकल्याणशेखरः ।
अष्टव्याकरणाध्येता प्रज्ञाविजितभोगिराट् ॥ ११२ ॥
प्रभुस्तं दृष्टमात्रेण ज्ञाततत्वार्थमस्य च ।
शास्त्रस्य ज्ञापकं चाशु विदधेऽध्यापकं तदा ॥ ११३ ॥
प्रतिमासं स च ज्ञानपंचम्यां प्रेच्छनां दधौ ।
राजा च तत्र निर्व्यूढान् कंकणैः समभूषयत् ॥ ११४ ॥
निष्पन्ना अत्र शास्त्रे च दुकूलस्वर्णभूषणैः ।
सुखासनातपत्रैश्च ते भूपालेन नियोजिताः ॥ ११५ ॥
अन्यदा सत्प्रभोस्तस्य सभायां स्वःपतेरिव ।
विशुद्धेप्रातरोचिन्यामेकश्चारण आययौ ॥ ११६ ॥
अवज्ञया न कोप्यत्र संमुखं तस्य वीक्षते ।
रत्नेषु वीक्ष्यमाणेषु जरत्तृणमणेरिव ॥ ११७ ॥
अथ चासावपभ्रंशादपाठीद्दोहकं वरम् ।
तत्पुण्यदोहदं ब्राह्मी प्रसादं प्रकटं ननु ॥ ११८ ॥
तथाहि–हेमसूरि अच्छाणिते ईसरजे पंडिया ।
लच्छिवाणि महुकाणि सांपइभागी मुह मरूम् ॥ ११९ ॥
तारमुक्तेऽस्य पूर्वार्द्धौ नाम्ना पूज्य प्रजल्पनात् ।
अवज्ञाकृतिनोऽभूवन् सभ्यानां कोपतो दृशः॥ १२० ॥
मांजिष्ठाः सावधानेषु तेषु तस्य पदत्रयम् ।
उवाच चारणस्तच्च श्रुत्वा ते पुलकं दधुः ॥ १२१ ॥ युग्मम् ॥
अचिंतयंश्च वाण्यस्य चमत्कारकृदुन्नता ।
बुधस्य हि स्थितिर्यत्र तस्य स्यान्महिमा गुरोः ॥ १२२ ॥
ऊचुर्मुदा ते संभूय पुनः पठ पुनः पठ ।
पठिते प्रभवोवोचन्निःक्षोभस्त्रिः पुनः पठ ॥ १२३ ॥
चतुःकृत्वोपि पाठे तु मतं कृतिभिरादरात् ।
कोपाभासमिवाबिभ्रद्विचाराच्चारणोऽवदत् ॥ १२४ ॥
यूयं यथेष्टदातारो यदि तत्स्वानुमानतः ।
गृह्णाम्यहं गुरुं भारं वाहीक इव दुर्वहम् ॥ १२५ ॥
त्रिःपाठे दोहकस्यास्य यल्लब्धं तेन मे धृतिः ।
नैवाधिकेन कार्यं मे प्रत्युताहितहृद्रुजा ॥ १२६ ॥

---

१ P. पृच्छना. २ निर्व्यूहान् ३ H. विबुध ४ H. जरत्तृण.
५ P. मुक्तेश्च.

तस्यायुतत्रयं पूज्याः सभ्यपार्श्वाददापयन् ।
स ऊचे मे धनं पूर्णमासन्नपुरुपावधि ॥ १२७ ॥
अहं प्रतिग्रहं गृह्णे न वातोऽभ्यधिकं किल ।
इत्युक्त्वा प्रययौ सोऽथ प्रदेशं स्वसमीहितम् ॥ १२८ ॥
राज्ञा श्रीसिद्धराजेनान्यदा—युयुजे प्रभुः ।
भवतां कोऽस्ति पट्टस्य योग्यः शिष्यो गुणाधिकः ॥ १२९ ॥
तमस्माकं दर्शयत चित्तोत्कर्पाय मामिव ।
अपुत्रमनुकंपार्हं पूर्वं त्वां मास्म शोचयन् ॥ १३० ॥
आह श्रीहेमचंद्रश्च न कोप्येवं हि चिंतकः ।
आद्योप्यभूदिलापालः सत्पात्रांभोधिचंद्रमाः ॥ १३१ ॥
सज्ञानमहिमस्थैर्ये मुनीनां किं न जायते ।
कल्पद्रुमसमे राज्ञि त्वयीदृशि कृतस्थितौ ॥ १३२ ॥
अस्त्यामुष्यायणोरामचंद्राख्यः कृतिशेखरः ।
प्राप्तरेखः प्राप्तरूपसंघे विश्वकलानिधेः ॥ १३३ ॥
अन्यदादर्शयंस्तेऽमुं क्षितिपस्य स्तुतिं च सः ।
अनुक्तामाद्यविद्वद्भिर्हृल्लेखाधायिनी व्यधात् ॥ १३४ ॥
तथाहि–मात्रयाप्यधिकं किंचिन्न सहंते जिगीषवः ।
इतीव त्वं धरानाथ धारानाथ ममाकृथाः ॥ १३५ ॥
शिरोधूननपूर्वं च भूपालोत्र दृशं दधौ ।
रामे वामेतराचारो विदुषां महिमस्पृशाम् ॥ १३६ ॥
एकदृष्टिर्भवान् भूयाद्वत्स जैनेंद्रशासने ।
महापुण्योयमाचार्यो यस्य त्वं पदरक्षकः ॥ १३७ ॥
इत्युक्त्वा विरते राज्ञि रामस्यांदुपदेशकम्[1] ।
नेत्रदृष्टिर्हि दुर्मृष्या सुकृतातिशयस्पृशाम् ॥ १३८ ॥
उपाश्रयाश्रितस्यास्य महापीडापुरःसरम् ।
व्यनशद्दक्षिणं चक्षुर्नरत्नमनुपद्रवम् ॥ १३९ ॥
कर्मप्रामाण्यमालोच्य ते शीतीभूतचेतसः ।
स्थितास्तत्र चतुर्मासीमासीनास्तपसि स्थिरे ॥ १४० ॥
चतुर्मुखाख्यजैनेंद्रालये व्याख्यानमद्भुतम् ।
श्रीनेमिचरितस्यामी श्रीसंघाग्रे प्रतुष्टुवुः ॥ १४१ ॥
सुधासारवचःस्तोमाकृष्टमानसवासनाः ।
शुश्रूषवः समायांति तत्र दर्शनिनोऽखिलाः ॥ १४२ ॥
पांडवानां परिव्रज्याव्याख्याने विहितेऽन्यदा ।
ब्राह्मणा मत्सराध्माता व्याचख्युर्नृपतेरिदम् ॥ १४३ ॥

---

१ P द्दुष्पदेककं.

स्वामिन् पुरा महाव्यासः कृष्णद्वैपायनोऽवदत्।
वृत्तं युधिष्ठिरादीनां भविष्यज्ज्ञानतोद्भुतम्॥ १४४॥
तत्रेदमुच्यते स्वायुःप्रांते पांडोः सुता अमी।
हिमानिमहिते जग्मुर्हिमवद्भूधराध्वनि॥ १४५॥
श्रीकेदारस्थितं शंभुं स्नानपूजनपूर्वकम्।
आराध्य परया भक्त्या स्वांताः स्वांतमसाधयन्॥१४६॥युग्मम्॥
अमी श्वेतांबराः शूद्रा विद्रुतस्मृतिसूक्तयः।
तदुक्तवैपरीत्यातिजल्पंति निजपर्षदि॥ १४७॥
अनौचित्यकृताचाराः पुरे तेऽरिष्टमित्यदः।
भूभृता रक्षणीयाश्च दुराचाराः प्रजाकृताः॥ १४८॥
विचार्य हृदि कार्याणि विचारक विधेहि तत्।
इत्युक्त्वा विररामासौ द्विजव्यूहोऽतिधीरगीः॥ १४९॥
राजाप्याह न भूपाला अविमृश्य विधायिनः।
दर्शनानां तिरस्कारमविचार्य न कुर्वते॥ १५०॥
अनुयोज्या अमी चात्र दद्युश्चेत्सत्यमुत्तरम्।
तन्मे गौरविता एव न्याय एवात्र नः सुहृत्॥ १५१॥
हेमाचार्योपि निर्ग्रंथः संगत्यागी महामुनिः।
असूनृतं कथं ब्रूयाद्विचार्यं तदिदं बहु॥ १५२॥
एवं भवत्विति प्रोचुः प्रवीणा ब्राह्मणा अपि।
आजुहाव ततो राजा हेमचंद्रं मुनीश्वरम्॥ १५३॥
अपृच्छदथ माध्यस्थ्यात् सर्वसाधारणो नृपः।
शास्त्रे च अर्हती दीक्षा गृहीता पांडवैः किमु॥ १५४॥
सूरिरप्याह शास्त्रे न इत्यूचे पूर्वसूरिभिः।
हेमाद्रिगमनं तेषां महाभारतमध्यतः॥ १५५॥
परमेतन्न जानीमो येन शास्त्रेषु वर्णिताः।
त एव व्यासशास्त्रेपि कीर्त्यंतेऽथ परेऽपरे॥ १५६॥
राजाह तेऽपि बहवः पूर्वं जाताः कथं मुने।
अथावोचद्गुरुस्तत्र श्रूयतामुत्तरं नृप॥ १५७॥
व्याससंदर्भिताख्याने श्रीगांगेयः पितामहः।
युद्धप्रवेशकालेऽसावुवाच स्वं परिच्छदम्॥ १५८॥
मम प्राणपरित्यागे तत्र संस्क्रियतां तनुः।
न यत्र कोपि दग्धः प्राग्भूमिखंडे सदा शुचौ॥ १५९॥
विधाय न्याय्यसङ्ग्रामं मुक्तप्राणे पितामहे।
विमृश्य तद्वचस्तेंगमुत्पाद्यास्य ययुर्गिरौ॥ १६०॥

1 H. चार्हता. 2 H. स्वत्र.

अमानुषप्रचारे च शृङ्गे कुत्रापि चोन्नते ।
अमुष्यन्देवतावाणी कापि तत्रोच्चयौ तदा ॥ १६१ ॥
अत्र भीष्मशतं दग्धं पाण्डवानां शतत्रयम् ।
द्रोणाचार्य्यसहस्रन्तु कर्णसंख्या न विद्यते ॥ १६२ ॥
एतद्वयमिहाकर्ण्य विमृशामः स्वचेतसि ।
बहूनां मध्यतः केपि चेद्भवेयुर्जिनाश्रिताः ॥ १६३ ॥
गिरौ शत्रुंजये तेषां प्रत्यक्षाः सन्ति मूर्तयः ।
श्रीनासिक्यपुरे सन्ति श्रीमच्चन्द्रप्रभालये ॥ १६४ ॥
केदारे च महातीर्थे कोपि कुत्रापि तद्गतः ।
बहूनां मध्यतो धर्म्मं तत्र ज्ञानं ततः स्फुटम् ॥ १६५ ॥
स्मार्त्ता अप्यनुयुज्यन्तां वेदविद्याविशारदाः ।
ज्ञानं कुत्रापि चेद्दृष्टा नहि कस्यापि पैतृकी ॥ १६६ ॥
राजा श्रुत्वाह तत्सत्यं वक्ति जैनर्षिरेव यत् ।
अत्र ब्रूतोत्तरं तथ्यं यद्यस्ति भवतां मते ॥ १६७ ॥
अत्र कार्य्यं हि युष्माभिरेकं तथ्यं वचो ननु ।
अजल्पि यद्विचार्य्यैव कार्य्यं कार्य्यं क्षमाभृता ॥ १६८ ॥
तथाहमेव कार्य्येऽत्र दृष्टान्तः समदर्शनः ।
समस्तदेवप्रासादसमूहस्य विधापनात् ॥ १६९ ॥
उत्तरानुदयात्तत्र मौनमाशिश्रियंस्तदा ।
स्वभावे जगतो नैव हेतुःकश्चिन्निरर्थकः ॥ १७० ॥
राज्ञा सत्कृत्य सूरिश्चाभाष्यत स्वागमोदितम् ।
व्याख्यानं कुर्वतां सम्यग् दूषणं नास्ति वोण्वपि ॥ १७१ ॥
भूपेन सत्कृतश्चैवं हेमचन्द्रप्रभुस्तदा ।
श्रीजैनशासनव्योम्नि प्रचकाशे गभस्तिवत् ॥ १७२ ॥
राज्ञः सौवस्तिकोऽन्येद्युरामिगाख्यो वृथारुषम् ।
वहन् जजल्प सूरिं तं निविष्टं राजपर्षदि ॥ १७३ ॥
धर्मे वः शमकारुण्यशोभितं न्यूनमेककम् ।
व्याख्याने कृतशृङ्गारास्त्रिय आयान्ति सर्वदा ॥ १७४ ॥
भवन्निमित्तमकृतं प्रासुकं ददते च ताः ।
विकारसारमाहारं तद्ब्रह्म क स्थितं हि वः ॥ १७५ ॥
यत.–विश्वामित्रपराशरप्रभृतयो ये चाम्बुपत्राशना-
स्तेपि स्त्रीमुखपङ्कजं सललितं दृष्ट्वैव मोहं गताः ॥
आहारं सुदृढं (सघृतं) पयोदधियुतं ये भुञ्जते मानवा-
स्तेषामिन्द्रियनिग्रहो यदि भवेद्विन्ध्यः प्लवेत्सागरे ॥ १७६ ॥

अथ सूरिरुवाचात्र नेदं विद्वज्जनोचितम् ।
अविमृश्य पुरस्कारं वचः शुचिपुरोहितः ॥ १७७ ॥
यतो विचित्रा विश्वेस्मिन् प्राणिनां चित्तवृत्तयः ।
पशूनामपि चैतन्यवतां नृणान्तु किम्पुनः ॥ १७८ ॥
यतः-सिंहो वली हरिणशूकरमांसभोजी
सम्वत्सरेण रतिमेति किलैकवारम् ।
पारावतः खरशिलाकणभोजनोपि
कामी भवत्यनुदिनं बत कोऽत्र हेतुः ॥ १७९ ॥
श्रुत्वेति भूपतिः प्राहातिसाहसमिदंनृणाम् ।
य उत्तराय नालं स्यात्स यद्वदति पर्षदि ॥ १८० ॥
इति भूपालसन्मान्यो वदान्यः सुकृतार्थिनाम् ।
श्रीहेमसूरिः संजज्ञे संघोद्धारधुरन्धरः ॥ १८१ ॥
अथान्यदा महाविद्वान् श्रीभागवतदर्शिनी ।
देवबोधाख्यराशीं (आसीन्) कामिकसारस्वतोत्तरः ?॥१८२॥
आजगाम धियां धामाणहिल्लपुरमध्यतः ।
व्यजिज्ञपन्नियुक्ताश्च श्रीसिद्धाधिपतेः पुरः ॥ १८३ ॥
ततः श्रीपालमामन्त्र्य कविराजं नराधिपः ।
रहो मन्त्रयतेऽस्मासौ प्रतिपन्नं सहोदरम् ॥ १८४ ॥
देवबोधो महाविद्वान् द्रष्टव्योसौ कथं हि नः ।
निस्पृहत्वादनागच्छन् सभायां तपसोर्जितः ॥ १८५ ॥
आत्मदेशे परो विद्वानागतो यन्न पूज्यते ।
तत्क्षूणमात्मनः केन निवार्यमपकीर्तिकृत् ॥ १८६ ॥
अथाह कविराजोपि विद्वानाडम्बरी च यः ।
स कथं निस्पृहो लक्ष्मीं विनापरिकरः करम् ॥ १८७ ॥
सा विद्वद्वल्लभैर्युष्मादृशैर्भूपैर्मवेदिह ।
दत्तैव नापरः कश्चिदुपायोस्याःसमर्जने ॥ १८८ ॥
परं श्रीभारतीमत्त्यात्यादरः स्वामिनो यदि ।
तत्सुधर्म्मासधर्म्मायां पर्षद्याहूयतामसौ ॥ १८९ ॥
अस्त्वेवमिति राज्ञोक्ते प्रधानपुरुषास्ततः ।
प्राहीयंत ततस्तेनाभिहितास्ते मदोद्धतम् ॥ १९० ॥
आह्वानायागता यूयं मम भूपतिदेशतः ।
भूपालैः किं हि नः कार्य्यं स्पृहाविरहितात्मनाम् ॥ १९१ ॥
तथा काशीश्वरं कान्यकुब्जाधीशं समीक्ष्य च ।
गणयामः कथं स्वल्पदेशं श्रीगूर्जरेश्वरम् ॥ १९२ ॥

परमसद्विदृक्षायै भवतां स्वामिनस्तदा ।
उपविष्टः क्षितौ सिंहासनस्थं मां स पश्यतु ॥ १९३ ॥
एवं विसर्जितास्तेन यथावृत्तं व्यजिज्ञपत् ।
कविराजं नृपः प्राह तद्वाचातिचमत्कृतः ॥ १९४ ॥
विना जैनमुनीन् शान्तान् को न नामावलिप्तधीः ।
तारतम्याश्रिते ज्ञाने कोवकाशो मदस्य तत् ॥ १९५ ॥
द्रष्टव्यमिदमप्यस्य चेष्टितं कौतुकात्ततः ।
सश्रीपालस्ततो भूपोन्यदागच्छत्तदालये ॥ १९६ ॥
सिंहासनं समद्राक्षीद्विद्वद्वृन्दनिषेवितम् ।
मृगेन्द्रमिव दुर्धर्षं देवबोधं कवीश्वरम् ॥ १९७ ॥
दृढभक्त्या नमश्चक्रे राजा विनयवामनः ।
गुणपूर्णे सतां चित्ते नावकाशो मदस्य यत् ॥ १९८ ॥
प्रत्यक्षविश्वरूपं तं विश्वरूपवराशिषा ।
अभिनन्द्यावदत्पाणिसंज्ञयादर्शयद्भुवम् ॥ १९९ ॥
अत्रोपविश्यतां राजन् श्रुत्वेति क्ष्मापतिस्ततः ।
श्रीश्रीपालकृतं काव्यमुवाच प्रकटाक्षरम् ॥ २०० ॥

'यतः'–इहहि वसति मेरुः शेखरो भूधराणा-
मिह विनिहितभाराः सागराः सप्त चान्ये ।
इह महिपतिदम्भस्तम्भसंरम्भधीरम्
धरणितलमिहैव स्थानमस्मद्विधानाम् ॥ २०१ ॥

इत्युक्त्वा च प्रतीहारः पटास्तृतधरातले ।
उपाविशद्विशां नाथः प्रमाथो दोषविद्विषाम् ॥ २०२ ॥
पर्षदोनुचितः कोयमिति हस्तेन दर्शिते ।
कविराजे नृपोवादीदनादीनवगीर्भरः ॥ २०३ ॥
एकोहं विहितस्फीतप्रबन्धोऽयं कृतीश्वरः ।
कविराज इतिख्यातः श्रीपालो नाम भूमिभूः ॥ २०४ ॥
श्रीदुर्लभसरोराजस्तथा रुद्रमहालये ।
अनिर्वाच्यरसैः काव्यैः प्रशस्तीरकरोदसौ ॥ २०५ ॥
महाप्रबन्धचक्रेचे (च?) वैरोचनपराजयम् ।
विहस्य सद्भिरन्योपि नैवास्य तु किमुच्यते ॥ २०६ ॥
श्रुत्वेति स्मितमाधाय देवबोधकविर्जगौ ।
काव्यमेकं लसद्गर्वपर्वताधित्यकासमम् ॥ २०७ ॥

तथाहि शुक्रः कवित्वमापन्नः एकाक्षिविकलोपि सन् ।
चक्षुर्द्वयविहीनस्य युक्ता ते कविराजिता ॥ २०८ ॥

अतिशीघ्रे तथा गुम्फे भित्यन्तः पूरणाकृतौ।
कोभिमानस्ततो धीमन्नेकमस्मद्वचः शृणु॥ २०९॥
'तद्यथा' भ्रातर्ग्रामकुविन्दकन्दलयता वस्त्राण्यमूनि त्वया
गोणीविभ्रमभाजनानि बहुशोप्यात्मा किमायास्यते।
अप्येकं रुचिरं चिरादभिनवं वासस्तदा सूत्र्यते
यन्नोज्झन्ति कुचस्थलात्क्षणमपि क्षोणीभृतां वल्लभाः॥ २१०॥
समस्यां दुर्गमां कांचित्पृच्छतेति नृपोदिते।
श्रीपाल ऊचिवानेकं स्फुटं शिखरणीपदम्॥ २११॥
तत्र-कुरङ्गः किम्भृङ्गो मरकतमणिः किं किमशनि॥
तत्पाठपृष्ठ एवासाववदत्कविनायकः।
चरणतृतीय(त्रितयं)वृत्ते को विलम्बोत्र(स्त्व)मूदृशि॥२१२॥
तद्यथा-चिरं चित्तोद्याने चरसि च मुखाब्जं पिबसि च
क्षणादेणाक्षीणां विषयविषमुद्रां हरसि च।
नृप त्वं मानाद्रिं दलयसि च किं कौतुककरः
कुरङ्गः किंभृङ्गो मरकतमणिः किं किमशनिः॥ २१३॥
गृहाण चैकं मत्पार्श्वे किंशब्दं व्यवहारतः।
दौस्थ्यं यत्र भवेद्यस्याधमर्णो न स तत्र किम्॥ २१४॥
निगद्यन्ते समस्याश्चामूदृश्यो विषमार्थकाः।
एकपादा द्विपादा च त्रिपदी च बुधोचिताः॥ २१५॥
किं शब्दबहलास्त्वेताः शून्यप्रश्ननिभा नृप।
सदृक्षा भणितेरस्य निंद्या कोविदसम्पदाम्॥ २१६॥
तथाहि—
पौत्रः सोपि पितामहः। सहस्रशीर्षा पुरुषः सहस्राक्षः सहस्रपात्।
नभः कर्पूरपूराभं। चन्द्रो विद्रुमपाटलः। कज्जलं क्षीरसङ्काशं।
वाचानुपदमेवासौ ताः पुपूरे कवीश्वरः।
सिद्धसारस्वतानां हि विलम्बकविता कुतः॥ २१७॥
'ताश्च'-मूर्तिमेकां नमस्यामः शम्भोरम्भोमयीमिमाम्।
अब्जोत्पन्नतया यस्याः पौत्रः सोपि पितामहः॥ २१८॥
चलितश्चकितो भीतस्तव देव प्रयाणकः।
सहस्रशीर्षा पुरुषः सहस्राक्षः सहस्रपात्॥ २१९॥
नभः कर्पूरपूराभं चन्द्रो विद्रुमपाटलः।
कज्जलं क्षीरसङ्काशं करिष्यति शनैः शनैः॥ २२०॥
इत्थं गोष्ठ्या महाविद्वन् शिरः कम्पकृता तदा।
कियंतमपि निर्वाह्य क्षणं सौधं ययौ नृपः॥ २२१॥
अन्यदा श्रीदेवसूरिजितवादक्षणे मुदा।
दत्ते वित्ते नरेन्द्रेण लक्षसंख्ये तदुत्कृते॥ २२२॥

अपरेणापि वित्तेन जैनप्रासादउन्नते ।
विधापिते ध्वजारोप्यविधानाख्यमहामहे ॥ २२३ ॥
देवबोधोपि सत्पात्रं तत्राहूयत हर्षतः ।
समायातेन भूपेन धर्मे ते स्युः समायतः ॥ २२४ ॥
श्रीजयसिंहमेवाख्यमहेशभुवनाग्रतः? ।
आगच्छन् शङ्करं दृष्ट्वा शार्दूलपदमातनोत् ॥ २२५ ॥
यतः-एको रागिषु राजते प्रियतमादेहार्द्धहारी हरो
श्रीमद्राजविहारेसावाययावुत्सवोन्नते ।
दृष्ट्वार्हतं द्वितीयञ्च पदं प्रणिजगाद सः ॥ २२६ ॥
नीरागेषु जिनो विमुक्तललनासङ्गो न यस्मात्परः ।
ततस्तत्र महापर्षत्पार्षद्यान् बुधशेखरान् ।
सावहेलं समीक्ष्याह खज्ञानासाविलप्तधीः? ॥ २२७ ॥
तद्यथा-दुर्वारस्मरघस्मरोरगविषव्यासंगमूढो जनः ।
शेषः कामविडम्बितो न विषयान्भोक्तुं न मोक्तुं क्षमः ॥२२८॥
भद्रासने समासीनः शक्तिः प्रकटनाकृते ।
आह भूपं नरं कञ्चिदानाययत पामरम् ॥ २२९ ॥
राज्ञादिष्टः प्रतीहारस्तत्क्षणादानयद्द्रुतम् ।
श्रीसिद्धाधीशकासारात्कंञ्चित्कासारवाहकम् ॥ २३० ॥
भगवानपि पप्रच्छ किंते परिचयोक्षरे ।
कियानप्यस्ति स प्राह प्रज्ञातिसदृशं वचः ॥ २३१ ॥
स्वामिन्नाजन्मनो शिक्षे थाजा इत्यक्षरे विना ।
रक्ताक्षवाहो रक्ताक्षस्तत्पुच्छास्यगतागतान् ॥ २३२ ॥
उवाच विदुषां नाथो देवबोधस्तृतीयके ।
उत्तमाङ्गे करं न्यस्यामुष्य वाक् श्रूयतां जनैः ॥ २३३ ॥
ततो दत्तावधानेषु सभ्येषु स्थिरधीरगीः ।
काव्याभ्यासीव महिषी महामात्योऽब्रवीदिदम् ॥ २३४ ॥
तं नौमि यत्करस्पर्शाद्यामोहमलिने हृदि ।
सद्यः सम्पद्यते गद्यपद्यबन्धविदग्धता ॥ २३५ ॥
इत्याकर्ण्य सकर्णेषूत्कर्णेष्वेतिचमत्कृतैः ।
द्रव्यलक्षं ददौ सिद्धाधीश्वरोस्य कवीशितुः ॥ २३६ ॥
आप्तास्तदीयवैरस्यात् श्रीपालोपि कृतिप्रभुः ।
वृत्तान्यन्वेषयत्यस्यास्तयागर्भमनामनाक् ॥ २३७ ॥
अन्यदात्यद्भुतं चारैर्भगवच्चरितं किल ।
महन्निन्द्यमवज्ञेयं सम्यग् विज्ञातमौच्यत ॥ २३८ ॥

अश्रद्धेयं वचः श्रद्धातव्यमस्तप्रतीतितः ।
प्रत्यक्षं यद्दृशा दृष्टमपि सन्देहयेन्मनः ॥ २३९ ॥
वेदगर्भः सोमपीथी दग्ध्वा यज्ञोपवीतकम् ।
अपिबद्गाङ्गनीरेण प्राप्तभागवतव्रतः ॥ २४० ॥
असौ यत्याश्रमामासाचारः सारस्वते तटे ।
निशीथे स्वपरीवारवृतः पिबति वारुणीम् ॥ २४१ ॥
राजा बुधः कविः शूरो गुरुर्वक्रः शनैश्चरः ।
अस्तं प्रयाति वारुण्यासङ्गी चित्रमयं तु नः ॥ २४२ ॥
अथाह कविराजोऽपि संभ्रमोद्भ्रान्तलोचनः ।
कथं हि जाघटीत्येतच्छ्रद्धेयं नापि वीक्षयत् ॥ २४३ ॥
अस्य तुर्याश्रमस्थस्य भोगैर्व्यवहृतैरपि ।
नार्थस्तद्दर्शनाचारविरुद्धैस्तु किमुच्यते ॥ २४४ ॥
तेऽप्यूचुः स्वदृशालोक्य वयं ब्रूमो न चान्यथा ।
यस्यादिशत तस्याथ वीक्षयामः प्रतिज्ञया ॥ २४५ ॥
श्रीपालोऽप्यूचिवान् श्रीमज्जयसिंहनरेशितुः ।
अद्य दर्शयत श्यामोत्तरार्धे तत्र सङ्गते ॥ २४६ ॥
ओमिति प्रतिपन्ने च तैर्नृपाग्रे यथातथम् ।
व्यजिज्ञपदिदं सर्वं सिद्धसारस्वतः कविः ॥ २४७ ॥
इत्याकर्ण्याह भूपालः सत्यं चेन्मम दर्शय ।
इदं हि न प्रतीयेत साक्षाद्दृष्टमपि स्फुटम् ॥ २४८ ॥
अर्धरात्रे ततो राजा प्रसर्प्य प्रेक्षिताध्वना ।
अवन्तिसैकतं प्राप दुःप्रापं कातरैर्नरैः ॥ २४९ ॥
वृक्षवल्लीमहागुल्मांतरेतो यावदीक्ष्यते ।
भूपस्तावद्ददर्शामुमुन्मत्तानुचराश्रितम् ॥ २५० ॥
यथेच्छं गीयमानत्वादव्यक्तध्वनिसंभृतम् ।
चषकास्यस्फुरन्मद्यप्लुतवक्त्रसखीसखम् ॥ २५१ ॥ 'युग्मम्'
प्रतीतः सिद्धराजोऽपि दृष्ट्वेदमतिवैशसम् ।
विचिकित्सां दधौ चित्ते नासाक्षणनपूर्वकम् ॥ २५२ ॥
अहो संसारवैचित्र्यं विद्वांसो दर्शनाश्रिताः ।
इत्थं विलुप्तमर्यादाः कुर्वते कर्म कुत्सितम् ॥ २५३ ॥
इदानीं यद्यहं साक्षादेनं नो जल्पयाम्यथ ।
प्रातः किमेष मन्येत दुश्चरित्रमिदं ननु ॥ २५४ ॥
इति ध्यायत एवास्य वाणी भूपस्य कर्णयोः ।
प्राविशत् प्रकटा कोटिं रसप्रासातिकेलितः ॥ २५५ ॥
वीक्ष्य प्रान्तदृशं स्वेशं तत्तेजः प्रसरोज्वला ।
विभात्यनु प्रयातिस्म ज्योत्स्नाकटसतीस्वितिः ॥ २५६ ॥

प्रसन्नास्वादमत्यंतप्रसन्नास्वादमेककम् ।
विधायाथ निजं स्थानं गम्यतेऽथ विरम्यते ॥ २५७ ॥
इतिस्मृतिमनुक्त्वा यः प्रकटं वदति स तम् ।
अपि नः संविभागेषु कः स्वादेषु पराङ्मुखः ॥ २५८ ॥
क्षणं ध्यात्वा समुत्पन्नप्रतिभः प्रोचिवानिति ।
भवता निधिना भूप दिष्ट्या वर्द्धामहे वयम् ॥ २५९ ॥
सौवर्णपात्रमापूर्यार्पितं तेनाथ भूभृता ।
यावत्समीक्षते तावत्क्षीरपूर्णं व्यलोकयत् ॥ २६० ॥
पपावथामृतास्वादं व्यमृशद्भूपतिः क्षणम् ।
इदं दुग्धं नु मद्यं वा शक्त्यापावृत्त तद्रसम् ॥ २६१ ॥
चेत्परावृत्तमस्याहो शक्तिप्रातिभमद्भुतम् ।
ततो विससृजे तेनाऽवसरोयं मनीषिणा ॥ २६२ ॥
प्रातर्भूपसभां गत्वा देवबोधस्ततोऽवदत् ।
आपृच्छयसे महाराज वयं तीर्थयियासवः ॥ २६३ ॥
श्रीसिद्धभूपतिः प्राह भवादृशमुनीश्वराः ।
देशस्य शान्तिनीरं कः प्रहेष्यति सकर्णकः ॥ २६४ ॥
आह सोप्यर्थवादेन कृतं यत्र कृतीश्वरः ।
प्रत्येति खलभाषाभिः स्थितिस्तत्र न युज्यते ॥ २६५ ॥
कुलविद्यावयोज्ञानशक्तयश्चेन्नरं नहि ।
व्यावर्तयन्ति सन्निद्यकर्म्मभ्यस्तत्पुरे हि किम् ॥ २६६ ॥
देवा देव्यो महामन्त्रा विद्याश्चानेकशो वशे ।
येषां ताः सिद्धयश्चाष्टौ कलपस्तैर्वाग्जनैर्हि किम् ॥ २६७ ॥
ततो भूपाल नासादृग्योग्या पर्षत्तव स्फुटम् ।
ईदृग्ग्रामनटग्राम्ये संयोगः सदृशोऽस्तु वः ॥ २६८ ॥
साकूतमवदद्भूपः श्रीपालं कविपुङ्गवम् ।
शुश्रुवे शमिनो वाक्यं कोपगर्भं ननु त्वया ॥ २६९ ॥
प्रज्ञाचक्षुः कविर्दध्यौ कार्यसन्मानदण्डितः ।
भिक्षुरेष क्रियाभ्रष्टः स्रस्तरूपो यथा भवेत् ॥ २७० ॥
उवाच च महाराजाचिन्त्यशक्तिभृतोह्यमी ।
महाप्रभावा मुनयो न प्रहेया स्वदेशतः ॥ २७१ ॥
नहि द्रव्येण विद्वांस आवर्ज्यन्ते न चाटुभिः ।
परिज्ञातस्वभावा हि सद्भावत्सल्येन केवलम् ॥ २७२ ॥
श्रुत्वा श्रव्यं वचस्तथ्यं स्वशिरो मुनिपादयोः ।
स्पर्शयित्वा जगौ वाक्यं राजा विनयसंभृतम् ॥ २७३ ॥
मुनिः सद्वृत्त माहात्म्याद्भूपालाः पालकाः क्षितेः ।
वासवा इव शोभन्ते तत्र हेतुर्नहीनरः ॥ २७४ ॥

अस्मद्देशान्तरा तिष्ठ क्रियानिष्ठ मुनीश्वर ।
अर्थिप्रणयभंगं हि महात्मानो न कुर्वते ॥ २७५ ॥
इत्थं गिरां भरैः प्रीतोऽवातिष्ठत गुरुस्तदा ।
तिस्रः समाः समासन्ना दरिद्रश्च शनैरभूत् ॥ २७६ ॥
तस्य न क्रेयविक्रेयव्यवहाराद्धनागमः ।
राजदत्तं हि भुज्येत तद्विना दौस्थ्यमाययौ ॥ २७७ ॥
सूरेः श्रीहेमचन्द्रस्य विदितं वृत्तमप्यभूत् ।
श्रीश्रीपालश्च तत्पार्श्वमन्त्रयत्तदिदं रहः ॥ २७८ ॥
असौ भिक्षुर्निजाचारभ्रष्टो नष्टः क्रियाकुधीः ।
निष्ठानिष्ठयतिव्यूहादृश्यवक्त्रः कुवृत्तभूः ॥ २७९ ॥
दारिद्र्यराजधानीत्वादिदानीमृणजर्जरः ।
मदोद्धतमहालोललोलावशविनष्टभूः ॥ २८० ॥
अधुना सपरीवारो भिक्षया भुक्तिभाक्ततः ।
दर्शनी दर्शनाचारे स्थापितो निजलक्षणैः ॥ २८१ ॥
सिद्धीनामष्टसंख्यानां षड्द्वयुस्तस्य सद्गुणैः ।
अणिमा लघिमा च द्वे योषे प्रापतुरद्भुतम् ॥ २८२ ॥
श्रीसिद्धाधीश्वरं मूर्त्तं देवेन्द्रमिव तेजसा ।
सौधमौलिस्थकाकोल इव सिंहासने स्थितः ॥ २८३ ॥
वर्णाश्रमगुरुं भूमावुपवेशयति स यः ।
निर्विवेकस्य तस्यैतन्मान्यावज्ञालताफलम् ॥ २८४ ॥
मया चाश्रावि तन्मन्त्रोऽयद्रणोपद्रवो हि नः ।
राज्यपूज्यं हेमचन्द्रं विना नः प्रतिहन्यते ॥ २८५ ॥
तदसौ चेत्समायाति पूज्यपार्श्वे ततोपि नः ।
मान्योसौ पतितस्यास्य वक्त्रं कः प्रेक्षते सुधीः ॥ २८६ ॥
अथोचुर्गुरवो यूयं यज्जल्पत तदेव तत् ।
एकत्रास्य गुणेनास्तु बहुमानः परत्र नः ॥ २८७ ॥
दृश्यते नान्यसामान्यं संक्रामितगुणोत्तरम् ।
सारस्वतं न कुत्रापि समयेस्मिन्नमुं विना ॥ २८८ ॥
ततोसौ निर्विषः सर्प इव चेदागमिष्यति ।
म्लानमानकृतो धीमान् लभ्यानेनापि सत्कृतिः ॥ २८९ ॥
अथाह कविराजोपि गुणमेवेक्षते महान् ।
कृष्णवत्कृष्णमुक्तासु श्वदन्तधवलत्ववत् ॥ २९० ॥
स्वाभिप्रायो मया प्रोचे पुनः पूज्यैर्बहुश्रुतैः ।
यथाविचारं कार्याणि कार्याणि गरिमोचितम् ॥ २९१ ॥

---

१ P. कृतोधीमन्.

अन्यदाभिनवग्रन्थगुम्फाकुलमहाकवौ ।
पट्टिकापट्टसंघातलिख्यमानपदव्रजे ॥ २९२ ॥
शब्दव्युत्पत्तयेऽन्योन्यं कृतोहापोहबन्धुरे ।
पुराणकविसंदृष्टदृष्टान्तीकृतशब्दके ॥ २९३ ॥
ब्रह्मोल्लासनिवासेऽत्र भारतीपितृमन्दिरे ।
श्रीहेमचन्द्रसूरीणामास्थाने सुस्थकोविदे ॥ २९४ ॥
क्षुधातुरः परीवारः प्रेरितः स परेद्यवि ।
अपराह्णे समागच्छत्प्रतीहारनिवेदितः॥२९५॥ चतुर्भिः कलापकम्।
अभ्युत्तस्थुश्च ते देवबोधविद्वन्मतल्लिकाम् ।
मन्त्रौषधिप्रभास्तब्धवह्निवच्छीततेजसम् ॥ २९६ ॥
स्वागतं स्वागतं विद्वत्कोटीरजगतीश्रुतः ।
कृतपुण्यं दिनं यत्र जातस्त्वं लोचनातिथिः ॥ २९७ ॥
तदलंक्रियतामद्यार्द्धासनं नः कलानिधेः ।
संकटेष्वपि निर्व्यूढकला(ः) प्रागल्भ्यभूषिताः ॥ २९८ ॥
श्रुत्वेति देवबोधोपि दध्यौ मे मर्म वेत्त्यसौ ।
कथनात्कथनातीतकलातो वा न विद्महे ॥ २९९ ॥
यथा तथा महाविद्वानसौभाग्यश्रियोर्जितः ।
अत्र को मत्सरः स्वच्छे बहुमानः शुभोदयः ॥ ३०० ॥
समयेऽद्यतने कोऽस्य समानः पुण्यविद्ययोः ।
गुणेषु कः प्रतिद्वन्द्वी तस्मात्प्राञ्जलयोचिताः ॥ ३०१ ॥
अथोपाविशदेतेनाऽनुमतेऽर्द्धासने कृती ।
मनसा मन्यमानश्च पुंरूपां तां सरस्वतीम् ॥ ३०२ ॥
सविस्मयं गिरं प्राह सारसारस्वतोज्ज्वलः ।
पार्षद्यपुलकांकूरघनाघनघनप्रभाम् ॥ ३०३ ॥
तथाहि–पातु वो हेमगोपालः कम्बलं दण्डमुद्वहन् ।
षड्दर्शनपशुग्रामं चारयन् जैनगोचरे ॥ ३०४ ॥
व्याधूतशिरसः श्लोकमेनं सामाजिका ह्यदा ।
श्रुत्वा सत्यार्थपुष्टिं च तेऽतुलं विस्मयं दधुः ॥ ३०५ ॥
ततः श्रीपालमाकार्य्यालेहयत्तेन स प्रभुः ।
आद्यो धर्मो व्रतस्थानां विरोधोपशमः खलु ॥ ३०६ ॥
अस्य वृत्तं ततः श्रीमज्जयसिंहनरेशितुः ।
ज्ञापयित्वा च तत्पार्श्वाद्द्रव्यलक्षमदापयत् ॥ ३०७ ॥
अन्यदर्शनसम्बद्धविद्वत्प्रणतितस्तदा ।
प्रहीणभाग्यशक्त्यायुःस्थितिं स्वां सुविमृश्य सः ॥ ३०८ ॥

१ P °द्वरः.

तत्रतत्रानृणो भूत्वा देवबोधो महामतिः ।
तेन द्रव्येण गंगायां गत्वासाध्नोत्परं भवम् ॥ ३०९ ॥ युग्मम् ॥
अन्यदा सिद्धभूपालो निरपत्यतयार्दितः ।
तीर्थयात्रां प्रचक्रामानुपानत्पादचारतः ॥ ३१० ॥
हेमचन्द्रप्रभुस्तत्र सह्वानीयत तेन च ।
विना चन्द्रमसं किंस्यान्नीलोत्पलमतन्द्रितम् ॥ ३११ ॥
द्विधा चरणचारेण प्रभुर्गच्छन्न दृश्यते ।
शनैर्यान् जीवरक्षार्थं मूर्तिमानिव संयमः ॥ ३१२ ॥
अर्थितैर्वाहनारोहे निषिद्धश्चरितस्थितैः ।
किञ्चिदूनो जड़ा यूयमिति तानाह सौहृदात् ॥ ३१३ ॥
प्राकृतेनोत्तरं प्रादाद्द्वयं निजडा इति ।
राजा चमत्कृते दध्यावूचेऽसौ सजडा जडाः ॥ ३१४ ॥
वयन्तु सुधियः स्वीयस्वाचारं दधतो ननु ।
निजडा इत्यहो सूरेः ध्वनिव्याख्यातिचातुरी ॥ ३१५ ॥
दिनत्रयमसंजग्मुर्नृपस्याध्वनि सोपि च ।
कुपितानि च विज्ञाय सान्त्वनाय तदागमत् ॥ ३१६ ॥
प्रतिसीरांतरस्थानामाचामाम्लेन भुञ्जताम् ।
तामपावृत्य भूपालोऽपश्यत्तदशने विधिम् ॥ ३१७ ॥
अहो जितेन्द्रिया एते क्लिन्नमन्नं हि नीरतः ।
आकृष्य गृह्णते तद्दुश्चरमेतत्तपो ध्रुवम् ॥ ३१८ ॥
अज्ञानमेव लोकोऽयममून्मिष्टान्नभोजिनः ।
भक्तेरतिशयान् भव्यलोकानां वदति ध्रुवम् ॥ ३१९ ॥
ध्यात्वेत्याह भवद्देहव्यथोच्छेदाय कर्कशम् ।
नामक्तेरुक्तमित्यागः पुन्नाग क्षम्यतां मम ॥ ३२० ॥
सूरिः प्राह महाराज कुर्याद्गीः किं खराप्रिया ।
अरक्तद्विष्टवृत्तानां नृपतेर्दुर्गतस्य वा ॥ ३२१ ॥
यतः–भुञ्जीमही वयं भैक्ष्यं जीर्णं वासो वसीमहि ।
शयीमहि महीपृष्ठे कुर्वीमहि किमीश्वरैः ॥ ३२२ ॥
सम्मान्य तांस्ततो राजा स्थानं सिंहासनाभिधम् ।
दत्वा द्विजेभ्य आरूढः श्रीमच्छत्रुंजये गिरौ ॥ ३२३ ॥
श्रीयुगादिप्रभुं नत्वा तत्राभ्यर्च्य च भावतः ।
मेने स्वजन्म भूपालः कृतार्थमितिहर्षभूः ॥ ३२४ ॥
ग्रामद्वादशकं तत्र ददौ तीर्थस्य भूमिपः ।
पूजायै यन्महांतस्तां चानुमानेन कुर्वते ॥ ३२५ ॥

१ P द्विधाचरेण प्रभुर्गच्छन्नदृश्यत.

ततश्च गिरिमार्गेणाचिराद्रैवतकाचलम् ।
निकषानिकषः पुण्यवतां भर्ता भुवोऽगमत् ॥ ३२६ ॥
स प्रदापयदावासान् संकलग्रामसन्निधौ ।
गिरिं तत्र स्थितोपश्यन्नेत्रामृतरसायनम् ॥ ३२७ ॥
तदा श्रीनेमिचैत्यस्य पर्वतोर्द्धभुवि स्थितः ।
जीर्णोद्धारे कारिते च श्रीमत्सज्जनमन्त्रिणा ॥ ३२८ ॥
प्रासादं धवलं दृष्ट्वा राज्ञा पृष्टः स चाब्रवीत् ।
तीर्थप्रभावनाहर्षवशसम्फुल्ललोचनः ॥ ३२९ ॥
देवयादवसद्वंशावतंसस्य जिनेशितुः ।
प्रासादः स्वामिपादानां कृतिरेषा समीक्ष्यते ॥३३०॥ युग्मम् ।
नृपतिः प्राह जाने श्रीहेमचन्द्रोपदेशतः ।
उज्जयन्तमहातीर्थे श्रीनेमिस्तत्रतीर्थकृत् ॥ ३३१ ॥
जगत्पूज्यैः कृतिर्मेस्तु कथमेषेतिसंशये ।
श्रुत्वेत्यमात्य आहसावधानादवधार्य्यताम् ॥ ३३२ ॥
अद्य प्राङ्नवमे वर्षे स्वामिनाधिकृतः कृतः ।
आरुरोह गिरिं जीर्णमद्राक्षं च जिनालयम् ॥ ३३३ ॥
प्रतिवर्षं नृलक्ष्मीं च व्ययित्वा चैत्यमुद्धृतम् ।
स्वामिपादैरनुमतं चेत् प्रमाणमिदं न चेत् ॥ ३३४ ॥
सप्तविंशतिलक्षांश्च द्रम्मान् गृह्णातु भूपतिः ।
इत्याकर्ण्य प्रभुः प्राह पुलकोद्भेदमेदुरः ॥ ३३५ ॥
कथमुक्तमिदं मन्त्रिन् तुच्छं द्रव्यादशाश्वतात् ।
वपुःस्थिरं ममाकार्षीः पुण्यकीर्तिमयं महत् ॥ ३३६ ॥
त्वत्समः स्वजनः कोन्यो ममेह परलोकयोः ।
सखे विषीद मा तस्मादस्मिन्नारुह्यते ततः ॥ ३३७ ॥
वचोनुपदमीशश्चाधित्यकायां ययौ गिरेः ।
मण्डपे शुद्धमेदिन्यां स्थित्वाष्टांगं नतो जिनम् ॥ ३३८ ॥
पीठेष्वानीयमानेषु न्यवारयत तं जनम् ।
तीर्थेऽत्र नोपवेष्टव्यं परेणाप्यासनादिके ॥ ३३९ ॥
स्वापस्तल्पे विधेयो न भुक्तौ नार्दनिका तथा ।
स्त्रीसङ्गः सूतिकर्मापि न दध्मोथ विलोडनम् ॥ ३४० ॥
इत्यादिसिद्धमर्य्यादा वर्त्ततेद्यापि शाश्वती ।
ततोऽभ्यर्च्य जिनं स्वर्णरत्नपुष्पोत्करैर्वरैः ॥ ३४१ ॥

---

१ P omits this line. २ P has दारिद्र्यौघविनाशायासुखसंपत्तिदायकः । after जिनेशितुः । ३ H D त्वप्रभुः ४ P नादुनिका.

ततोऽम्बाशिखरं गत्वा तां प्रपूज्य ननाम च ।
अवलोकनशृंगं चारुरोह स तु कौतुकी ॥ ३४२ ॥
तत्र श्रीनेमिनाथं च नत्वा भक्तिभरानतः ।
दिशोऽवलोकयामास तत ऊचे स चारणः ॥ ३४३ ॥
यतः–मइं नायं सीथेसजंचडिउगिरनारसिरि ।
अलइआचारुदेसअलिकुंजो अइ कर्णऊत्र ॥ ३४४ ॥
पर्वतादवतीर्याधः श्रीसोमेश्वरपत्तनम् ।
ययौ श्रीहेमचन्द्रेण सहितश्च शिवालयम् ॥ ३४५ ॥
सूरिश्च तुष्टुवे तत्र परमात्मस्वरूपतः ।
ननाम चाविरोधो हि मुक्तेः परमकारणम् ॥ ३४६ ॥
'तथाहि'–यत्र तत्र समये यथा तथा योसि सोस्यभिधया यया तया ।
वीतदोषकलुषः स चेद्भवानेक एव भगवन्नमोऽस्तुते ॥ ३४७ ॥
महादानानि दत्वा च पूजाश्च महिमाद्भुताः ।
व्यावृत्तः कोटिनगरं प्रापदंबिकयाहृतम् ॥ ३४८ ॥
अपत्यचिन्तयाक्रान्तोऽबिंकामाराधयत्ततः ।
श्रीहेमसूरिभिर्ब्रह्ममूलावासैरिहादरात् ॥ ३४९ ॥
उपोष्य त्रिदिनान्ते चाह्वयंस्तां शासनामरीम् ।
प्रत्यक्षीभूय सा प्राह शृणु वाचं मुने मम ॥ ३५० ॥
नास्यास्ति संततेर्भाग्यं जीवोऽपीदृग् न पुण्यभूः ।
समयेऽत्र कुमारस्य भूपभ्रातृसुतस्य च ॥ ३५१ ॥
स भावी भूपतिः पुण्यप्रतापमहिमोर्जितः ।
राज्यांतराणि जेतासौ भोक्ता च परमार्हतः ॥ ३५२ ॥
अणहिल्लपुरं प्रायादनायासोत्सवोदयम् ।
अंतर्दूनसुताभावप्रजापीडनशंकितः ॥ ३५३ ॥
इतः श्रीकर्णभूपालबंधः क्षत्रशिरोमणिः ।
देवप्रसाद इत्यासीत्प्रसाद इव संपदाम् ॥ ३५४ ॥
तत्पुत्रः श्रीत्रिभुवनपालः पालितसद्व्रतः ।
कुमारपालस्तत्पुत्रो राज्यलक्षणलक्षितः ॥ ३५५ ॥
अथ श्रीसिद्धभूमीशः पुत्राशाभंगदुर्मनाः ।
आह्वाययत देवज्ञान् परमज्ञानिसंनिभान् ॥ ३५६ ॥
ग्रहचाराय सद्भावप्रश्नच्चूडामणिक्रमैः ।
केवलीभिश्च संवाद्य तेऽथाचख्युः प्रभोः पुरः ॥ ३५७ ॥
स्वामिन् कुमारपालोऽसौ युष्मद्बंधुषु तु ध्रुवम् ।
अलंकरिष्यते राज्यमनुत्वा न चलेदिदम् ॥ ३५८ ॥
प्रतापाक्रान्तदिक्चक्रेऽनेकभूपालजित्वरः ।
भविष्यति पुनस्तस्य पश्चाद्राज्यं विनक्ष्यति ॥ ३५९ ॥

श्रुत्वेतिभूपतिर्भाव्यं भवतीति विदन्नपि ।
तत्र द्वेषं परं बोढा वधेच्छुरभवत्ततः ॥ ३६० ॥
कथंचिदिति स ज्ञात्वापसृत्य शिवदर्शने ।
जटामुकुटवान् भस्मोद्धूलनः सत्तपो दधे ॥ ३६१ ॥
विज्ञप्तमन्यदाचारैर्जटाधरशतत्रयम् ।
अभ्यागादस्ति तन्मध्ये भ्रातृपुत्रो भवद्रिपुः ॥ ३६२ ॥
भोजनाय निमन्त्र्यन्ते ते सर्वेपि तपोधनाः ।
पादयोर्यस्य पद्मानि ध्वजश्छत्रं स ते द्विषन् ॥ ३६३ ॥
श्रुत्वेत्याव्हाप्य तान् राजा तेषां प्राक्षालयत्स्वयम् ।
चरणौ भक्तितो यावत्तस्याप्यवसरोऽभवत् ॥ ३६४ ॥
पद्मेषु दृश्यमानेषु पदयोर्दृष्टिसंज्ञया ।
ख्यातेत्र तैर्नृपोजानात्कुमारोपि बुबोध तत् ॥ ३६५ ॥
ततः कमण्डलुं हस्ते कृत्वा प्रस्तावदम्भतः ।
बहिर्भूय नृपावासादुपलक्षणभीर्दिने ॥ ३६६ ॥
बसतिं हेमसूरीणां त्रस्तः स्रस्तवपुर्बलः ।
आययौ भूपते रक्ष रक्षेत्याख्यन् स्खलद्द गिरा ॥ ३६७ ॥
प्रभुभिः साहसात्ताडपत्रलक्षांतराहितः ।
राजमर्त्यैः पदायातैर्व्यालोकि नतु वीक्षितः ॥ ३६८ ॥ युग्मम्
निश्याकृष्य प्रेषितश्च प्रायाद्देशान्तरं पुनः ।
प्राग्वदागात् साहसिक्यमहो भाग्यस्य लक्षणम् ॥ ३६९ ॥
तथा निर्गत्य तस्मात्तु वामदेवतपोधने ।
तत्तीर्थस्नानदम्भेन जटी प्रायादपायभीः ॥ ३७० ॥
आलिनाम्नः कुलालस्य यावदालयसन्निधौ ।
आययौ पृष्ठतोलग्नात् सादिनस्तावदैक्षत ॥ ३७१ ॥
आह प्रजापते रक्ष शरणागतवत्सल ।
मां संकटादतो रक्ष तत्रैमागतमेव यत् ॥ ३७२ ॥
स च चिन्तितनीवाहकोणे संस्थाप्य तं तदा ।
मुमोच वह्निमह्नाय विमुच्य तदवस्थितिम् ॥ ३७३ ॥
स तुरङ्गिभिरायातैः पृष्टः कोपिजटाधरः ।
तत्रायातो नवाजल्पि न व्यग्रत्वान्मयैक्ष्यत ॥ ३७४ ॥
निर्विंद्यानादराच्चैते व्यावृत्य प्रययुस्तदा ।
रात्रौ सोऽपि बहिः कृष्टस्तेन देशान्तरेऽचलत् ॥ ३७५ ॥
स्तम्भतीर्थपुरं प्रायाद्द्विजेनानुगतस्तदा ।
तदावोसरिणा? श्रीमान् कुमारं स्फारवृत्तभूः ॥ ३७६ ॥

---

१ H. मन्त्रमागमे च. २ P. *omits* गेत्स...त्रिदौ.

श्रीमालवंशभूस्तत्र व्यवहारी महाधनः ।
समेस्त्युदयानाभिख्यस्तस्य पार्श्वे महद्भटुः ॥ ३७७ ॥
एकान्तेऽस्य स्ववृत्तान्ते तेन सत्ये निवेदिते ।
अवादीद्वणिजां श्रेष्ठः किंचित्प्रार्थितशंबलः ॥ ३७८ ॥
अनभीष्टो महीशस्य यस्तेनार्थो न नः स्फुटम् ।
तद्द्रागपसरेह त्वां मा द्राक्षू राजपूरुषाः ॥ ३७९ ॥
वटो स्वामिनमात्मीयं पुरः सीमां प्रहापय ।
एव मुक्तः स नैराश्यं प्राप प्राप्तभयोदयः ॥ ३८० ॥
श्रुत्वा कुमारपालोपि तत्पुरं प्राविशन्निशि ।
बुभुक्षाक्षामकुक्षिः सन् चतुर्थे लंघने तदा ॥ ३८१ ॥
सूरिः श्रीहेमचंद्रश्च चतुर्मासिकमास्थितः ।
तदा चारित्रसंज्ञातलब्धिभिर्गौतमोपमः ॥ ३८२ ॥
उद्यद्व्याख्यानलीलाभिर्वारिदस्येव वृष्टिभिः ।
शीतीकुर्वन्सदा भव्यमतो भूमिं शमिप्रभुः ॥ ३८३ ॥
कथंचिदपि तत्रागात् कुमारोपीक्षितश्च तैः ।
आकृत्या लक्षणैश्चायमुपालक्षि विचक्षणैः ॥ ३८४ ॥
वरासन्युपवेश्योच्चै राजपुत्रास्त्वेनिर्वृतः[1] ।
असुतः सप्तमे वर्षे पृथ्वीपालो भविष्यति ॥ ३८५ ॥
सर्वे कैथं न सुप्राप्य कालं निःकिंचनैः क्षुधाः ।
द्वात्रिंशतमथ द्रम्मानस्य श्रावकपार्श्वतः ।
दापयित्वा पुनः प्राहुः शृण्वेकं नो वचः स्थिरम् ॥ ३८६ ॥
अद्यप्रभृति दारिद्र्यं नायाति तव संनिधौ ।
व्यवहारैरमोच्योऽसि[3] भोजनाच्छादनादिभिः ॥ ३८७ ॥
एवं भावीति चेद्राज्ये प्राप्ते मम कृतं विभो ।
अवलोक्यमिदानीं तु बह्वुक्तैः फल्गुभिः किमु ॥ ३८८ ॥
इत्युक्त्वा प्रययौ देशांतरं गूढो नराधिपम् ।
घनं घनाघनैश्छन्न इव पार्वणचन्द्रमाः ॥ ३८९ ॥
कापालिकव्रते कौलेशो विचित्रपदोत्तरे ।
चरन् कदापि कुत्रापि कृत्रिमे कृत्रिमक्रमः ॥ ३९० ॥
ततो वर्षाणि सप्तापि दिनानीवात्यवाहयत् ।
गुरुवाक्यैर्मनो बिभ्रत्संकटेपि विसंकटम् ॥ ३९१ ॥
तस्य भूपालदेवीति कलत्रमनुगाभवत् ।
छायेव सर्वावस्थास्वमुंचंती सविधे स्थितिम् ॥ ३९२ ॥

---

१ P स्त्वत ? २ H omits this line. ३ H रमान्यो.

द्वादशस्वथ वर्षाणां शतेषु विरतेषु च ॥
एकोनेषु महीनाथे सिद्धाधीशे दिवं गते ॥ ३९३ ॥
ज्ञात्वा कुतोपि सत्वाढ्यः कुमारोगान्निजं पुरम् ।
अस्थादासन्नदेशस्थो वासकैः श्रीतरोरधः ॥ ३९४ ॥
दुर्गादेव्याः स्वरं तत्र मधुरं शुश्रुवे सुधीः ।
तामाजुहाव भाग्यस्य जिज्ञासुः प्रमतिं तदा ॥ ३९५ ॥
मम पश्यसि चेद्राज्यं देवि ज्ञाननिधे ततः ।
उपविश्यैव मे मूर्ध्नि स्वरं श्रुतिसुखं कुरु ॥ ३९६ ॥
वचनानंतरं सापि तथैवाधादतिस्फुटम् ।
त्वं राज इति संरावं तच्चेतःसौधदीपकम् ॥ ३९७ ॥
आयात्पुरांतरा श्रीमत्सांवस्य मिलितस्ततः ।
चित्ते संदिग्धराज्याप्तिनिमित्तान्वेषणादृतः ॥ ३९८ ॥
स तेन सह संगत्य पार्श्वे श्रीहेमसुप्रभोः ।
तन्निषद्यादृते पट्टे उपविष्टोभिशिष्टधीः ॥ ४९९ ॥
भविष्यत्येव ते राज्यं यन्निविष्टोऽस्मदासने ।
एतदेव निमित्तं न इत्यमुष्य गुरुर्जगौ ॥ ४०० ॥
राज्ये छायाणदपातीति विगानभिया[१] नहि ।
ततोहमिति शंक्ये न प्रभो दुर्विनयो मयि ॥ ४०१ ॥
तत्रास्ति कृष्णदेवाख्यः सामंतोऽश्वायुतस्थितिः ।
स्वसुः पतिं कुमारस्य मिलितो निशि तस्य च ॥४०२॥ युग्मम् ।
श्रीसिद्धराजमेरौ च संजग्मुः शिवमंदिरे ।
प्रधाना राज्यसर्वस्वं राज्ययोग्यपरीक्षिणः ॥ ४०३ ॥
कुमारोऽपि पुरस्यांतराजगाम चतुष्पथम् ।
एकत्र संगतानां च प्रधानानां तदामिलत् ॥ ४०४ ॥
कृष्णः प्रवेशयामास प्रासादे तं करे कृतम् ।
तत्रापरावतस्थाते राजपुत्रौ प्रवेशितौ ॥ ४०५ ॥
तयोरेकः प्रणम्यात्र पार्षदान् स उपाविशत् ।
अपरोपि स्वसंव्यानपदं मुकुलमातनोत् ॥ ४०६ ॥
अथ श्रीकृष्णदेवेनोपविशेत्युदिते सति ।
संवृत्य वस्त्रयुगलं स्वमुपाविक्षद्वरासने ॥ ४०७ ॥
व्यचारयंत नीतिज्ञा एकस्तावत्कृतानतिः ।
निस्तेजाः परिभूयेत स्वैः परैरपि निंद्यधीः ॥ ४०८ ॥
संभ्रांतलोचनं पश्यन्नरो मुक्तचलांचलः ।
तस्य पार्श्वात्परैर्भूपैर्विश्वं राज्यं ग्रहीष्यते ॥ ४०९ ॥

---

१ P नू.

असौ कुमारपालश्च दैवशानुमतः पुनः ।
धीरं पश्यन्निहायातः संवृत्यांचलमंडलम् ॥ ४१० ॥
निग्रहीता विपक्षाणां विग्रहीता दिगंतरान् ।
भविष्यति महाभाग्यः सार्वभौमसमः श्रियां ॥ ४११ ॥
अभिषेकमिहैवास्य विदध्वं ध्वस्तदुर्द्धियः ।
आसमुद्रावधि पृथ्वीं पालयिष्यत्यसौ ध्रुवम् ॥ ४१२ ॥
अथ द्वादशधा तूर्यध्वनिडंबरितांबरम् ।
चक्रे राज्याभिषेकोऽस्य भुवनत्रयमंगलम् ॥ ४१३ ॥
प्रविवेशोत्सवै राजा राजसौधं नृपासनि ।
निविष्टो गोत्रवृद्धाभी रक्षतैरभ्यवर्द्धत ॥ ४१४ ॥
कृतप्रशमनाचारः प्रतापोग्रः परंतपः ।
कुमारपालभूपालः पालयामास मेदिनीम् ॥ ४१५ ॥
सपादलक्षभूमीशमर्णोराजं मदोद्धुरम् ।
विग्रहीतुमनाः सेनामसावेनामसज्जयत् ॥ ४१६ ॥
हास्तिकाश्वीयपादातरथ्याभिरभितो वृतः ।
धिष्ण्यग्रहौषधीतारानिकरैरिव चंद्रमाः ॥ ४१७ ॥
चचाल लघुसामंतमंडलैकमहीधरैः ।
अन्यैश्च क्षत्रियैः सेव्यपादांभोजयुगस्ततः ॥ ४१८ ॥
दिनैः कतिपयैरेवाजयमेरुं सुदुर्ग्रहम् ।
लंकादुर्गमिवागम्यं नृपप्राकारमासदत् ॥ ४१९ ॥
परितोस्य च वब्बूलविदरीखदिरद्रुमैः ।
करीरैर्गुंफितं नृणां दुर्गमं योजनद्वयम् ॥ ४२० ॥
बहुधा बहुभिर्मर्त्यैश्छिद्यमानपरिक्षयम् ।
प्राप्नोति न ततः खिन्नो व्यावर्त्तत नराधिपः ॥ ४२१ ॥
उपवर्षे समागत्याणहिल्लपुरमभ्यतः ।
चतुर्मास्यां पुनः सैन्यं जातशोपमपोपयत् ॥ ४२२ ॥
प्रावर्त्तत च तस्यां ते पुनर्ग्रीष्मे न्यवर्त्तत ।
एवमेकादश समा व्यतीयुः पृथिवीपतेः ॥ ४२३ ॥
मम पीतपरांभोधेरपि भाग्याधिकं कथम् ।
अर्णोराज इति ध्यायन् क्षणं तस्थौ नराधिपः ॥ ४२४ ॥
तस्य वाग्भटदेवोत्ति मंत्री मंत्रीव नाकिनाम् ।
नीत्या छत्रेण मंत्रेणोदयनस्यांगभूस्तदा ॥ ४२५ ॥
अपृच्छत्तं नराधीशः संकटेऽस्मिन् समागते ।
अस्ति सप्तलयः कश्चित् सुरो यक्षोऽथ वासुरो ॥ ४२६ ॥

1 P omits श्रिया......दिगंतरान्.

प्रातिहार्यप्रभावेण भवामो जितकाशिनः ।
यस्य तस्य मनोऽवश्यं वश्यं नो भवतु ध्रुवम् ॥ ४२७ ॥
व्यजिज्ञपदथ श्रीमान् वाग्भटस्तस्य वाग्भटः ।
अवधार्यं वचः सावधानेन प्रभुणा मम ॥ ४२८ ॥
यदा श्रीस्वामिपादानामादेशात्प्रभुसोदरः ।
कीर्त्तिपालो महाबाहुः सुराष्ट्रामंडलं ययौ ॥ ४२९ ॥
तद्देशाधीश्वरं निग्रहीतुं नवघनाभिधम् ।
अनेकशो विग्रहैश्च खेदिताद्यनराधिपम् ॥ ४३० ॥
तदा मज्जनकस्तत्र श्रीमानुदयनाभिधः ।
स्तंभतीर्थपुरावासी जन्ये सैन्यबलप्रदः ॥ ४३१ ॥
अन्यदा गच्छता तत्र पुंडरीकाद्रिरुद्धुरः ।
द्रष्टव्यस्यावधिर्दृष्टस्तेन दुष्प्राप्यदर्शनः ॥ ४३२ ॥
आचख्ये च निजेशस्य तस्य माहात्म्यमद्भुतम् ।
श्रीमद्युगादिनाथं च नमस्कृत्यातिभक्तितः ॥ ४३३ ॥
मेने कृतार्थमात्मानं स ध्यानादनुजप्रभोः ।
प्रासादमालुलोके च तेन सोप्यतिजर्जरः ।
ततः श्रीकीर्त्तिपालेन प्रोचेऽसौ भांडशालिकः ॥ ४३४ ॥
प्रासादस्यास्य नश्वेतस्युद्दिधीर्षा स्थिता ध्रुवम् ।
जित्वामुं विग्रहं प्रत्यावृत्तैः सर्वं विधास्यते ॥ ४३५ ॥
पर्वतादवतीर्याथ प्रतस्थे पुरतोऽधिपः ।
अभ्यमित्रीणतां प्राप नृपः सोपि मदोद्धतः ॥ ४३६ ॥
तत आसीन्महायुद्धं कुंताकुंति गदागदि ।
सैन्ययोरुभयोः शौर्यावेशादन्यातघातवान् ॥ ४३७ ॥
तस्मिन्नुदयनोपि स्वस्वामिनः पुरतः स्थितः ।
प्रजह्रेऽप्रहृतश्चासौ न्यपतद्भूमिमंडले ॥ ४३८ ॥
युद्धे जिते हते शत्रौ शोध्यमाने रणे प्रभुः ।
निरीक्ष्योदयनं श्वासावशेषायुपमूचिवान् ॥ ४३९ ॥
अनित्यो भौतिको देहः स्थिरेण यशसा त्वया ।
व्यक्रीयत स्फुटं साधु वणिग्व्यवहृते कृतः ॥ ४४० ॥
किंचिद्यदस्ति ते चित्ते शल्यं खुरखुरायितम् ।
ब्रूहि तद्विदधानोहं किंचित्स्यामृणातिगः ॥ ४४१ ॥
अथ स प्राह नाथ स्मो वयं स्वामिवशाः स्थिताः ।
तत्कार्यादपरं नैव जानीमोऽनन्यचेतनाः ॥ ४४२ ॥
श्रीमत्सिद्धाधिपाद्भिव्यद्भवद्बंधुः क्षितीश्वरः ।
वक्तुमेकं समीपे मे प्रपीत्सन्यकृत्तो मया ॥ ४४३ ॥

श्रीमान् कुमारपालोपि क्षूणं मयि तदा घनम् ।
अधारयिष्यदत्युग्रमूरीचक्रे मयापि तत् ॥ ४४४ ॥
इदानीं तु त्वदंह्रीणामग्रे तन्मुंचतो मम ।
उभौ लोकौ निजाम्नायः श्रुतं शीलं पवित्रितम् ॥ ४४५ ॥
मृत्यौ विप्रतिसारो नास्माकं विज्ञापयामि तत्[1] ।
किंचिन्मन्नंदनस्यास्य वाग्भटाख्यस्य कथ्यताम् ॥ ४४६ ॥
शत्रुंजयमहातीर्थे प्रासादस्य परिश्रुतः ।
जीर्णोद्धारस्ततः श्रेयो हेतुर्मे स विधीयताम् ॥ ४४७ ॥
ओमित्युक्त्वा ततः कीर्तिपालेनांगीकृते तदा ।
परासुरभवत्तत्र श्रीमानुदयनः शमी ॥ ४४८ ॥
कृते तत्रानृणे वप्नुरहं स्यामधुना पुनः ।
स्वां देवकुलिकामेकां नगरांतर्व्यधापयम् ॥ ४४९ ॥
तथात्रैव पुरे वासी व्यवहारी महाधनः ।
श्रीछड्डुक इत्याख्यः श्रेष्ठी नवतिलक्षकः ॥ ४५० ॥
मन्मैत्र्या तेन चाकारि धर्मस्थानेत्र खत्तकम् ।
श्रीमत्तत्राजितस्वामिबिंबं चास्थाप्यतामुना ॥ ४५१ ॥
प्रतिष्ठिते च श्रीहेमसूरिभिर्ज्ञानभूरिभिः ।
तदीयहस्तमंत्राणां माहात्म्यात्सकलं ह्यभूत् ॥ ४५२ ॥
तत्रोपयाचितं स्वामी चेदिच्छति ततो ध्रुवम् ।
विजयोऽस्याभिधायीदृगपराजितताकरी ॥ ४५३ ॥
इति विज्ञापनां श्रुत्वा मामकां नायको भुवः ।
विदधातु विचार्यैव ननु प्रभुं पुरोमति[2] ॥ ४५४ ॥
विज्ञप्तेत्रावनीनेता ध्यातामात्यवचः क्रमः ।
ऊचे मंत्रिन् भवद्वाक्यात्कार्यजातं मया स्मृतम् ॥ ४५५ ॥
सखे शृणु यदा पूर्वं वयं सामान्यवृत्तयः ।
श्रीस्तंभतीर्थे गच्छाम दिनत्रयमुपोषिताः ॥ ४५६ ॥
वोसरिबिंटुरस्माभिः प्रेष्यतोदयनान्तिके ।
अकृतार्थस्ततश्चागात्तदागः स्फुरितं न मे ॥ ४५७ ॥
एतेऽहो स्वामिनो भक्त्या इति चेतस्यमून्मम ।
परेषु रोषणः स्वीयाभाग्यदर्शी कृती न सः ॥ ४५८ ॥
तथा श्वेतांबराचार्यो हेमसूरिर्मया तदा ।
प्रदोषसमयेऽदर्शि कल्पद्रुमसमः श्रिया ॥ ४५९ ॥
पाथेयं कृपया किंच नदद्याद्यसौ प्रभुः ।
राज्यं कः प्राप्स्यदानंदि भवत्संगमसुंदरम् ॥ ४६० ॥

१ P विज्ञप यामि तु. २ P ननु प्रभपु.

तथा तद्वचनं तथ्यमभूद्दैवतवाक्यवत् ।
अद्यापि ध्वनति ध्मातघंटाटंकारवद्दृढम् ॥ ४६१ ॥
बिंबस्यास्य प्रतिष्ठानव्याजात्स्मारयता गुरुम् ।
ममोपकृतमत्यर्थं कृतावेदी नराधमः ॥ ४६२ ॥
तथा श्रीसिद्धराजोपि हत्वा खंगारभूपतिम् ।
तज्जातीयबहुत्वेन शक्तो देशं न वासितुम् ॥ ४६३ ॥
इदानीं त्वत्पितुर्बुद्ध्या शत्रवस्ते विनाशिताः ।
सर्वेऽपि च यथा तेषां नामापि नहि बुध्यते ॥ ४६४ ॥
मुक्तौन्यक्षेपि देशश्च मुक्तास्तत्राधिकारिणः ।
ईदृग् धीमान् भवद्भ्राता स्वामिभक्तिफलं हि तत् ॥ ४६५ ॥
कीर्तिपालः कुमारोऽसौ पदातिर्विग्रहादिषु ।
अबुधः सांयुगीनेन त्वत्पित्रैव बुधः कृतः ॥ ४६६ ॥
तीर्थोद्धारश्च संदिष्टस्तेन ते तदपीह नः ।
कार्यं ततोऽधुनैवायमादेशो भवतात्तव ॥ ४६७ ॥
राजकोशात्समादाय धनान्यापूर्णतावधि ।
पूर्यं तस्य प्रधानस्य स्वस्यास्माकं च वांछितम् ॥ ४६८ ॥
इदानीं त्वस्य देवस्य बिंबं मे दर्शय द्रुतम् ।
पुण्यैर्लभ्यं समभ्यर्च्य प्रधानं कुर्महे ततः ॥ ४६९ ॥
ततः संदर्श्यमानाध्वा श्रीमद्वाग्भटमंत्रिणा ।
संचचालाचलाधीश· प्राप चास्य जिनालयम् ॥ ४७० ॥
श्रीमंतं पार्श्वनाथं प्रागानतो मूलनायकम् ।
ददर्श मंत्रिणा ख्यातमजितं तदनु प्रभुम् ॥ ४७१ ॥
कुंकुमागुरुकर्पूरकस्तूरीचंदनद्रवैः ।
सुगंधकुसुमैश्चार्चां विदधे वासनावशात् ॥ ४७२ ॥
व्यजिज्ञपच्च तीर्थेशं त्वत्प्रभावान्नृपं रिपुम् ।
अस्मिन्नवसरे नाथ विजेष्ये त्वत्प्रसादतः ॥ ४७३ ॥
ततो मम भवानेव देवो माता गुरुः पिता ।
अत्र साक्षी भवान्मंत्रिन् पाल्यमेतद्वचो मया ॥ ४७४ ॥ युग्मम्
इत्युक्त्वानम्य तं भूपः पुलकांकितविग्रहः ।
तदा विजययात्रायां सैन्यानि समवाहयत् ॥ ४७५ ॥
उपचंद्रावति प्रायात्प्रयाणैरप्रमाणकैः ।
आवासान् दापयामास तत्र भूवासवो मुदा ॥ ४७६ ॥
तत्र विक्रमसिंहोऽस्ति राज्येऽमुष्य महाधरः ।
राज्ञः कटकसेवाया निर्विण्णो गमनामनाः ॥ ४७७ ॥

---

१ P य.

प्रशस्तैः स महामात्यैर्निजैः सममर्मत्रयत् ।
वयं खेदं परं प्राप्ता निर्जीवनृपसेवया ॥ ४७८ ॥
कः प्रतापो बलं किं वा भ्रांतदेशांतरे नरे ।
अत्र चित्रपटाजीवे चमत्कारोऽतिदुष्करः ॥ ४७९ ॥
भस्माधारः पुटीपात्रं जटा मूर्ध्नि शिवार्चनम् ।
एवं वेपे प्रणामो नः कात्र राज्यविडंबना ॥ ४८० ॥
तस्मात्कथंचिदत्रैव यद्यसौ साध्यते नृपः ।
असौ हि शशकः षं(खं)जो? रुणनिष्पाववाटकः ॥ ४८१ ॥
कोऽपि चालुक्यवंशीयः क्षात्रतेजोभिरद्भुतः ।
राज्ये निवेश्यतेऽस्माकं तदाज्ञां कर्तुमौचिती ॥ ४८२ ॥
प्राहुस्तस्य प्रधानाश्च नोचितं भवतां कुले ।
स्वामिद्रोहो यतोऽधीश सिद्धाधिपपदस्थितः ॥ ४८३ ॥
अस्माकं सर्वथाराध्यो युद्धेष्वनियतो जयः ।
दुर्गे रोधविशेषेण विमृश्यं तदिदं घनम् ॥ ४८४ ॥
उवाच च कथं बोध्यो भूपालोसौ भविष्यति ।
कृतं वो परभिक्षाभिरुपायं वदत ध्रुवम् ॥ ४८५ ॥
वयं हि तस्य वक्तारः स्वामिना करणे पुनः ।
प्रमाणं स्वरुचिर्नाथ तत्कुरु प्रतिभाषितम् ॥ ४८६ ॥
अथाह विक्रमो वह्नियंत्रं प्रकुरुताधुना ।
मत्सौधेऽसौ यथावश्यमक्लेशेन विनश्यति ॥ ४८७ ॥
व्यचारयन्निमित्तं ते निजावासेऽग्निदीपनम् ।
प्रागलभ्यात् कुमारे तत् विनाशस्यैव सूचकम् ॥ ४८८ ॥
किंच प्रविदधामोत्र दुर्लंघ्या भवितव्यता ।
राज्यच्छेदोऽस्य संपन्नो भूपालो विजयी पुनः ॥ ४८९ ॥
श्रीसिद्धाधीशपट्टे यः प्राच्यपुण्यैर्निवेशितः ।
एतत्सदृशभृत्यानां नास्यै योग्यो भविष्यति ॥ ४९० ॥
एवं विमृश्य तेऽवोचन् हस्तस्पृष्टललाटकः ।
स्वाम्यादेशः प्रमाणं नः कार्या नात्र विचारणा ॥ ४९१ ॥
सूत्रधारैस्ततो भूमांतरा सौधं निवेशितम् ।
ऊर्ध्वं च स्तंभपट्टादि चलं वस्त्रांचलोपमम् ॥ ४९२ ॥
तस्योपरि प्रतिसीरा प्रावारास्तरणास्तृताः ।
मंडिता विततोल्लोचा बवूलैः पद्मकैस्तथा ॥ ४९३ ॥
मौक्तिकैः कुसुमैर्गुच्छैर्विच्छंदकशतैरपि ।
सुंदरा तत्र मयारिच थाच तत्र तंतुमयारि च? ॥४९४॥ युग्मम् ॥

१ P omits- ततोहो.

एकत्र कीलके कुष्टे तत्सर्वं गर्तमंदिरे ।
खदिरांगारसंपूर्णं भस्मीभवति तत्क्षणात् ॥ ४९५ ॥
एवं निवेद्य ते नेत्रे नेत्रे बाष्पप्लुते दधुः ।
तन्नायकोप्युवाचैवं मतिः कार्यप्रसाधिका ॥ ४९६ ॥
असौ यथा तपस्वीदृग्शय्यायां चंगमंगिभिः ।
आक्षिप्ताक्षो निवेश्येत तदास्याधोगते मृतिः ॥ ४९७ ॥
इति प्रातर्विचिंत्यायमायाच्छिविरमध्यतः ।
राजपादान्नमश्चक्रेऽवनीलुठनपूर्वकम् ॥ ४९८ ॥
विज्ञो विज्ञपयामास मौरवो मंडलेश्वरः ।
दंभात्सुधां मुखे बिभ्रद्विषपूर्णो घटो यथा ॥ ४९९ ॥
अलंकुरुत हर्म्यं मे प्रसादः क्रियतां प्रभो ।
तत्र प्रत्यवसाने नावसानेनाद्य दुःस्थिते ॥ ५०० ॥
ध्वांतेतिधीनिधिर्भूपोनारवेषु न विश्वसेत् ।
प्राह नः परिवारे प्राग् भुक्ता ननु वयं ततः ॥ ५०१ ॥
क एवं हि हितान्वेषी स्वामिभक्तश्च दृश्यते ।
परमारकुलोद्भूतं भवंतमभयं विना ॥ ५०२ ॥
तत्र कः प्रतिषिद्धोस्ति शुभे कार्ये महीधरः ।
अस्माकं भवदावास एव योग्यो विलोकितुम् ॥ ५०३ ॥
स्वाम्यादेशः प्रमाणं मे इति प्राज्यपरिच्छदाम् ।
भक्तोऽसौ भोजयांचक्रे पराह्णावध्यबाधय ॥ ५०४ ॥
अंगरक्षास्ततः स्वामिमूर्त्तिरक्षाः सदोद्यता ।
आहूतास्तत्समस्तं च कुट्टिमं प्रकटीकृतम् ॥ ५०५ ॥
यत्रासन्नः पुमानेको वृद्धो मतिमतां पतिः ।
आजिघ्रन् गंधमत्युग्रं ध्मातांगारगणस्य सः ॥ ५०६ ॥
विमम‍र्शे निजस्वांते विज्ञातं किंचिदद्भुतम् ।
तत्रास्ते वह्निसंबद्धं प्रभुविद्रोहकारणम् ॥ ५०७ ॥
ततस्तं विक्रमः साभिप्रायं दृष्टिविकारतः ।
परिज्ञायातिसच्चक्रे वक्राशयशिरोमणिः ॥ ५०८ ॥
ययौ विक्रमसिंहोऽथ सह तेनैव मंदिरम् ।
राज्ञः प्राह च मत्सौधे नाथ पादोऽवधार्यताम् ॥ ५०९ ॥
अथ भ्रूसंज्ञया तेन न्यषेधि गमनं प्रति ।
भूपतिः प्राह तंत्रं मे समस्तं भोजितं त्वया ॥ ५१० ॥
वयं तु प्राक् त्रियामायां चिंताजागरपीडिताः ।
अधुनाभ्यवहारेषु नाभिलाषुकचेतसः ॥ ५११ ॥
मुहूर्त्तश्चापि दैवज्ञैः प्रयाणाय निवेदितः ।
संप्रत्येव ततो ढक्कावाद्या प्रस्तीयते यथा ॥ ५१२ ॥

त्वमपि स्वां चमूं सज्जीकृत्य...विशारदः।
शीघ्रमागच्छ तच्छेका जंभायंते त्वरायते ॥ ५१३ ॥
अतः शंकां वहन्नोमित्युक्त्वा तां प्रययौ स्वकम्।
धाम ज्ञातमिवायं स्वं विमृशन् चेतसि क्षणम् ॥ ५१४ ॥
झटित्येव प्रशस्ते च स्तंवाचाटप्रभोस्तदा।
अचिराद्रिपुदुर्गस्योपकंठे शिबिरं दधौ ॥ ५१५ ॥
स यथास्थानमातस्थौ शिबिरस्य निकेतनम्।
अहर्दिवं प्रहरके जाग्रद्व्यग्रभरोद्धुरम् ॥ ५१६ ॥
अर्णोराजोप्यजानानः सिद्धकुंभभवव्रतम्।
अथ मेनेवलेपोग्रव्याहारोर्मिभिरेव तम् ॥ ५१७ ॥
अथैकादशवर्षाणि विजुगोप पदोरधः।
ममाथ द्वादशेप्यस्तु कात्र भूपालकल्पना ॥ ५१८ ॥
इतसत्वोद्धृतैर्भीत्या कृत्रिमैरपि दर्शनैः।
जीव जीवेति जल्पद्भिर्मतो राजा स्वसेवकैः ॥ ५१९ ॥
तथा चारुभटः श्रीमत्सिद्धराजस्य पुत्रकः।
ढक्काढक्कास्वरभ्रांतहस्ती मामुपतिष्ठते ॥ ५२० ॥
इत्यनल्पविकल्पैः स यंत्रानासज्जयत्तदा।
दुर्गे स्वर्गे इवासीन उदासीनोऽकुतो भयः ॥ ५२१ ॥
कुंततोमरशक्त्याद्यैः पूर्णेष्वट्टालकेष्वपि।
विलेभे न भटव्रातं निजभाग्यकदर्थितः ॥ ५२२ ॥
श्रीमान् कुमारपालोपि ज्ञात्वेति प्रणधिव्रजैः।
अनीकिनीं निजां दानमानाद्यैः समपूजयत् ॥ ५२३ ॥
गजानां प्रतिमानानि शृंखलामुकुरांस्तथा।
अश्वानां कविकावल्गादामपल्ययनानि च ॥ ५२४ ॥
रथानां किंकिणीजालचक्रांगयुगशंबिकाः।
योधानां हस्तिकां वीरवलयानिव चंद्रकान् ॥ ५२५ ॥
सुवर्णरत्नमाणिक्यसूचीमुखमयान्यपि।
चतुरंगेपि सैन्येऽसौ भूषणानि ददौ मुदा ॥ ५२६ ॥
रोहणद्रुमकर्पूरकश्मीरजविलेपनैः।
स्वयं विलिप्य वक्त्राणि भटानां पटुताभृताम् ॥ ५२७ ॥
सहस्रपत्रचांपेयजातीविचकिलस्रजः।
कामं धम्मिल्लमालासु ववंध स्वयमीशिता ॥ ५२८ ॥
हेमंतसितपत्राभैः शातकुंभसमैरसौ।
स्कंधानभ्यर्च्य यद्योधप्रधानानां प्रमोदतः ॥ ५२९ ॥

सांधकारनिशीथे च राजा तेजःप्रतापभूः ।
तानुत्साह्य सुधासध्रीचीभिर्वचनवीचिभिः ॥ ५३० ॥
चचाल संमदोत्तालकलाकेलिकुलावनिः ।
अतूर्यवक्रनिर्घोषं रहोयोगीवनिध्वनिः ॥ ५३१ ॥
पर्वताधित्यकाभूमिं गत्वा तूर्यरवान् समम् ।
व्यस्तारयत्तथा चक्रेऽभूपः सूकरिकास्तथा ॥ ५३२ ॥
तदा च वाग्भटामात्यस्तेनादिष्टः समानय ।
आप्रभातात्पंचशतीमार्द्राणां सैरिभत्वचाम् ॥ ५३३ ॥
तेनानीताश्च ताः संवर्म्मिणोघरघमंडपः ।
पडीः? प्रपातयामासुस्तन्मध्ये तु भटोत्कटाः ॥ ५३४ ॥
एके च दशनैः खड्गान्युत्पाट्यारुरुहुर्द्रुतम् ।
प्राकारकपिशीर्षाणि तच्छीर्षाणीव विक्रमात् ॥ ५३५ ॥
व्यद्रवन्नथ तेऽन्तस्था विहिते संप्रसारणे ।
ह्रस्वीकृतः कुमारेण भूपेनाख्यातवेदिना ॥ ५३६ ॥
विवृत्य गोपुरद्वारं वहिर्निरसरत्प्रगे ।
अर्णोराजोऽपि तत्राजौ स्वजीवे विगतस्पृहः ॥ ५३७ ॥
वाद्यमानेषु संग्रामतूर्येषु प्रतिशब्दितैः ।
शब्दाद्वैतं वभूवात्र पक्षयोरुभयोरपि ॥ ५३८ ॥
कातराणां तदा तत्र देहानाशाक्षमानि च ।
परित्यज्य ययुः प्राणाः पातालं शरणार्थिनः ॥ ५३९ ॥
ततः प्रववृते युद्धं खड्गाखड्गि शराशरि ।
वाहुवाहवि सर्वत्राहश्यमानजनास्यकम् ॥ ५४० ॥
शूरसंक्रांतिकाले च भूधरा असया इव ।
वहुशः खंड्यमानांगा अदृश्यंत जनेश्वराः ॥ ५४१ ॥
पक्कूष्मांडकानीवाखंड्यंतात्र तुरंगमाः ।
शालिपर्पटवद्वध्याः समचूर्यंत निर्भरम् ॥ ५४२ ॥
परिपक्किमकालिंगवत्पत्तिजठरावलिः ।
पाटिता तत्र कालेयप्लीहफुफुससंकुलाः ॥ ५४३ ॥
विचेरुर्गगने गृध्रा नूनं मांसाभिलाषुकाः ।
विमानस्थाप्सरो दूता इव प्राणेशसंगमे ॥ ५४४ ॥
इत्येवमन्वयख्यातिनामोद्घट्टनपूर्वकम् ।
युद्धे भवति शांतासु धूलीषु मदवारिभिः ॥ ५४५ ॥
पट्टवारणयोस्तत्र दंतादंति विलग्नयोः ।
दृष्टश्चारुभटो राज्ञारिनिषादितया स्थितः ॥ ५४६ ॥

---

१ P पुप्फुस.

श्यामलाधोरणस्तत्र हस्तिहक्काभयापहृत् ।
उत्कील्याच्छपटीं द्विः स कृत्वा तस्य श्रुती न्यधात् ॥ ५४७ ॥
ततश्चारुभटो गर्वाद्धस्तिदंते पदं दधौ ।
यत्कियान् प्रतिमातंग इति चेतसि चिंतयन् ॥ ५४८ ॥
पक्षयोर्गूर्जरेशोपि लोचने संन्यवीविशत् ।
बलं विघटितं सर्वं महाधरमुखं तदा ॥ ५४९ ॥
शंकितेन तदाजल्पि शामलस्त्वमपीह किम् ।
भेदितो वारणं पश्चाद्यावर्त्तयसि यत्सखे ॥ ५५० ॥
स प्राह नाथ नो शक्यं स्वप्नेऽपि ह्यस्य भेदनम् ।
निखादी श्यामली स्वामी गजः कलभकेसरी ॥ ५५१ ॥
पश्चात्क्रमैर्गतो नीचैस्ततः प्रतिगजात्पतन् ।
शत्रुराज्यस्य सर्वस्वं ग्राह्यश्चारुभटस्त्वया ॥ ५५२ ॥
यावदेवं वदत्येष तावद्विघटितौ रदौ ।
अंतर्द्वयोर्जवात्तत्रापतत्स्वस्वामितेजसा ॥ ५५३ ॥
जगृहे तलवर्गीयैः सुभटैः संयतश्च सः ।
अर्णोराजश्च राज्ञापि कुंतेन निहितोऽलिके ॥ ५५४ ॥
प्रणाशाभिमुखः कांदिशीकश्चारुभटं विना ।
व्यावर्त्तयद्गजं सेनाप्यस्य व्याजुघटे ततः ॥ ५५५ ॥
जितं जितमिति प्रोच्य परमभ्रमयत्प्रभुः ।
मन्यमानश्च राजानं स्वं तदा विक्रमोर्जितान् ॥ ५५६ ॥
सामंताश्चाययुः सर्वे मंक्षु तं पर्यवारयन् ।
जितो भवद्भिरेवासावित्यावर्जयदत्र तान् ॥ ५५७ ॥
देशः कोशश्च लुंटाकैस्तस्य सेनाप्यलुंट्यत ।
सुलूपणाः सत्वहीना युद्धे पृष्ठाप्रदायिनः ॥ ५५८ ॥
ततश्चमूचराः सर्वे तदीयद्रविणैर्धनैः ।
स्वयंग्रहणतोऽतृप्यन्नासप्तपुरुषावधि ॥ ५५९ ॥
जितकाशी ततो भूपो न्यवर्त्तत पुरंप्रति ।
यच्छन् यथार्थनं दानमर्थिभ्यः कल्पवृक्षवत् ॥ ५६० ॥
अष्टादशशतीदेशप्रख्यपत्तनमासदत् ।
पूर्ववत् वृत्तमत्युग्रं तदीशस्याप्यवुध्य ते ॥ ५६१ ॥
नृपतिर्विजये सौविदल्लान्मल्लानथादिशत् ।
ततो निमंत्रणायातः पश्चाद्वाहुर्न्ययंत्र्यत ॥ ५६२ ॥
प्रैष्य प्रेष्यान् निजांस्तस्य मंदिरं मंदुरावरम् ।
अन्वालयत्क्षणादेव यथाभवदसन्सकृत् ॥ ५६३ ॥

---

१ P सुरा. २ H भो०. ३ H नियादि? ४ P लवर्गीयै. ५ H सहक्.

शाकटेनासृतिं क्षिप्तः स्वस्थानाच्चालितांगकः ।
हुंकारेणानलंभूष्णुः सोभूत्का वचने कथा ॥ ५६४ ॥
नद्युत्तारेषु पाषाणोद्घाटसंकटभूमिषु ।
अभूदसृग्विलिप्ताक्षः सषट्कारस्फुरच्छिराः ॥ ५६५ ॥
परमारान्वयै राजपुत्रैरुत्तीर्य भूपतिः ।
सम्यक्प्रणम्य विज्ञप्तो त्वमुन्मर्त्तनृणां स्तुतिम् ॥ ५६६ ॥
मंचातिमंचकलितमुत्तुंगकृततोरणम् ।
अणहिल्लपुरं प्राप क्ष्मापप्राप्तजयोदयः ॥ ५६७ ॥
महोत्सवे प्रवेशस्य गजारूढः सुरेंद्रवत् ।
वाग्भटस्य विहारं स ददर्शे दृग्रसायणम् ॥ ५६८ ॥
तत्र प्रविश्य श्रीमंतमजितस्वामिनं नृपः ।
अर्चयन् सुरभिद्रव्यैरत्यासन्नोपकारिणम् ॥ ५६९ ॥
श्रीपार्श्वमथ च स्मृत्वा संपूज्य च ततोऽवदत् ।
प्रागुक्तं यन्मया नाथ तत्तथैवावधार्यताम् ॥ ५७० ॥
ततः प्रणम्य सोत्कंठं कंठीरववरासने ।
पट्टकुंजरकुंभस्थे स्थितोऽगाद्भूभृदालयम् ॥ ५७१ ॥
गोत्रवृद्धांगनावर्गसंगीतस्फुटमंगलः ।
प्रतीच्छन् शिरसावर्द्धापनान्यनुबभूव सः ॥ ५७२ ॥
ततो विक्रमसिंहस्य स्थाने संधीन्निवेश्य च ।
आनाय्यानतिदूरे तां भूपालं प्राह सस्मितः ॥ ५७३ ॥
भोविक्रमाग्नियंत्रेण भूपाला एव पंचताम् ।
प्रयांति नैव सामंता इति त्वं केन शिक्षितः ॥ ५७४ ॥
तत्रैव यद्यहं त्वां भो वह्नौ होता ततो भवान् ।
भस्मीभूतः क्व दृश्येत सपुत्रपशुबांधवः ॥ ५७५ ॥
यादृशाश्च भवंतः स्युर्गृहकर्मकरा मम ।
मलिना न वयं नाथास्तादृशास्तदसून्वहः ॥ ५७६ ॥
अक्षेपि वंद्(दि)शालायां ततोसौ निजकर्मतः ।
इह लोके हि भोज्यंते राजभिस्तामसास्तमः ॥ ५७७ ॥
तथा श्रीरामदेवाख्यं तद्भ्रातुर्नंदनं नृपः ।
श्रीयशोधवलं चंद्रावत्यामेष न्यवीविशत् ॥ ५७८ ॥
अन्येद्युर्वाग्भटामात्यं धर्मात्यंतिकवासनः ।
अपृच्छदार्हताचारोपदेष्टारं गुरुं नृपः ॥ ५७९ ॥

१ H D मत्नन्हणा मांत्वमन्सतमृणाम्?. २ P त्तंग. ३ P धर्म.
४ P वद.

सूरेः श्रीहेमचंद्रस्य गुणगौरवसौरभम् ।
आख्यदक्षामविद्यौघमप्यामोपशमाश्रयम् ॥ ५८० ॥
शीघ्रमाहूयतामुक्तो राज्ञा वाग्भटमंत्रिणा ।
राजवेश्मन्यनीयंत सूरयो बहुमानतः ॥ ५८१ ॥
अभ्युत्थाय महीशेन ते दत्तासन्युपाविशन् ।
राजाह सुगुरो धर्मं दिश जैनं तमोहरम् ॥ ५८२ ॥
अथ तं च दयामूलमाचख्यौ स मुनीश्वरः ।
असत्यस्तेनताब्रह्मपरिग्रहविवर्जनम् ॥ ५८३ ॥
निशाभोजनमुक्तिश्च मांसाहारस्य हेयता ।
श्रुतिस्मृतिस्वसिद्धांतनियामकशतैर्दृढा ॥ ५८४ ॥

उक्तं च योगशास्त्रे ॥

विखादिषति यो मांसं प्राणिप्राणापहारतः ।
उन्मूलयत्यसौ मूलं दयाख्यं धर्मशाखिनः ॥ ५८५ ॥
अशनीयन् सदा मांसं दयां यो हि चिकीर्षति ।
ज्वलति ज्वलने वल्लीं स रोपयितुमिच्छति ॥ ५८६ ॥
हंता पलस्य विक्रेता संस्कर्ता भक्षकस्तथा ।
क्रेतानुमंता दाता च घातका एव यन्मनुः ॥ ५८७ ॥
अनुमंता विशसिता नियंता क्रयविक्रयी ।
संस्कर्ता चोपहर्त्ता च खादकश्चेति घातकाः ॥ ५८८ ॥
नाकृत्वा प्राणिनां हिंसां मांसमुत्पद्यते क्वचित् ।
न च प्राणिवधः स्वर्ग्यस्तस्मान्मांसं विवर्जयेत् ॥ ५८९ ॥
इत्यादि सर्वहेयानां परित्यागमुपादिशत् ।
तथेति प्रतिजग्राह तेषां च नियमान्नृपः ॥ ५९० ॥
श्रीचैत्यवंदनस्तोत्रस्तुतिमुख्यमधीतवान् ।
वंदनक्षामणालोचप्रतिक्रमणकान्यपि ॥ ५९१ ॥
प्रत्याख्यानानि सर्वाणि तथा गाथा विचारिका ।
नित्यं द्व्यशनमाधत्त पर्वस्वेकाशनं तथा ॥ ५९२ ॥
ज्ञानाचारप्रकारं चारात्रिकस्याप्यशिक्षत ।
जैनं विधिं समभ्यस्य चिरं श्रावकवद्वभौ ॥ ५९३ ॥
प्राकृते चामिषाहारे परमानुशये गतः ।
उवाचावाच्यमेतन्मे पातकं स्वभ्रपातकम् ॥ ५९४ ॥
निष्क्रयोस्यांहसो नास्ति पुनरेतद्ब्रवीम्यहम् ।
अपराधी निगृह्येत राजनीतेरिति स्थितिः ॥ ५९५ ॥
दशनान् पातयाम्यद्य मांसाहारापराधिनः ।
सर्वत्र सहते कर्त्ता दृष्टमित्थं स्मृतावपि ॥ ५९६ ॥

गुरुराह महाराज रूढं स्थूलमिदं वचः ।
सकृद्देहापदां स्यान्निःकृतिः कृतकर्मणः ॥ ५९७ ॥
तत आर्हतधर्मेच्छापवित्रितमनाऽभवत् ।
प्रवर्त्तेता तथा पंकः समस्तः क्षाल्यते यथा ॥ ५९८ ॥
दंता द्वात्रिंशतः पाप्ममोक्षाय त्वं विधापय ।
द्वात्रिंशतं विहाराणां हाराणामिव ते वने ॥ ५९९ ॥
निजवप्तुस्त्रिभुवनपालस्य सुकृताय च ।
मेरुशृंगोन्नतं चैत्यं श्रीजैनेंद्रं विधापय ॥ ६०० ॥
अथाह मेदिनीपालः सुरीतिरियमुज्वला ।
भवकांतारनिस्तार एतदेव च शंबलम् ॥ ६०१ ॥
अथो परमया भक्त्या प्राहिणोत्प्रभुमालये ।
अपरेद्युश्च संप्राप वाग्भटस्य जिनालयम् ॥ ६०२ ॥
तत्रायातस्य भूपस्य ययौ नेपालदेशतः ।
श्रीबिंबमेकविंशत्यंगुलं चांद्रमणीमयम् ॥ ६०३ ॥
प्राभृते प्राभृते तत्र मूर्ते चिंतामणाविव ।
सर्वतो व्यकसद्राजा पूर्णमासीनिशीथवत् ॥ ६०४ ॥
ततो मंत्रिणमाकार्य प्रसादविशदाननः ।
कुत्राप्यमात्यकार्येहमधमर्णो भवामि वः ॥ ६०५ ॥
इत्याकर्ण्य स च प्राह प्राणाः स्वामिवशा मम ।
परिच्छदो धनं भूमिरास्था कान्येषु वस्तुषु ॥ ६०६ ॥
राजाह प्रांजलिर्याचे प्रसादो मे प्रदीयताम् ।
सनाथं करवै मित्र यथा प्रतिभयानया ॥ ६०७ ॥
महाप्रसादो मे नाथ भवत्वेवं धृतिर्मम ।
श्रीकुमारविहारोतः परं स्वास्याख्ययास्तु तत् ॥ ६०८ ॥
किंचिच्च स्वामिने विज्ञपये तदवधार्यताम् ।
श्रीकीर्तिपालतः पित्रा संदिष्टं मम यद्वचः ॥ ६०९ ॥
श्रीशत्रुंजयतीर्थस्य प्रासादः श्रेयसे मम ।
जीर्णशीर्णस्त्वयोद्धार्य इति मे कृत्यमस्त्यदः ॥ ६१० ॥
प्रभुपादैस्तथादिष्टं यात्रायाः प्रक्रमे तदा ।
देवतास्मृतिवेलायां कीर्तिपालप्रतिश्रुतान् ॥ ६११ ॥
अस्मत्कोशधनं लात्वा कार्या चैत्योद्धृतिस्त्वया ।
स आदेशो ममास्तु स्वैः पितुरानृण्यहेतवे ॥ ६१२ ॥
श्रुत्वेत्याह नृपोऽस्माकं कार्येऽस्मिन्सोदरादराव् ।
एवमप्यस्त्वनुल्लंघ्यवचनस्त्वं हि नः सखे ॥ ६१३ ॥

१ P देहापदाना. H देहांपदा. २ H D तत्र या०. ३ P माहूय.

स्वामिन्महाप्रसादोयमित्युक्त्वा तत्र धीसखः ।
विमलाद्रौ ययौ श्रेष्ठिव्यापारपरिवारितः ॥ ६१४ ॥
तत्र तीर्थे प्रभुं नत्वा नाभेयं भक्तिनिर्भरः ।
गुरुद्वारान्प्रदाप्यास्थात्? प्रतिसीराश्च सर्वतः ॥ ६१५ ॥
विमानकानि मंचाश्च प्रादात्करभिकास्तथा ।
वाटिकानि चतुष्पाटीः पट्टशाटकमंडिताः ॥ ६१६ ॥
चंचच्चतुरकांश्चापि स्वर्विमानोपमद्युतीन् ।
अनेकभेदसंघातसंकीर्णीकृतपर्वतान् ॥ ६१७ ॥ विशेषकम् ।
तत्र चैको वणिक् प्रत्यासन्नग्रामात्समागतः ।
[2]निधिर्दौस्थ्यस्य घृष्टानि पटच्चरयुगं दधत् ॥ ६१८ ॥
षट्ट्रम्मनीविकस्तैश्च क्रीताज्यकुतपं वहन् ।
कटके ग्राहकव्यूहबाहुल्याद्रूपकाधिकम् ॥ ६१९ ॥
द्रम्मं स चार्जयित्वातितुष्टः श्रीवृषभप्रभुम् ।
कुसुमै रूपकक्रीतैः पूजयामास भक्तितः ॥ ६२० ॥
सप्तद्रम्मान् सप्तलक्षानिव ग्रंथौ वहन् मुदा ।
वीक्षकः सचिवाधीशं तर्कटीद्वारमागमत् ॥ ६२१ ॥
ददृशे तेन मंत्रींदुरीपञ्जवनिकांतरात् ।
कूर्मेनेव ह्रदे बद्धजालांस? वालरंभ्रतः ॥ ६२२ ॥
सव्यमृक्षत्प्राच्यपुण्यपापयोरेतदंतरम् ।
पुरुषत्वे समेऽमुष्य मम चानीदृगाकृतिः ॥ ६२३ ॥
स्वर्णमौक्तिकमाणिक्याभरणांशुदुरीक्षरुक् ।
व्यापारिव्यहार्यत्रजीविव्रातपरिच्छदः ॥ ६२४ ॥
चक्रीव मुकुटाबद्धमंडलाभ्यर्चितक्रमः ।
श्रीनाभेयमहातीर्थजीर्णोद्धारमनोरथः ॥ ६२५ ॥
अहं तु स्वगृहिण्याथाभिभूतो निर्धनत्वतः ।
संध्यावध्यपि संदिग्धहारप्राप्तिर्मुधाश्रमः ॥ ६२६ ॥
कुतपोद्वहनक्लिष्टशिरा आशैशवादपि ।
एकरूपकलाभेन धन्यंमन्यो दिनं प्रति ॥ ६२७ ॥
एवं विचिंतयन् द्वारपालेन परतः कृतः ।
श्रीमद्वाग्भटदेवेन मंत्रिणादर्शि दैववत् ॥ ६२८ ॥
वणिगाहूयतामेषेत्युक्ते स द्वारपालकः ।
दूरप्रयातमपि तमाह्वास्तादेशतः प्रभोः ॥ ६२९ ॥

---

१ P D गुरुदरा. २ निधिस्थोस्थ्यस ? ३ P कस्ते. H क्रीटा...... केटके० ४ D. कटी० ५ P जालशेवाघर०

तत्पुरः पर्पदंतः स ऊर्द्धीस्थात् स्थाणुवत्स्थिरः ।
अनभिज्ञः प्रणामादौ ग्रामणीत्वादृजुस्थितिः ॥ ६३० ॥
कस्त्वमित्युक्तिभाजि श्रीमंत्रिणि प्रकटाक्षरम् ।
प्रागुक्तनिजवृत्तं स आख्यदक्षामदुःखभृत् ॥ ६३१ ॥
मंत्रीश्वरं प्रति प्राह धन्यस्त्वं क्लेशितोर्जितम् ।
यद्रूपकं व्ययित्वार्चां श्रीजिनस्य समाचरेः ॥ ६३२ ॥
इत्युक्त्वा स करे धृत्वा स्वार्द्धासनि निवेशितः ।
धर्म्मबंधुर्भवान्मे तत्कार्य्यं किंचिद्ब्रवीहि भो ॥ ६३३ ॥
सोस्य प्रभोः प्रियैर्वाक्यैः प्रीणितोचिंतयन्मुदा ।
संप्रापितः परां कोटिमनेनाकिंचनोऽप्यहम् ॥ ६३४ ॥
तदा साधर्मिकास्तत्र व्यवहारिनियोगिनः ।
इष्टे तीर्थसमुद्धारे प्रंत पुण्यभरार्थिनः ॥ ६३५ ॥
वहिकां मंडयामासुर्द्रव्यमीलनिकाकृतेः ।
प्राग्मंत्रिणस्ततो ज्येष्ठानुक्रमादभिधा व्यधुः ॥ ६३६ ॥
दृष्ट्वा नामान्यसौ दध्यौ चेद्रम्मा सप्त मामकाः ।
कार्य्येऽस्मिन्नुपकुर्वंति तत्र धन्यो मया समः ॥ ६३७ ॥
वक्तुकामोऽसि किंचित्किमित्युक्तो मंत्रिणा स च ।
प्राह सप्त गृहीत्वामून् द्रम्मान् प्रीणय मां प्रभो ॥ ६३८ ॥
तदाचारात्परानंदमेदुरः सचिवोऽवदत् ।
त्वं मे धर्मसुहृद्भ्रातस्तत्तानर्पय सत्वरम् ॥ ६३९ ॥
श्रीतीर्थजीर्णोद्धारस्य निष्पत्पाशाद्य मेऽभवत् ।
नीवीं जीवितवत्स्वीयां यदक्लेशात्वमव्ययः ॥ ६४० ॥
वहिकादौ च तन्नाम लिखित्वाथनिजाभिधाम् ।
अधस्तस्य ततो नामान्यन्येषां धनशालिनाम् ॥ ६४१ ॥
वयं तु कोटिसंख्यस्य द्रव्यस्य खरकर्मभिः ।
उपात्तस्य व्यये तं प्राभृतोन्यधनमिच्छतः ॥ ६४२ ॥
स्वकीयकोषादाहार्षीत्ततः पट्टांशुकत्रयम् ।
द्रम्मपंचशतीं चैवं प्राहैतद्विगृहाण भो ॥ ६४३ ॥
मंत्रीशेन स चेत्युक्तः स्मित्वावादीदसौ वणिक् ।
न विक्रीणे ध्रुवं पुण्यमस्थिरद्रव्यलेशतः ॥ ६४४ ॥
भवंतः स्वामिनः प्राच्यपुण्यसंपन्नवैभवाः ।
कुर्वंतः किं न लज्जंते मादृशां विप्रलंभनम् ॥ ६४५ ॥
इत्याकर्ण्योद्धुषद्रोमा मंत्रींदुः प्राह वाणिजम् ।
मत्तो धन्यस्त्वमेवासि यस्येदृग्निःस्पृहं मनः ॥ ६४६ ॥

----

०.-१ P चरः. २ P °वितवह्नस्वीधा. D मावी जिवितवत्स्वी°. ३ H J प्रतिजाभिधा.

ततः केलिमपूगैः स पत्रैर्नागरखंडकैः ।
वीटकं प्रददावस्य कर्पूरपरिपूरितम् ॥ ६४७ ॥
तद्गृहीत्वा स सन्मानपूरितः स्वगृहं ययौ ।
गेहिन्या बिभ्यदभ्यस्तदुर्वाक्याली कुलक्षितेः ॥ ६४८ ॥
अकस्मात्सा च तं स्वादुवचनैः पर्यतोपयत् ।
आजन्मादृष्टपूर्वं तद्दृष्ट्वा विस्मयमाप सः ॥ ६४९ ॥
तेनोक्ते च यथावृत्ते सावादीत्पारितोषिकम् ।
यन्न त्वया गृहीतं तन्निर्वृतं मे व्यधाद्धनम् ॥ ६५० ॥
यदि त्वं मंत्रिणः पार्श्वे लोहटंकार्धमप्यहो ।
अग्रहीष्यत्ततो नाहमस्थास्यं त्वद्गृहे ध्रुवम् ॥ ६५१ ॥
धेनुयोग्यं ततः स्थाणुं श्लाघ्यं गाढं कुरुष्व तत् ।
तयेत्युक्तः कुशीं प्राप्यं दरमत्राखनत्ततः ॥ ६५२ ॥
खाते चाल्पे खनित्रं च खटत्कृतमतः स तु ।
भार्यामाकार्य कथयामास सा च ततोऽवदत् ॥ ६५३ ॥
रात्रौ निर्व्यजने किंचिद्विधेयं नतु सांप्रतम् ।
वेलां विलम्ब्य तत्तस्मात्तदाकृष्यत यत्नतः ॥ ६५४ ॥
चत्वारि हैमटंकानां सहस्राणि स चासदत् ।
अल्पाया अपि पूजायाः फलमेतज्जिनेशितुः ॥ ६५५ ॥
अर्पयिष्याम्यहं मंत्रिवाग्भटस्य धनं ह्यदः ।
ईदृशि व्ययितं तीर्थे तद्धि कोटिगुणं भवेत् ॥ ६५६ ॥
पत्न्याप्यनुमतः प्रातर्गिरिमारुह्य मंत्रिणम् ।
वीक्ष्य तद्दर्शयामास गृह्णीतेत्यवदच्च तम् ॥ ६५७ ॥
श्रुत्वेति धीसखस्वामी प्राह मद्वचनं शृणु ।
सत्वात्ते सप्तभिर्द्रम्मैः पूर्णो मम मनोरथः ॥ ६५८ ॥
अतः परं भवद्द्रव्यं ग्रहीतुं नाहमीशिता ।
अनेन भविता यस्मात्सौवर्णः सकलो गिरिः ॥ ६५९ ॥
अभिसंधिर्न मे सोऽस्ति तत् स्वं द्रव्यं यथारुचि ।
व्यय वर्धय भुंक्ष्वाथ धर्मे वा धेहि शीघ्रतः ॥ ६६० ॥
स प्राह कुतपोद्वाहभाग्यस्य कनकं किमु ।
स्यातामेकनकेतत्कः क्लेशोंगीक्रियतेस्य नु ॥ ६६१ ॥
भवान् यथातथा कर्तुमिमं शक्तः प्रभुत्वतः ।
तत्प्रसद्य गृहाणेदं तुष्टोस्तु कुतपो मम ॥ ६६२ ॥
प्राह मंत्री ततो द्रव्यं न गृह्णामि निरर्थकम् ।
एनं भारं न वोढास्मि वाहीक इव दुर्वहम् ॥ ६६३ ॥

1 P मूर्ध.

एवंविवदतोर्मन्त्रीवणिजोर्दिनमत्यगात् ।
रात्रौ च श्रीकपर्दीशः साक्षाद् वाणिजमभ्यधात् ॥ ६६४ ॥
श्रीयुगादिप्रभो रूपकार्चातुष्टो धनं ह्यदः ।
अहं प्रादर्शयं ते तत्त्वं व्ययस्व निजेच्छया ॥ ६६५ ॥
क्षयं यास्यति नैवैतद्दानभोगैर्घनैरपि ।
अन्यस्येदं हि नाधीनमत्रान्यन्माविचार्यताम् ॥ ६६६ ॥
अत्र चैतदभिज्ञानं त्वत्पत्नी दुर्मुखाप्यलम् ।
अकस्मात्प्रियवाक्याभूद्भक्तिप्रह्वा च विद्धि तत् ॥ ६६७ ॥
इदं समीक्ष्य च प्रातः श्रीनाभेयप्रभुं स च ।
सुवर्णरत्नपुष्पाद्यैस्तद्ध्यानः समपूजयत् ॥ ६६८ ॥
अभ्यर्च्य श्रीकपर्दीशं ततः स्वगृहमागमत् ।
स्वकृतैः सुकृतैर्जन्म पवित्रं व्यतनोत्तरम् ॥ ६६९ ॥
श्रीमद्वाग्भटदेवोऽपि जीर्णोद्धारमकारयत् ।
सदेवकुलिकस्यास्य प्रासादस्यातिभक्तितः ॥ ६७० ॥
घनद्रव्यव्ययाच्चिंतावशादक्षेपतस्तदा ।
पर्यपूर्यत ककुभाश्चारुरोह मुदा सह ॥ ६७१ ॥
शिखींदुरविवर्षे च १२१३ ध्वजारोपे व्यधापयत् ।
प्रतिमां सप्रतिष्ठां स श्रीहेमचन्द्रसूरिभिः ॥ ६७२ ॥
इतश्च स्वर्विमानश्रीस्ततः प्रभृति विश्रुतः ।
श्रीकुमारविहारोयं भव्याहकृपुण्यलक्षणम् ॥ ६७३ ॥
पट्टैकटिकश्रेणिघटनाकोटिटंकितम् ।
बिंबं श्रीपार्श्वनाथस्य निष्पन्नं रम्यतावधिः ॥ ६७४ ॥
प्रातिष्ठिपत् शुभे लग्ने मंत्रीश्रीहेमसर्गिभिः ।
अंतिचिंतामणि वांच्छितातीतवस्तुदम् ॥ ६७५ ॥
प्रासादशुकनासेवं भूपतिर्मौक्षकाभिधम् ।
छिद्रं विमोचयामास विश्वोपकृतितत्परः ॥ ६७६ ॥
पूर्णमासीनिशीथे च रोगिप्रार्थनया ततः ।
प्रकटीकृततच्छिद्रेऽमृतमस्रावि बिंबतः ॥ ६७७ ॥
तच्चक्षुरादिरोगाणामपहारं जनेऽतनोत् ।
उपचक्रे क एवं हि नृपतिः सर्वतोमुखम् ॥ ६७८ ॥
प्रासादैः सप्तहस्तैश्च यथावर्णैर्महीपतिः ।
द्वात्रिंशतं विहाराणां साराणां निरमापयत् ॥ ६७९ ॥
द्वौ शुभ्रौ श्यामलौ द्वौ च द्वौ रक्तोत्पलवर्णकौ ।
द्वौ नीलौ षोडशाथस्युः प्रासादाः कनकप्रभाः ॥ ६८० ॥

---

१ P इति° २ H नाशेव.

चतुर्विंशतिचैत्येषु श्रीमंतो ऋषभादयः ।
सीमंधराद्याश्चत्वारश्चतुर्षु निलयेषु च ॥ ६८१ ॥
श्रीरोहिणिश्च समवसरणं प्रभुपादुकाः ।
अशोकविटपी चैवं द्वात्रिंशत् स्थापितास्तदा ॥ ६८२ ॥
द्वात्रिंशतः पुरुषाणामनृणोस्मीति गर्भितम् ।
व्यजिज्ञपत् प्रभोर्भूपं पूर्ववाक्यानुसारतः ॥ ६८३ ॥
सपंचविंशतिशतांगुलमानो जिनेश्वरः ।
श्रीमत्तिहुणपालाख्ये पंचविंशतिहस्तके ॥ ६८४ ॥
विहारे स्थाप्यत श्रीमान्नेमिनाथोऽपरैरपि ।
समस्तदेशस्थानेषु जैनचैत्यानचीकरत् ॥ ६८५ ॥ युग्मम्
क्षणे धर्म्मोपदेशस्य सप्तव्यसनवर्णनम् ।
घनदौर्गत्यदुर्योनिभवभ्रमणकारणम् ॥ ६८६ ॥
उपादिक्षत् प्रभू राज्ञे स्वदेशेसौ न्यषेधयत् ।
अचीकरदमारिं च पटहोद्घोषपूर्वकम् ॥ ६८७ ॥
पुरादेशभ्रमिस्थेन राज्ञा मृतवणिक्प्रिया ।
सपादलक्ष[1] प्रेक्षिष्ट खेदिता राजपूरुषैः ॥ ६८८ ॥
तदा निषेधं जग्राह तस्या एवानुकंपया ।
निर्वीरास्तेन नो कार्यं राज्यं चेन्मे भविष्यति ॥ ६८९ ॥
अधुनात्र मृते क्वापि व्यवहारिणि विश्रुते ।
अपुत्रे तद्धनं कांतानीयतास्याधिकारिभिः ॥ ६९० ॥
स्वामी पप्रच्छ तान्कस्य विपुत्रश्रीर्भवेदियम् ।
तेऽवदन् रूढिरेषास्ति तत्पुत्रस्य नृपस्य वा ॥ ६९१ ॥
स्मित्वाह भूप पूर्वेषां राज्ञामेषा विवेकधीः ।
यत्कौटिल्यं विना वाच्या दोषा निजगुरोरपि ॥ ६९२ ॥
अशाश्वतश्रियः सर्वाधीनाथा हेतवे नृपाः ।
उत्तमाधममध्यानां पुत्रतामनुयांति यत् ॥ ६९३ ॥
तस्मान्नाहं भविष्यामि विश्वलोकस्य नंदनः ।
विश्वस्यानंदनो भावी निर्वीराधन उज्झते ॥ ६९४ ॥
मृतभर्तृसुताद्रव्यमित्यौज्झद्भूपतिः सुधीः ।
अमुक्तं नलरामाद्यैरपि प्राक्कालराजभिः ॥ ६९५ ॥
प्रभुर्निजोपदेशानां सत्यत्वात्परितोषवान् ।
भूपवृत्तलसद्वृत्तिस्थेम्ने वृत्तमुदाहरन् ॥ ६९६ ॥
तद्यथा–नयन्मुक्तं पूर्वैरघुनयु(हु)पनाभागभरत–
प्रभृत्युर्वीनाथैः कृतयुगकृतोत्पत्तिभिरपि ।

---

१ P रास्वेन, तिशराखेम कार्य…स्न्मे० २ H भत्र्य०, ३ P घुप.

विमुंचन् संतोषात्तदपि रुदती वित्तमधुना-
कुमारक्ष्मापाल त्वमसि महतां मस्तकमणिः ॥ ६९७ ॥
एवं सांतःपुरो राजा प्रत्याख्याननिरन्तरम् ।
राज्यं बभार देवेन्द्र इव स्फीतं विकंटकम् ॥ ६९८ ॥
अन्येद्युर्जैनधर्मस्थं भूपालं प्रणिधिव्रजैः ।
वलहीनं द्विधा ज्ञात्वा कल्याणकटकाधिपः ॥ ६९९ ॥
भूपोऽभ्यमित्रयन्नायात्प्रयाणं बलकोटिभिः ।
कुमारपालस्तज्ज्ञात्वा चारैश्चिंतामवाप च ॥ ७०० ॥
विज्ञप्तं च प्रभूणां तत् प्रभोर्जैनस्य मे किमु ।
अस्मात्पराभवो भावी प्राप्तशासनलाघवः ॥ ७०१ ॥
प्रभुराह महाराज त्वां श्रीशासनदेवताः ।
पांति जानाति लग्नस्तत् सप्तमे वासरे भवान् ॥ ७०२ ॥
श्रुत्वेति सचमत्कारं ययौ भूपः स्वमन्दिरम् ।
अध्यायद्रजनौ सूरिर्विधिना परमाक्षरम् ॥ ७०३ ॥
तदधिष्ठायकस्तस्यादेशं साक्षाद्ददौ तदा ।
भाग्यात्कुमारपालस्य शत्रुरस्तंगतोद्यमः ॥ ७०४ ॥
सप्तमे वासरे चारैररिमृत्योः स वर्द्धितः ।
नृपोऽवददहो ज्ञानं मद्गुरोर्नापरत्र तत् ॥ ७०५ ॥
अन्यदालिख्यमाने च स्वगुरुग्रंथसंचये ।
प्राग्रीत्या शास्त्रविस्तारविधये निधये धियाम् ॥ ७०६ ॥
ताडपत्रत्रुटिर्जज्ञे शालभेभ्यो दवेनच(?) ।
देशांतरादनायातैस्तैश्चिंता भूपतेरभूत् ॥ ७०७ ॥
मद्गुरोः करणे शक्तिर्लेखनेऽपि न मे पुनः ।
शास्त्राणां व्रीडिता अद्य ततस्ते पूर्वजामयः ॥ ७०८ ॥
गत्वारामे निजे तालजाले स्थित्वास्य पूजनम् ।
गंधद्रव्यैर्व्यधाद्धूपः सुगंधकुसुमैस्तथा ॥ ७०९ ॥
उवाच प्रवणराज त्वं पूज्यो ज्ञानोपकारतः ।
सर्वदर्शनिशास्त्राणामाधारस्त्वं दलैः फलैः ॥ ७१० ॥
पुस्तकावस्थितौ चेन्मे भाग्यं जागर्ति निर्भरम् ।
तदा भवंतु श्रीतालाः सर्वेमी तालभूरुहः ॥ ७११ ॥
इत्युक्त्वा ग्रंथितं भुक्त्वा माणिक्यैः स्वर्णनिर्मितम् ।
ग्रैवेयकं तरोःस्कंधे न्यवेशयदशंकधीः ॥ ७१२ ॥
व्यावृत्य सौधमूर्द्धानमधिनसौ नराधिपः ।
प्रातः प्रावर्द्धयंस्ते चारामपालाः प्रभुं मुदा ॥ ७१३ ॥

१ P द्विना. २ P फलैः फलैः.

सर्वे श्रीताडतां जग्मुः स्वामिन्नत्र नलद्रुमाः ।
यथेच्छं लेखकैः शास्त्रसमूहो लिख्यतां ततः ॥ ७१४ ॥
वस्त्राभरणभोज्यादि तेषां सत्पारितोषिकम् ।
ददावदैन्यदं दानमनादीनवचेतनः ॥ ७१५ ॥
ततः प्रववृते पुस्तकानां लेख्यविधिस्तदा ।
भूपालयशसा भाग्यसंघात इव संगतः ॥ ७१६ ॥
राजा सांतःपुरोगे हि व्रतं विप्रदनिंदितम् ।
सम्यग्बभार साम्राज्यं स चक्री च त्रयोदश ॥ ७१७ ॥
अन्यदा भूपतिं श्रीमदजितस्वामिसंस्तवम् ।
कुर्वंस्तं प्राग् रिपुच्छेदसंकल्पपरिपूरितः ॥ ७१८ ॥
तत्प्रासादविधानेच्छं प्रभुरादिक्षत स्फुटम् ।
गिरौ तारंगनागाख्येऽनेकसिद्धोन्नतस्थितौ ॥ ७१९ ॥
विहार उचितः श्रीमन्नक्षय्यस्थानवैभवात् ।
शत्रुंजयापरामूर्तिर्गिरिरेषोपि मृश्यताम् ॥ ७२० ॥
चतुर्विंशतिहस्तोच्चप्रमाणं मंदिरं ततः ।
बिंबं चैकोत्तरशतांगुलं तस्य न्यधापयत् ॥ ७२१ ॥
अद्यापि त्रिदशव्रातनरेन्द्रस्तुतिशोभितः ।
आस्ते संघजनैर्दृश्यः प्रासादो गिरिशेखरः ॥ ७२२ ॥
आसीदुदयनस्यापि द्वितीयो नंदनाग्रणीः ।
अंबडाभिदया श्रीमानमानवपराक्रमः ॥ ७२३ ॥
श्रीमत्कुमारपालस्यादेशतो नृपतेरसौ ।
कुंकणाधिपतेर्मल्लिकार्जुनस्याच्छिनच्छिरः ॥ ७२४ ॥
लाटमंडलमंमेरी सहस्रनवकं तथा ।
कुंकणानंद पट्टं च राष्ट्रं पल्लीवनानि च ॥ ७२५ ॥
भुंक्ते देशानिमान् स्वामिप्रसादान्निजविक्रमात् ।
राजसंहार इत्युग्रं सान्वयं विरुदं वहन् ॥ ७२६ ॥ युग्मम् ॥
अथ श्रीभृगुकच्छेसौ श्रीसुव्रतजिनालयम् ।
चिरंतनं काष्ठमयं जर्जरं परिदृष्टवान् ॥ ७२७ ॥
घुणोत्कीर्णजरत्काष्ठपतच्चूर्णास्तृतावनिः ।
श्लथायःकीलकः भ्रश्यत्पट्टकच्छाद्यकावृतम् (?) ॥ ७२८ ॥
अतिवृष्टिगलत्तोयं पतद्भित्तिव्रजं तदा ।
गर्भागारेपि निश्च्योतदाशांतितजिनेश्वरम् ॥ ७२९ ॥ त्रिभिर्विशेषकम् ॥
पूर्वप्रासादमुत्कील्य स्वस्थानस्थं प्रभुं ततः ।
प्रक्रांतजीर्णोद्धारश्च गर्तापूरमचीखनत् ॥ ७३० ॥

---

१ P °रंग०.

अत्रांतरे स्थले कस्मिंश्चिदस्मिन् योगिनीगणः ।
कार्त्तिकास्यक्षणप्रेक्षाकल्पयन् श्रीमदुत्सवम् ॥ ७३१ ॥
सर्वांगीणत्रपाधानांतस्मात् प्रभुर्निष्कलंकक ।
अक्षुब्धो विलीनांगः स्वयं श्रीयंत्रनगाम् ॥ ७३२ ॥
पत्रावर्तनिनिस्तारागता पत्रावर्ता मुनिं ।
उपादिशदिदं माते शृणु सत्यं वचः सुत ॥ ७३३ ॥
महापीठमिदं दिव्ययोगिनीसंगसंगतेः ।
तद्रक्ष्यं मोचयेत्यान्यो हिमवंद्गुरुं विना ॥ ७३४ ॥
ततः प्रातः प्रभोर्गत्वाप्रागणाद्यादिनाश्रयात् ।
वेगात्तेपि प्रभुं दृष्ट्वा यथादेशं व्यजिज्ञपन् ॥ ७३५ ॥
श्रुते तत्र भातुंरेत्य शरणं तापरस्तुतः ।
श्रीनिलयं सपुत्राया मम देहि प्रभो ततः ॥ ७३६ ॥
श्रुत्वेति गुरुणा सोयं यथेष्टसमन्वितः ।
आयर्या पादचारेण मार्गेणैत्यमंत्रिणः ॥ ७३७ ॥
गणी गणितनिष्णातश्रेष्ठाभिक्षित्य तस्य च ।
चित्ते विचिन्त्य तन्मातुर्ददौ शिक्षामलंदर्धीः ॥ ७३८ ॥
नरं निशीथे विश्वासपात्रं प्रेष्यदंतिके ।
चपलाश्वचलिच्चयग्रकरं सौगंधसंगतम् ॥ ७३९ ॥
प्रतोलिकानामदेशे दापिते निशि सूरयः ।
दुर्गाद्बहिः प्रचेलुस्ते गणिना सह तेन च ॥ ७४० ॥
उद्घाट्य गोपुरद्वारं तत्र निर्गत्य ते ततः ।
गच्छंतो ददृशुर्मार्गे कलविंककदंबकम् ॥ ७४१ ॥
चगश्चगिति शब्दाढ्ये तन्मुखे वलिमक्षिपत् ।
यदाश्चंद्रात्ततो दृष्टनष्टं तत्तत्क्षणादभूत् ॥ ७४२ ॥
गच्छंति कियदध्वानं तावत्ते कपिपेटकम् ।
अद्राक्षुर्मक्षु तत्रापि सपर्यक्षिपदक्षतान् ॥ ७४३ ॥
असंतुलं? तदाभूत्तत् ततोप्यग्रे च ते ययुः ।
श्रीसैंधवीसुरावेश्मपार्श्वं कातरभीषणम् ॥ ७४४ ॥
अग्रे व्यलोकयन् यावत्तावन्मार्जारमंडलम् ।
अविच्छिन्नमहारौद्रशब्दभीषितवालकम् ॥ ७४५ ॥
पुष्पाणि तत्र रक्तानि चिक्षेपाथ ननाश तत् ।
तोरणाय महादेव्याः प्रभुरुर्द्वंदमःस्थितः ॥ ७४६ ॥

---

१ P प्रभोरेखा. २ D श्वेहयग०. ३ H पलान्नचलिष्यग्र. ४ P असंतु०
५ H ऊर्द्वः.

अनाकुलं गणीं प्रोचे हेमसूरिस्तवांगणे।
आयासीदतिदूरेण पादचारेण कष्टभूः ॥ ७४७ ॥
अभ्युत्थानादिका पूजा कर्तुं समुचिता तव।
यषोर्चितो यतः सर्वैः पीठैर्जालंधरादिभिः ॥ ७४८ ॥
एवं वदत एवास्य चलच्चंचलकुंडला।
पुरं श्रीसैंधवा देव्यस्याद्योजितकरद्वये॥ ७४९ ॥
आतिथ्यमतिथीनां नो विधेहि विबुधेश्वरि।
अंबडं मोचय स्वीयपरिवाराद्बलादपि ॥ ७५० ॥
श्रुत्वेति सद्गुरोर्वाक्यं प्राह सा परमर्थ्यताम्।
सहस्रधाविभक्तश्च स परं योगिनीगणैः ॥ ७५१ ॥
गण्यथाह महाक्षेपादित्थमप्यस्तु चेत्तव।
व्यावृत्य निजके स्थाने उपवेष्टुं समर्थता ॥ ७५२ ॥
प्रभोः श्रीहेमचंद्रस्य दीयतां मानमद्भुतम्।
ततो यथोभयोरूपमवतिष्ठेत मंडले ॥ ७५३ ॥
इत्याकर्ण्य भयोद्भ्रान्ता देवी शब्दं दधौ गुरुम्।
यदाहूतः सुरीवर्गोऽमुंचदह्नाय मंत्रिणम् ॥ ७५४ ॥
प्रदापयामि वाचो वः किं देव्येत्युदिते सति।
ब्रह्मादिवाग्भिरास्था का परब्रह्मनिधेः प्रभोः ॥ ७५५ ॥
भवत्याः प्राभृतं किंचिद्विधास्याम पुनः प्रगे।
विसृज्येति सुरीस्थाने स्वं ययौ प्रभुरप्यतः ॥ ७५६ ॥
श्रीमदंबडमंत्रींदो निद्रा रात्रौ तदाययौ।
प्रातः साहस्रिकं भोगं स श्रीदेव्या व्यधापयत् ॥ ७५७ ॥
इत्थं श्रीसैंधवीदेव्याः प्रभुभिर्मोचितोंबडः।
श्रीमत्सुव्रतचैत्यस्य जीर्णोद्धारमकारयत् ॥ ७५८ ॥
हस्ताष्टादशकं चैत्यमप्रतिच्छंदघाटभृत्।
अनेकदेववेश्माढ्यं बभौ हेमाद्रिकूटवत् ॥ ७५९ ॥
ध्वजारोपोत्सवं तत्राकारयत्सचिवाग्रणीः।
तं समीक्ष्याशिषं प्रादाद्गुरुस्तुष्टिभरैर्गुरुः ॥ ७६० ॥
तथाहि–किं कृतेन न यत्र त्वं यत्र त्वं तत्र कः कलिः।
कलौचेद्भवतो जन्म कलिरस्तु कृतेन किम् ॥ ७६१ ॥
तज्जयाचंद्रसूर्यं त्वं निजवंश्यमनोरथान्।
पूरयन् चूरयन्नंतर्बहिःशात्रवमंडलम् ॥ ७६२ ॥
तमापृच्छ्यथ समागत्य स्वस्थाने भूपतिं प्रभुः।
प्रधानायुःप्रदानेन विदधे मेदुरं मुदा ॥ ७६३ ॥

---

1 H तद्यथाच०.

दुस्साधसाधिका यस्य गुरोरीदृगमानुषी ।
शक्तिस्तत्कृतपुण्यत्वं मय्येवेति नृपोऽवदत् ॥ ७६४ ॥
अन्येद्युरुपदिष्टे च सम्यक् किं संघसाक्षिकम् ।
राजा गृहीते गुरुभिर्गाथामेनां स जल्पितः ॥ ७६५ ॥
तथाहि–तुह्माणकिंकरोहं तुह्मे नाहा भवो यदि गयस्स ।
सयलधणाइंसमेउमइतुह्म समप्पिउअप्पा ॥ ७६६ ॥
व्याख्यातायामथैतस्यामर्थं सत्यापयन्नृपः ।
राज्यं समर्पयामास जगद्गुरवस्ततः ॥ ७६७ ॥
निस्संगानां निरीहाणां नार्थो राज्येन नो नृप ।
आपिवाम कथं भोगान्वांताननुचितं ह्यदः ॥ ७६८ ॥
एवं विवादसंबोधे दानाग्रहणकारणे ।
गुरुभूपालयोर्मैत्री वैशिष्ट्यमकरोदिदम् ॥ ७६९ ॥
सर्वाणि राजकार्याणि कार्याण्यश्रावितानि नः ।
अतः परं प्रभो राज्ये भूयादनुमतं ह्यदः ॥ ७७० ॥
प्रतिपन्ने ततः श्राद्धव्रतसद्ध्यानहेतवे ।
भूपस्याध्यातमतत्वार्थावगमाय च स प्रभुः ॥ ७७१ ॥
योगशास्त्रं सुशास्त्राणां शिरोरत्नसमं व्यधात् ।
अध्याप्य तं स्वयंचक्रे तत्पुरश्च व्यचारयत् ॥ ७७२ ॥ युग्मम् ॥
जग्राह नियमं राजा दर्शनी जिनदर्शने ।
यादृशस्तादृशो वामे वेद्यो मुद्रेव भूपतेः ॥ ७७३ ॥
चतुरंगचमूमध्ये राजा राजाध्वना व्रजन् ।
गजारूढोऽन्यदाद्राक्षीज्जैनर्षिं वेश्यया समम् ॥ ७७४ ॥
क्षुरलूनशिरःकेशं सितवैकक्षकावृतम् ।
कस्तीरास्तीर्णसध्यानपन्नद्धारूढपादकम् ॥ ७७५ ॥
अतुल्यफणभृद्वल्लीदलवीटकहस्तकम् ।
आलंबितभुजादंडमंसेस्यान्मंदिराद्बहिः॥७७६॥त्रिभिर्विशेषकम्॥
कुंभयोर्न्यस्य मूर्द्धानं तं ननाम महीपतिः ।
पृष्ठासनस्थितश्चक्रे नड्डूलनृपतिः स्मितम् ॥ ७७७ ॥
ददर्श वाग्भटामात्यस्तत्प्रभोश्च न्यवेदयत् ।
ततो राज्ञःपुरः पूज्या इत्थं धर्मकथां व्यधुः ॥ ७७८ ॥
तथहि–पासत्थाइ वंदमाणस्सनेवकित्तीननिज्जरोहोइ ।
कायकिलेसे एमेवकुणइ तहकम्मबंधवा ॥ ७७९ ॥

१ H वामः कथ भोगानवातानतुचित०. २ H सबोधेदाताग्रहणकरणे.
३ P व्यक्त. ४ H निज. ५ P वांघो. ६ P मशे. ७ P वदणस्सने.

व्यमृशद्भूपतिः केनाप्यद्य वृत्तं निवेदितम् ।
व्यजिज्ञपच्च पूज्यानां शिष्याभिर्निवृतोऽस्म्यहम् ॥ ७८० ॥
इतश्च पृथिवीशक्रनमस्कारमुदीक्ष्य सः ।
दध्यावध्यामचैतन्यं का मय्यस्ति नमस्यता ॥ ७८१ ॥
विध्वस्तवीतरागांस्ते[1] त्यक्तभोगपुनर्ग्रहे ।
अदृश्यास्ये प्रतिज्ञाया भ्रंष्टे[2] दुर्ग्राह्यनामनि ॥ ७८२ ॥ युग्मम् ॥
अमुचद्भुजमस्याश्च चापतुल्यं मनोभुवः ।
कुधिया पेटकं चाथवीटकं व्रतकंटकम् ॥ ७८३ ॥
नरकाध्वनि यानाभे मुमोचायमुपानहौ ।
विरागी स्वाश्रये गच्छदतुच्छं स्वल्पभर्तृकः ॥ ७८४ ॥
पुनर्व्रतं समुच्चार्य गुरूपांते महामनाः ।
संगत्यागादनशनप्रत्याख्यानी बभूव सः ॥ ७८५ ॥
निर्जरैरनेकधाप्युक्तो दृढो नासौ निजाग्रहात् ।
पश्चाद्व्याजुघटे द्रोणीमब्धौ लब्धां हि कस्त्यजेत् ॥ ७८६ ॥
अनशन्याश्रयास्तत्र प्रावर्त्तंत प्रभावनाः ।
वरिवस्यांतपस्यायाः श्रेयोर्थी कः करोति नः ॥ ७८७ ॥
विज्ञप्तेऽधिकृतैस्तत्र भूपो नंतुं तपोनिधिम् ।
अभ्याययौ प्रमोदेन सांतःपुरपरिच्छिदः ॥ ७८८ ॥
यावत्पश्यति तद्वक्त्रं तावद्दृष्टः स एव यः ।
पण्यांगनागृहद्वारे कुवेषोपि नतस्तदा ॥ ७८९ ॥
तद्गुरून् मुनिवर्गं च नत्वा भूपालपुंगवः ।
तत्पादौ प्रणमंस्तेन निषिद्धो भुजधारणात् ॥ ७९० ॥
महाराज गुरुस्त्वं मे भवाब्धेस्तारितस्त्वया ।
तव विश्वेपि वंद्यस्य प्रणामो ह्यतिदुर्जरः ॥ ७९१ ॥
मादृशा भ्रष्टचारित्रा विराधितजिनोक्तयः ।
आराधकाः कथं नु स्युस्फुरन्नरकदोह्वदाः ॥ ७९२ ॥
भवादृशः पृथिव्यां चेन्नाथोपूर्वेपितृप्रभुः ।
न स्याल्लोकद्वयापायसंहर्ता प्राणिभृद्गणे ॥ ७९३ ॥ युग्मम् ॥
अवंद्यं वंद्यमानेन मां निस्तारयितुं त्वया ।
पुपूरे समसंवेगवासनासंगमोचिनी ॥ ७९४ ॥
निर्जैर्गृहस्थैर्यतिभिरेभिर्युक्तोपि जीवितुम् ।
क्लीवो व्रतस्य कष्टानि स सोढा प्रायमासदम्? ॥ ७९५ ॥
उवाच भूपतिर्धीमान् मुनीशः कस्त्वया समः ।
निमित्तादेकतस्त्यक्तसंगः प्रत्येकबुद्धवत् ॥ ७९६ ॥

---

१ P जात्के? २ H प्रतिज्ञयावेष्टे.

तीर्थकृद्दर्शनाधारं प्रणामं मे स्वभावजम् ।
मानयन्नुपकाराय कृतज्ञमुकुटायसे ॥ ७९७ ॥
ममाथ चंद्रनामाभ्राग्नर्जितमप्यप्रतीच्छया ।
अदिच्छन् सुकृतंसं विभागार्हं नमन्यसे ? ॥ ७९८ ॥
उदरंभरिता युक्ता सतां नैतदिति ब्रुवन् ।
तद्वचोवसरादानात्प्रणनाम वलादपि ॥ ७९९ ॥
अथाहानशनी धन्यो देशः पुण्यश्रियः प्रजाः ।
क्षाल्यते यत्र पंकस्त्वद्दर्शनामृतवृष्टिभिः ॥ ८०० ॥
श्रुत्वेत्यानंदसंभेदगद्गदाख्यः सभापतिः ।
प्रभोः श्रीहेमचंद्रस्य गत्वा वृत्तमथावदत् ॥ ८०१ ॥
युष्माभिरुपदिष्टानां नियमानां प्रपालना ।
प्रभो कामदुघैवेयं समस्तहृदभीष्टदा ॥ ८०२ ॥
अवोचन् गुरवः पुण्यदेशोयं तव जाग्रती ।
प्रकाशयति वस्तूनि गुरुभक्त्यार्चिरर्चिता ॥ ८०३ ॥
एवं कृतार्थयन् जन्म सप्तक्षेत्र्यां धनं वपन् ।
चक्रे संप्रतिवज्जैनभवनैर्मंडितां महीम् ॥ ८०४ ॥
श्रीशलाकानृणां वृत्तस्वोपज्ञं प्रभवोन्यदा ।
व्याचख्युर्नृपतेर्धर्मस्थिरीकरणहेतवे ॥ ८०५ ॥
श्रीमहावीरवृत्तं च व्याख्यांतःसूरयोऽन्यदा ।
देवाधिदेवसंबंधं व्याचख्युर्भूपतेः पुरः ॥ ८०६ ॥
यथा प्रभावती देवी भूपालोदयनप्रिया ।
श्रीचेटकावनीपालपुत्री तस्या यथापुरा ॥ ८०७ ॥
वारिधौ व्यंतरः कश्चिद्यानपात्रं महालयम् ।
स्तंभयित्वार्पयत् श्राद्धतस्यार्द्दसंपुटं दृढम् ॥ ८०८ ॥
एनं देवाधिदेवं य उपलक्षयिता प्रभुम् ।
स प्रकाशयिता न्वयं इत्युक्त्वासौ तिरोदधे ॥ ८०९ ॥
पुरे वीतभये यानपात्रे संघटिते यथा ।
अन्यैर्नोद्घाटितं देव्या वीरार्थायाः प्रकाशितम् ॥ ८१० ॥
यथा प्रद्योतराजस्य हस्तं सा प्रतिमा गता ।
दास्या तत् प्रतिबिंबं च मुक्तं पश्चात्पुरे यथा ॥ ८११ ॥
ग्रंथगौरवभीत्या च न तथा वर्णिता कथा ।
श्रीवीरचरिता ग्रेया तस्यां श्रुति सकौतुकं ॥ ८१२ ॥ [illegible]
तां श्रुत्वा भूपतिः कल्पद्रुम्नाभिपुणधीरधीः ।
प्रेष्य वीतभये शून्येऽर्चागमनत्तद्भुयं क्षणात् ॥ ८१३ ॥

---

१ P omits this verse. २ P नास्त !

राजमंदिरमालोक्य भुवोन्तस्तेति हर्षतः ।
देवतावसरस्थानं प्रापुर्बिंबं तथार्हतम् ॥ ८१४ ॥
आनीतं च विभो राजधानीमतिशयोत्सवैः ।
स प्रवेशं दधे तस्य सौधदैवतवेश्मनि ॥ ८१५ ॥
प्रासादः स्फाटिकस्तत्र तद्योग्यः पृथिवीभृता ।
प्रारेभे प्रतिषिद्धश्च प्रभुभिर्भाविवेदिभिः ॥ ८१६ ॥
राजप्रासादमध्ये च नहि देवगृहं भवेत् ।
इत्थमाज्ञामनुल्लंघ्य न्यवर्त्तत ततो नृपः ॥ ८१७ ॥
एकातपत्रतां जैनशासनस्य प्रकाशयन् ।
मिथ्यात्वशैलवज्रं श्रीहेमचंद्रप्रभुर्बभौ ॥ ८१८ ॥
तथालोलांकचैत्यस्याग्रतः क्षेत्राधिपालये ।
अपश्यदामिषापूर्णं शरावं तंडं(दंड)काधिपः ॥ ८१९ ॥
तेन त्रिलोचनस्येव संहर्त्तुरनयस्पृशम् ।
तत्त्रिलोचननाम्नश्च तलारक्षस्य दर्शितम् ॥ ८२० ॥
असंख्यजनसंचारानुपलब्धपदस्ततः ।
अन्वेषयन्नुपायं स लेभे मतिमतांवरः ॥ ८२१ ॥
कुलालवृंदमाकार्य प्रत्येकं तदुदैक्षयत् ।
शरावं घटितं केन पप्रच्छेति कुशाग्रधीः ॥ ८२२ ॥
एकस्तेषामभिज्ञाय व्याहरद् घटितं मया ।
अचीकरच्छतं लक्षोनङ्कूलेशस्थगीधरः ॥ ८२३ ॥
विसृज्य तान्महीशाय तलारक्षो व्यजिज्ञपत् ।
व्याजह्रे तत्क्षणान्नाथ केल्हणं मंडलेश्वरम् ॥ ८२४ ॥
आज्ञाभंगापराधेन देशः श्रीकरणे त्वया ।
उद्ग्रण्यतां स चावादीन्नजाने किमिदं प्रभोः ॥ ८२५ ॥
द्वारावलगकाख्याते स्वगीशचरिते ततः ।
लक्षं विलक्षं हत्वा च तोपं चक्रे प्रभोरसौ ॥ ८२६ ॥
चैत्रमाघाश्वयुग्मासमहेष्वपि सुरीगणः ।
अहिंसया मुदं प्राप गुणे को मत्सरं वहेत् ॥ ८२७ ॥
कर्पूरप्रमुखैर्भोगैर्बलिभिर्मोदकादिभिः ।
तुष्टोसौ मद्यमांसेषु पिच्छिलेषु श्लथादरः ॥ ८२८ ॥
शैवाचार्या अपि तदा मिथ्याधर्मेष्वनादृताः ।
जयंतस्थापनाचार्यमवहन् कृतिकर्मणः ॥ ८२९ ॥
श्रीवीतरागमभ्यर्च्य परमेष्ठिनमस्कृतीः ।
परावर्त्तत धर्मोपि राजार्च्यः[1] क्रियते जनैः ॥ ८३० ॥

१ D) दन्काद्भिः. २ P राजार्च्यः.

चराचरवपुर्भूताभयदानदानेश्वरो
जडाखिलदृगापगा शरणरत्नराशिप्रदः ।
लसन्निजपरागमाप्रकटतत्वपारंगमः
शशांककुलशेखरो जयति हेमचंद्रप्रभुः ॥ ८३१ ॥
व्याकरणं पंचांगं प्रमाणशास्त्रं प्रमाणमीमांसा ।
छंदोलंकृतिचूडामणी च शास्त्रे विभुर्व्यधित ॥ ८३२ ॥
एकार्थानेकार्था देश्या निर्घंट इति च चत्वारः ।
विहिताश्च नामकोशाः भुविकवितानद्युपाध्यायाः ॥ ८३३ ॥
त्र्युत्तरषष्टिशलाका नरेशवृत्तं गृहव्रतविचारे ।
अध्यात्मयोगशास्त्रं विदधे जगदुपकृतिविधित्सुः ॥ ८३४ ॥
लक्षणसाहित्यगुणं विदधे च द्याश्रयं महाकाव्यम् ।
चक्रे विंशतिमुच्चैः सवीतरागस्तवानां च ॥ ८३५ ॥
इति तद्विहितग्रंथसंख्यैव नहि विद्यते ।
नामापि न विद्मस्तेषां मादृशा मंदमेधसः ॥ ८३६ ॥
व्याख्यायामन्यदा श्रीमच्छत्रुंजयगिरेस्तवम् ।
श्रीमद्रैवतकस्यापि प्रभुराह नृपाग्रतः ॥ ८३७ ॥
उपदेशप्रदीपेन विध्वस्तांतस्तमा नृपः ।
तीर्थयात्रां ततश्चक्रे शशाभोज्वलकीर्त्तिभृत् ॥ ८३८ ॥
प्रयाणैः पंचगव्यूतैः पादचारेण सोऽन्यदा ।
अनुपानत्कगुरुणा प्रापोपचलभिद्गुतम् ॥ ८३९ ॥
तत्रास्ति स्थाप ईर्ष्यालुरिति भूमिधरद्वयम् ।
तदधो गुरवः प्रीताः प्रातरावश्यकं दधुः ॥ ८४० ॥
भूपतिस्तत्र चागत्य वासनामोदमेदुरः ।
प्रभुत्वान्निर्जितात्मीयगुरुंनिष्ठविशिष्टधीः ॥ ८४१ ॥
प्रणनाम प्रभोः पादौ प्रक्रांततः प्रयाणके ।
प्रासादौ कारयामास भूपोऽत्र गुरुभक्तितः ॥ ८४२ ॥
श्रीनाभेयत्रयोविंशजिनबिंबे विधाप्य च ।
प्रतिष्ठाप्य प्रभोः पार्श्वादस्थापयत चात्र सः ॥ ८४३ ॥
विमलाद्रौ जिनाधीशं नमश्चक्रेतिभक्तितः ।
निजानुमानतोऽभ्यर्च्य ययौ रैवतकाचलम् ॥ ८४४ ॥
दुरारोहं गुरुं पद्याभावाद्दृष्ट्वा सवाग्भटम् ।
मंत्रिणं तद् विधानाय समादिक्षत्स तां दधौ ॥ ८४५ ॥

---

१ H चरण. २ H लसति॰. ३ P व्यभुर. ४ P मुदरः.
५ H पुरुनि॰.

तत्र छत्रशिलाशंकावशाच्छैलाधिरोहणम् ।
राज्ञोविज्ञाय तदधो भूस्थः श्रीनेमिमार्चयत् ॥ ८४६ ॥
ततो व्यावृत्य संप्राप नगरं स्वं नराधिपः ।
जैनयात्रोत्सवं कृत्वा मेने स्वं पुण्यपूरितम् ॥ ८४७ ॥
शरवेदेश्वरे ११४५ वर्षे कार्त्तिके पूर्णिमानिशि ।
जन्माभवत्प्रभोर्व्योमवाणशंभौ ११५० व्रतं तथा ॥ ८४८ ॥
रसषट्केश्वरे सूरिप्रतिष्ठा समजायत ।
नंदद्वयरवौ वर्षे १२२९ ऽवसानमभवत्प्रभोः ॥ ८४९ ॥

इत्थं श्रीजिन शासनाभ्रतरणेः श्रीहेमचंद्रप्रभो-
रज्ञानांधतमःप्रवाहहरणं मात्रादृशां मादृशाम् ।
विद्यापंकजिनीविकाशविदितं राज्ञोतिवृद्ध्यै स्फुर-
द्वृत्तं विश्वविबोधनाय भवताद्दुःकर्मभेदाय च ॥ ८५० ॥
श्रीचंद्रप्रभसूरिपट्टसरसीहंसप्रभः श्रीप्रभा-
चंद्रः सूरिरनेन चेतसि कृते श्रीरामलक्ष्मीभुवा ।
श्रीपूर्वर्षिचरित्ररोहणगिरौ श्रीहेमचंद्रप्रथा-
श्रीप्रद्युम्नमुनींदुना विशदितः शृंगो द्विकद्विप्रमः ॥ ८५१ ॥

इति श्रीहेमचंद्रप्रबंधः ॥ ग्रं० ८७१ ॥ छ ॥ स्वस्ति ॥

---

भास्वत्पात्रं कविमुनिबुधभ्राजितो राजसेव्यः
सर्वेष्टार्थप्रदगुरुलसत्कल्पवृक्षा(क्ष)त्वदात्(ता) ।
श्रीजैनाद्रिश्रियमुवि शिरा सिद्धिमद्भद्रशालो
गच्छश्चांद्रा(द्रः)सुरगिरितुलामश्नुवान(नो)सम(मो)स्तिः॥१॥
प्रद्युम्नसूरिरिति तत्र पुरा बभूव
मंदारपादपतुलाकलितोरुशाखः ।
यत्संगमामृतरसैर्बहवः सुधर्मा-
धीशा भवंति सुधियः सुमनोभिरामाः ॥ २ ॥
अल्लूसभायां विजिते दिगंबरे तदीयपक्षः कलिकोशरक्षकः ।
दातुं प्रभोरेकपदं समानयत्तमेकपट्टं जगृहे सुधीषु यः ॥ ३ ॥
शिष्योऽस्याभयदेवसूरिरभवज्जाड्यांधकारं हरन्
गोभिर्भास्करवत्परां विरचयन् भव्याम्बवर्गेच्छदम् ।
ग्रंथो वादमहार्णवोऽस्य विदितः प्रौढप्रमेयोर्मि(र्मी)त्
दत्तेर्थ(?)जिनशासनप्रवहणं सांयात्रिकाणां ध्रुवम् ॥ ४ ॥

त्रिभुवनगिरिस्वामी श्रीमान्स कर्दमभूपति-
स्तदुपसमभूत् शिष्यः श्रीमद्धनेश्वरसंज्ञया ।
अजनि सुगुरुस्तत्पद्येऽस्मात् प्रभृत्यवनिस्तुतः
तदनु विदितो विश्वे गच्छः सराजपदोत्तरः ॥ ५ ॥
सुगुरुरजितसिंहस्तत्पदांभोजभानुं
समजनि जनितश्रीर्भव्यपंकेरुहाणाम् ।
वचनकरचितानां यस्य देदीप्यमानं
जडगतमपसोढुं दुर्दशो न क्षमंते ॥ ६ ॥
श्रीवर्द्धमानसुगुरुः ककोंन्नतधामसंगतस्तदनु ।
मतसंवचारिशरणः समजनलग्नदोषहरः ॥ ७ ॥
तदाद(द्रि)भूमिरुहयोपतपात्यपश्रीः
श्रीशालिभद्र इति पदं प्रपेदे ।
धर्म्मोपदेशजलवाहलवैर्यदीयः
प्राप्नोत्तति(तो) जगति कीर्तिलताविताना ॥ ८ ॥
तदंह्रिसरसीहंसः सूरिः श्रीचंद्र इत्यभूत् ।
विवेचकः शुचिः सद्वीस्तद्धाचानुपजीविनाम् ॥ ९ ॥
अर्थप्रकाशकं शास्त्रचक्षुषामसृतांजनं ।
प्येतसा संसार साद्ध्यायन्मतिः पुत्तोगरंगभृत्? ॥ १० ॥
सूरिश्रीभरतेश्वरस्तदनु च प्रामाणिकग्रामणी-
र्येन्नामस्मृतितोऽप्यघं हरति श्री श्रीधर्म्मघोषप्रभुः ।
कल्याणावलिकंदलालिजलदः श्रीसर्वदेवो गुरु-
श्चत्वारः किल शीलभद्रसुगुरोः शिष्या नरेंद्रार्चिताः ॥ ११ ॥
श्रीपात्रं सजिनेश्वरप्रभुरभूत्संघांबुधौ चंद्रमाः
सूरिश्रीजिनदत्त इत्युदितधीरुन्निद्रविद्याद्युतिः ।
चारित्रामलशैलनंदनवनं श्रीपद्मदेवप्रभुः
श्रीश्रीचंद्रमुनीश्वरस्य जयितः शिष्या अभूवन्नमी ॥ १२ ॥
श्रीसंघरोहणधराधररत्तं(रत्नं)
श्रीपूर्णभद्रगुरुरभ्युदितः पदेस्य ।
यत्संनिधिस्थितिभृतो भुवि भव्यसार्था
वस्तूनि···विषयानि विलोकय(यं)ति ॥ १३ ॥
तत्पद्योदयपर्वतामृतरुचिः प्राणिश्चकोरव्रजम्
श्रीचंद्रप्रभसूरिरद्भुतमतिज्योत्स्नानिधानं यशौ ।

आश्चर्यं न कलंकधामतमसानुल्लंघ्य मूर्तिर्मेवम्।
पाथोधिं क्षपुले विलसकमलोल्लासी ? न दोषाकरः ॥ १४ ॥
आचार्यः श्रीप्रभाचंद्रस्तत्पादांभोजषट्पदः।
चित्रं यः सुमनस्थोपि सदानवगु(रु)क्रमः ॥ १५ ॥
श्री हेमचंद्रसूरीणामनुध्यानप्रवृत्तितः।
पर्वणः परिशिष्टस्याद्ये ? सपुटवासनः ॥ १६ ॥
श्रीवज्रानुप्रमप्रकटमुनिपतिपृष्ठवृत्तानि ? तत्तत्
ग्रंथेभ्यः कानिचिच्च श्रुतधरमुखतः कानिचित् संकलय्य।
दुष्प्रापत्वादमीषां विशकलिततयैकत्र चित्रावदातं
जिज्ञासैकाग्रहाणामधिगतविधयेभ्युच्चयं स प्रतेने ॥ १७ ॥
त्रिभिर्विशेषकम्।
अत्र क्षूणं हि यत्किञ्चित्संप्रदायविभेदतः।
मयि प्रसादमाधाय तच्छोधयत कोविदाः ॥ १८ ॥
यत –आरार्थितमया शून्यं यथा तुष्टं स्व(म)तमे(भे)दात् ?।
निजोक्तैः स्थापितं तत्प्राक् कथाकंथीकृतास्ततः ॥ १९ ॥
रोटारंभ्रगसिद्धकिंनरगणानुल्लंघ्य शृंगस्थिति-
स्तुंगत्तोदितवृत्तशोवधिरति प्रौढार्थसंपत्तिकृत्।
पूरन्नप्रभया तिरस्कृतपरज्योतिःप्रकाशोदया
श्रीपूर्वर्षिचरित्ररोहणगिरौ स्यादीरर्वीदुन्नुवः ? ॥ २० ॥
श्रीप्रद्युम्नगुरोर्हिमांशुविशदो वोधः शुचेः संगतो
मिश्रो(चारु)रुचाममप्रतिपदस्फूर्जद्यशःपूरुषः।
ज्ञानश्रीपुरुतः पदाघटनविंवद्धयोट्टंकनात् ?
जातो ग्रंथमिषेणसाक्षरशुचिर्द्रम्यश्चिरं नंदतु ? ॥ २१ ॥
वेदानलशिखिशशिधरवर्षे चैत्रस्य धवलसप्तम्याम्।
शुक्रे पुनर्वसुदिने संपूर्णं पूर्वर्षिचरितम् ॥ २२ ॥
शिक्षाप्रसादवशतः स्वगुरोर्मयैन-
मायासमत्रदधता यदवापि पुण्यम्।
व्याख्यानसक्तमनसः श्रवणादराश्च
श्रेयस्तु संगममनुत्तरमामवाप्नुव(माप्नुवं)तु ॥ २३ ॥

ग्रंथस्य मानमस्य प्रत्यक्षरगणनया सुनिर्णीतम् ।
पंचसहस्रा सप्त च शतानि चतुरधिकसप्ततियुतानि ॥ २४ ॥

प्रशस्ति श्लोक १८० । उभयं ष ०८० । श्रीः श्री०

( इति प्रभावकचरितं समाप्तम् )